श्रीशः शरणम् ।

72

# कुण्डार्कः ।

व्याख्याषट्कसमुल्लसितः
परिशिष्टादिसहितश्च ।

मूल्यं २ रूप्यकद्वयम् ।



॥ श्रीशः शरणम् ॥

महामीमांसकशिरोरत्नभट्टशंकरसूरिविरचितः

# कुण्डार्कः ।

श्रीमन्नासिकस्थवारेइत्युपनाम्ना 'वैदिकतिलक' श्रीमद्-
णणाशास्त्रिणः सूनुना काव्यतीर्थमीमांसक-
श्रीधरशर्मणा

मरीचिका, दीधिति, पद्मिनी, नौका, मिताक्षराख्य-
प्राच्यव्याख्यापंचकेन स्वकृतया 'सुप्रभाख्य'
व्याख्यया तथा स्वकृत 'विषमपदालंक्रियाख्य'
टिप्पणीपरिष्कृत—श्रीमल्लेलेइत्युपाह्व धुंडी-
राज दीक्षितकृत 'कर्म-मान' निर्णयाभ्यां
च समलंकृत्य संशोध्य च संस्कृतः ।

स च

मुम्बय्यां—पांडुरंग जावजी इत्येतैः
संपाद्य
स्वीये निर्णयसागरमुद्रणयन्त्रालये मुद्रयित्वा प्रकाशितः ।




प्रथमावृत्तिः

शके १८५५. सन १९३४.

मूल्यं २ रूप्यकद्वयम् ।

॥ श्रीशः शरणम् ॥

# मंडपसहितो नवपंचैककुण्डीपट्टः ।*

(कुण्डार्कसमनुसारी.)






*अत्रेयं स्पष्टप्रतिपत्तिः—अयमेव नवकुण्डीपट्टो विदिक्स्थकुण्डानि वर्जयित्वा ईशान्यामष्टास्रस्थाने चतुरस्रे कृते पंचकुण्डीप्रदर्शकः । तथा चतुरस्रं पद्मं वृत्तं वा नवकुण्डानामन्यतमं वा किंचनैकमेव कुण्डं मध्ये प्रतीच्यामुदीच्यामीशान्यां वा कृतं चेदेककुण्डीप्रदर्शको भवति ॥ इति ॥

॥ श्रीशः शरणम् ॥

# उपोद्घातः

गां दुदोह स यज्ञाय सस्याय मघवा दिवं ।
उभौ विनिमयेनैतद्दधतुर्भुवनद्वयं ॥ १ ॥

इति **कालीदासीय**वचोऽनुसारेण हि पूर्वं सर्वत्र भूतले स्वस्वकर्तव्यजागरूकाः प्रजानुरञ्जका राजानो महाराजाः, मुक्तहस्ताः परमोदारा वैश्याः, परोपकारनिरता ब्रह्मनिष्ठा ब्राह्मणाश्च ऐहिकामुष्मिकसुखसंपत्तिर्यज्ञैरेवोपलेभिरे । तथा लोकस्थितिमपि यज्ञेषु भूयो भूयो हविःप्रदानेन देवान्संतोष्य तेभ्यः प्रसादरूपं यथाप्रयोजनं पर्जन्यं समवाप्य साधुतरां दधिरे । यतो लोकानां जीवातुभूतमन्नं पर्जन्याधीनं पर्जन्यश्च देवाधीनः । देवास्त्वेवं भाषंते यद्वयं क्रतुभुजोऽतः पूर्वं क्रत्वनुष्ठानेनास्मान्पोषयथानंतरं युष्मान्पोषयामः । **तदुक्तं वाजसनेयश्रुतौ** तृतीयेऽध्याये चातुर्मास्ययागे यजमानेंद्रसंवादे "देहि मे ददामि ते नि मे धेहि नि ते दधे । निहारं च हरासि मे निहारं नि हराणि ते" इति । **इदानींतनास्तु**-अधर्ममेव धर्मं मन्वानाः संतो धर्म्ययागाद्यनुष्ठानविमुखाः समभवन् । नहि केवलं विमुखाः किंतु धर्मद्रुमं समूलमुत्पाट्य तदीयैरेव शुष्कैः काष्ठैरग्निं प्रज्वाल्य तत्र संपादितं चहापानं कर्तुं गृहीतव्रता इव दरीदृश्यंते । परं च कस्मिंश्चिद्वत्सरेऽतिवृष्टिः कस्मिंश्चिद्वत्सरेऽनावृष्टिरित्यादिवासनानुरूपं फलमप्युपभुज्यते तैः । अस्तु । एतेऽपि दिवसा नाशमेष्यंति लोकाश्च धर्मप्रवणा भविष्यंतीति दृढं विश्वसिमः । यतः-"सह यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः । अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्" इति भगवदुक्त्या देवलोकजीवनं मनुष्यलोकाधीनं यज्ञानुष्ठानस्य तदधीनत्वात् । मनुष्यलोकजीवनं देवलोकाधीनं पर्जन्यस्य तदधीनत्वात् । **तात्पर्यं तु**-उभयलोकसंजीवनाय यज्ञानुष्ठानं परमावश्यकम् । तच्च यज्ञानुष्ठानं संनिपत्त्योपकारकारादुपकारकांगोपांगैर्विना विकलमेव । कुंडमंडपादिकं यज्ञस्य संनिपत्योपकारकमंगं । तत्प्रतिपादका ग्रंथा बहवो मया दृष्टिपथं नीताः । प्रायस्ते सर्वे मत्सविधे वर्तंते । तेष्वयमेक एव **कुंडार्कग्रंथो**ऽल्पाक्षरो बह्वर्थः सुगमः सर्वसंमतश्च वरीवर्ति[1] ।

---

१ विशेषस्पष्टप्रतिपत्त्यर्थमंतिमं चतुर्थं परिशिष्टं विलोकनीयम् ।

अस्य प्रणेता च पदवाक्यप्रमाणपारावारपारीणभट्टनीलकंठसूरिसूनुमहामीमांसकशिरोरत्नं भट्टशंकरसूरिरिति "भास्वन्तं नीलकंठं पितरमनुसरञ्छंकरो वक्ति कुंडं" "इति मितिमवदच्छंकरो नैलकंठिः" इति प्रकृतग्रंथोपक्रमोपसंहाराभ्यां स्फुटं प्रतीयते। अनेन स्वपित्रा यथा द्वादशमयूखाः प्रणीतास्तथा व्रतार्कप्रभृतयो द्वादशार्कसंज्ञका अत्युत्तमा निबंधाः प्रणीताः प्रसिद्धा एव। तथा स्वपितृकृतकुंडोद्योते भास्कराख्या व्याख्या चात्युत्तमा प्रणीतेति "श्रीभट्टनीलकंठं पितरं परिचिंत्य शंकरः काश्यां। पितृकृतकुंडद्योतं व्याचष्टे मूलमालोच्य" "इति श्रीमन्मीमांसकभट्टनीलकंठात्मजभट्टशंकरकृतौ पितृकृतकुंडोद्योतविवृतिः कुंडभास्कराख्या समाप्तिमगात्" इति तदीयोपक्रमोपसंहारग्रंथतः प्रतीयते। अयं च कदेमां भूमिमलंचकारेति स्पष्टं न ज्ञायते। तथापि निर्णयसिंधुकृद्भट्टकमलाकरपंडितसमकालीनः किंचित्तदुत्तरकालीनो वेत्यनुमीयते। यतः प्रकृतग्रंथकृतां भट्टकमलाकराणां च प्रपितामहपादाः पितामहपादा एके जगद्गुरवो नारायणभट्टा एवेति। कमलाकरभट्टस्थितिसमयस्तु निर्णयसिंधुग्रंथस्थांतिमश्लोकेन "वसुऋतुऋतुभूमिते १६६८ गतेऽब्दे नरपतिविक्रमतोऽथ याति रौद्रे। तपसि शिवतिथौ समापितोऽयं रघुपतिपादसरोरुहेऽर्पितश्च" इति। विशेषैतिह्यं च श्री. ज. र. घारपुरे बी. ए., एल. एल. बी. विश्वविद्यालयसदस्य मुंबई, व्यवहाराश्रम मुख्याध्यापक पुणें. इत्येतैः प्रकाशितनीतिमयूखे तत्कृतोपोद्घाते द्रष्टव्यं।

अस्मिंश्च कुंडार्के मरीचिका–दीधिति–पद्मिनी–नौका–मिताक्षरा–उदयसंज्ञकाः षड् व्याख्या दृष्टास्तदाप्रभृति मनसि प्रबला मनीषा समुदतिष्ठत्। यत्स्वयमेकां सुप्रभानाम्नीं व्याख्यां निर्माय व्याख्यासप्तकसमुल्लसितः कुंडार्को मुद्रापयित्वा प्रकाशयितव्यश्चेति। सोऽयं संकल्पः श्रीसद्गुरुकृपया सिद्धिं नीतोऽद्येति सुधीरं ब्रूमः। तासु–उदयव्याख्या न संप्राप्ताऽतो व्याख्याषट्कसमुल्लसित एव कुंडार्कः प्रकाश्यते।

१ तत्र कुंडार्के **प्रथमा व्याख्या मरीचिकैवे**ति तदीयांतिमश्लोकतः "न परैरवगाहिता पुरः स्फुटकुंडा किल शांकरी कृतिः। विवृता रघुवीरदीक्षितैः कुतुकादेव न काम्यकामया" इति प्रतीयते। अस्याश्च कर्ता अस्मादेव श्लोकात्तथा "कृष्णात्रिगोत्रोद्भवभट्टसिंधोः समुद्गतो विठ्ठलपूर्णचंद्रः। तस्यात्मजः श्रीरघुवीरविज्ञः करोति कुंडार्कमरीचिकां चे"त्यादिमश्लोकात्कृष्णात्रिगोत्रसंभूतः श्रीभट्टोपनाम्नो विठ्ठलदीक्षितस्य तनयः श्रीरघुवीरदीक्षित इति स्फुटं ज्ञायते। अयं च कदा

कां भूमिं भूषितवानिति न ज्ञायते। तथापि शालिवाहनशक १७२० कालात्पूर्वतन इत्यनुमीयते पुरातनलिखितैतट्टीकापुस्तकेभ्यः।

२ द्वितीया व्याख्या **दीधितिः**। अस्याश्च कर्ता "नत्वा विश्वेश्वरं सांबं रामकृष्णात्मजः शिवः। मौद्गल्यो विदधात्यन्यामिमां कुंडार्कदीधितिं" "इति श्रीमौद्गल्योपाह्वयरामकृष्णोपाध्यायात्मजशिवरामोपाध्यायविरचिता कुंडार्कटीका समाप्ता" इत्यादिमश्लोकांतिमग्रंथालंकाराभ्यां स्पष्टं ज्ञायते। तथाचायं "इषुषट्सप्तभू-१७६५ शाके मार्गसितगणाधिपे। विश्वेश्वरमुदे चक्रे त्विमां कुंडार्कदीधितिं" इत्यंतिमश्लोकतः शालिवाहनशक १७६५ काले श्रीकाशीक्षेत्रमलंचकारेति भाति।

३ तृतीया व्याख्या **पद्मिनी**। अस्याश्च कर्ता "करोति जड्यकृष्णाख्यः कुंडार्कप्रियपद्मिनीं। अस्या रसं तु सरसाः पिबंतु मधुपा बुधाः" "जड्ये इत्युपनाम्नश्चभास्करस्य प्रसादतः। कृता तत्तनयेनेह टीका कुंडार्कपद्मिनी" इत्यादिमांतिमश्लोकाभ्यां जडे इत्युपनामा भास्करसूरितनयः कृष्णदीक्षितः। अयंच शालिवाहनशके १७७५ काले श्रीकाशीं भूषयामासेत्यनुमीयते।

४ चतुर्थी व्याख्या **नौका**। अस्याश्च कर्ता श्रीहर्षोपनामा नारायणसूरिसूनुदामोदरमिश्र इति तदीयांतिमश्लोकतः "श्रीमच्छंकरवाग्विलासजलधौ नारायणाङ्गोद्भवश्रीदामोदरसूरिणा विरचिता" इति स्पष्टं ज्ञायते। अयं च कदा कां भूमिं विद्वद्रत्नवतीमकार्षीदिति न ज्ञायते। तथापि शालिवाहनशक १७७५ कालीन इत्यनुमीयते पुरातनलिखितैतट्टीकापुस्तकेभ्यः।

५ पंचमी व्याख्या **मिताक्षरा**। अस्याश्च कर्ता प्रसिद्धः कुण्डरत्नावलीतट्टीकाप्रणेता जड्योपनामा कुण्डार्कपद्मिनीकृत्कृष्णदीक्षिततनुजन्मा रामचंद्रदीक्षितः। शालिवाहन शक १८०७ काले पौषकृष्णसप्तम्यां रवौ श्रीकाशीक्षेत्र इमां टीकां निर्ममे। इति "जड्योपाभिधकृष्णदीक्षितपुत्रेण रामचंद्रेण। टीका मिताक्षराख्या रचिता शोध्या विचार्य तज्ज्ञैः सा॥ सप्ताभ्रवसुभू १८०७ शाके पौषासितरवौ दिने। काश्यां समाप्ता सप्तम्यां विश्वेशकृपया मुदे" इत्यन्तिमश्लोकाभ्यां स्पष्टं प्रतीयते।

६ षष्ठी **उदयाख्या व्याख्या**। इयं च मोंगलाईप्रांते मंजरथ नगरे श्रीबाबादीक्षित करंजकर अग्निहोत्रिणां सविधे दृष्टा सा च तत्पूर्वजैरेव निर्मिता वर्तते। सा न संप्राप्ता। यदि लभ्येत पुनर्मुद्रणावसरे तामपि संगृहिष्यामः।

७ सप्तमी श्रीचिंतामणिदीक्षितैः कृता वर्तते । "चिंतामणिदीक्षितैरेतद्ग्रंथ-टीकायां विस्तरेण प्रदर्शिताऽप्यस्ति । अतो नेह प्रदर्श्यते । इति तृतीयश्लोकीय-दीधितिटीकास्थलेखतो ज्ञायते । साऽपि न समुपलब्धा ।

८ अष्टमी **टीका** रत्नागिरीमंडलांतर्गत लांजें इत्याख्यपुरवासिश्रीशिवराम-पाध्ये अपरनामधेय श्रीतात्याशास्त्रीमोघे इत्येतैः कृता वर्तते । इति विद्याभूषण-श्रीतांबेशास्त्रिकृतकुंडार्कप्रकाशस्थलेखतो ज्ञायते । साऽपि न संप्राप्ता ।

९ नवमी पुनश्च उदयनाम्न्येव टीका 'पुण्यपत्तनवासी महामहोपाध्याय वासु-देवशास्त्री अभ्यंकर'महोदयैः शालिवाहनशाकीय १८५३ संवत्सरे श्रावणे मासि कृता विद्योतते । इति "वंशे पूते भुवनविदितेऽभ्यंकरोपाभिधेऽभूत्प्राज्ञो विद्वन्मुकुटसुमणिर्देशिको भास्कराख्यः । तत्पौत्रः श्रीबुधजनहितायोदयाख्यां तमोघ्नीं कुंडार्केऽमूं विवृतिमतनोद्वासुदेवः सुबोधाम् ॥ १ ॥ त्रीष्विभेन्दुमिते शाके वत्सरेऽथ प्रजापतौ । श्रावणे मासि कुंडार्कटीका श्रीभास्करेर्पिता ॥ २ ॥" इति तदीयांतिमश्लोकाभ्यां स्पष्टीभवति । साच पुण्यपत्तनस्थानंदाश्रममुद्रणा-लयाध्यक्षैरिदानीमेव 'प्रायश्चित्तेन्दुशेखरेण सह' संमुद्र्य प्रकाशिता । अतोऽत्र न संगृहीता ।

१० दशमी व्याख्या श्रीसीतापतिकृताऽस्ति । सा च 'पंजाब युनिव्हर्सिटी लायब्ररी' इत्यत्र वर्तते । इति तदीयहस्तलिखितपुस्तकानां सूचीतोऽवगम्यते ।

११ एकादशी व्याख्या महाराष्ट्रभाषामयी **कुंडार्कप्रकाशाख्या** । भट्ट-विद्याभूषण श्रीसदाशिवशास्त्री तांबे इत्येतैः "शुभकृद्वत्सरे शाके वेदनेत्राष्ट-भूमिते । भाद्रे कृष्णदले षष्ठ्यां ग्रन्थोऽयं पूर्णतां गतः" इति तदीयांतिमश्लोकतो १८२४ मिते शालिवाहनशके भाद्रपदकृष्णे षष्ठ्यां विरचिता वर्तते । सा च तैरेव पृथक् मुद्रिता । अतो न संगृहीताऽस्माभिः ।

१२ द्वादशी मदीया **व्याख्या सुप्रभा** । इदानीमेव विनिर्मिता इति । तथाचांते श्रीमल्लेले इत्युपाह्वनरसिंहसूरिसूनुधुंडीराजदीक्षितकृतसामान्यनिर्णया-न्तर्भूतौ **कर्ममाननिर्णयावपि** विषमपदालंक्रियाख्यटिप्पण्या समलंकृत्य संगृहीतौ । तौ च श्राद्धिकानां कृते सहायकारिणौ स्यातामिति भाति ।

अत्र च विषये श्रीक्षेत्रकाशीस्थैः **पं० विद्वद्वर्यैः श्रीबाबूदीक्षितजडे** इत्येतैः पद्मिनीमिताक्षरयोः प्रदानेन तथा श्रीक्षेत्रउज्जयनीस्थैर्विद्वद्भिः **श्रीअनंत गोपाळ वारे अग्निहोत्री** इत्येतैर्नौकायाः पुस्तकप्रदानेन परमुपकृतम् । तथा बृहन्महाराष्ट्रेषु सुप्रसिद्धैः श्रीक्षेत्रउज्जयनीमधितिष्ठद्भिः **प्रिन्सिपॉल माधव कॉलेज, सुप्रिन्टेन्डेन्ट वेधशाळा, श्रीयुत पंडित गोविंद सदाशिव आपटे M. A. B. Sc. गणकचूडामणि** इत्येतैर्महोदयैर्मम विज्ञप्तिमनुसृत्य स्वीयं प्रचुरतरं कार्यगौरवमविगणय्य प्रकृतेऽस्मिन्ग्रंथे प्रास्ताविका विचाराः प्रदर्शितास्तदर्थं तेषामहमधमर्णोऽस्मि । तथा श्रीक्षेत्रनासिकनिवासिभिः "धर्मकार्यधुरंधरे"ति पदमलंकुर्वाणैः श्रीयुतैः शौचेइत्युपनामकैराबाजीसूनुगोविंदशर्मभिः पेन्शनर. अ. डे. ए. इन्स्पेक्टरमहोदयैः समुत्साहपुरःसरं वारंवारमुपयुक्तसाहाय्यप्रदानेनानुगृहीतोऽस्मि ।

तथाऽन्यैरपि **श्री. वे. शा. सं. दत्तात्रेय विनायक टोंककर** श्रीक्षेत्र उज्जयिनी, ज्योतिर्विद्भास्कर पं. भास्कर सीताराम घोलप श्रीक्षेत्र नासिक पंचवटी, **श्री. वे. शा. सं. अंबादास रंगनाथ गर्गे** श्रीक्षेत्रनासिक, इत्यादिभिरस्मन्मित्रवर्यैश्च लेखने संशोधने साहाय्यमकारीति मुदा प्रकाशयामः । विशेषतः **पंडितश्रेष्ठ श्रीवासुदेवशास्त्री पणशीकर महोदयै**र्मत्कृते महान्तः परिश्रमा अनुष्ठिताः । तेषामुपकारगणं न विस्मरामः । तथा निर्णयसागराध्यक्षैः **श्रीमंत पांडुरंग जावजी श्रेष्ठिभि**रयं ग्रन्थः स्वायत्तीकृत्य प्राकाश्यं नीतोऽतस्तेभ्यो बहून्धन्यवादान्प्रदद्मः । अन्यच्च संशोधनावसरे मानुषस्वभावसुलभतया स्खलितदोषसंसूचनपुरःसरं क्षाम्यन्तु तत्रभवन्तः । येन पुनर्मुद्रणावसरे तान्दोषान्परिमार्जयामः । इति शम् ॥

काव्यतीर्थ—मीमांसक,

**श्रीधर अणाशास्त्री वारे.**

श्रीक्षेत्रनाशिक.

॥ श्रीः ॥

# प्रस्तावना.

## नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम.

भ. गी. अ. ४-३१.

आपल्या सनातन वैदिक धर्माचीं अनेक अंगें आहेत. श्रुति ही मुख्य असून तिजपासून स्मृति निर्माण झाली. धर्मसंस्थितीकरितां कोणत्या तरी विशिष्ट आचारांची आवश्यकता लागते. **वैदिक धर्माविषयीं तशी आवश्यकता पाळली गेली नसती तर बौद्धधर्माप्रमाणें याही धर्माचा लोप झाला असता.** धर्मविधींच्या योगानें एक मुख्य उद्देश साधला जातो, तो हा कीं आपण त्या धर्माचे अनुयायी आहोंत, ही भावना मनांत नेहमीं जागृत राहते व त्या धर्माविषयींचा आपला अभिमान दृढ होत जातो. उदाहरणार्थ-यवनांमध्यें सामुदायिक प्रार्थना करण्याचा जो नियम नित्य पाळण्यांत येतो त्यामुळें त्यांच्यांत ऐक्यसंवर्धन उत्तम प्रकारचें होतें हें सर्वांना विदितच आहे.

थेट वेदमंत्रांवरून जे आचार व विधि उत्पन्न झाले, त्यांस श्रौत ह्मणतात; व स्मृतीवरून जे उत्पन्न झाले त्यांस स्मार्त ह्मणतात. कुंडांसंबंधींचे ग्रंथ हे स्मार्त हवनावर लिहिलेले होत. त्यांचें यथोचित अध्ययन करून तद्विषयक क्रियानुष्ठानांत जे श्रेष्ठ असतात तेच याज्ञिक या संज्ञेस पात्र होत. आणि जे **अध्वरमीमांसा, धर्मशास्त्र, वेदांगें यांसहित वेदाध्ययन करितात तेच याज्ञिक यज्ञादि कर्में यथार्थ रीतीनें करूं शकतात, इतर याज्ञिक नाममात्र होत.** यावरून याज्ञिकांची खरी योग्यता किती उच्च तऱ्हेची आहे, याची कल्पना सहजच करितां येईल. *याज्ञिकांची विद्या एकांगी नसते, अनेक विषयांचें ज्ञान करून घेणें त्यांनां आवश्यक असतें. अशा योग्यतेच्या ज्या कांहीं थोड्या व्यक्ति आज आपल्या समाजांत विराजमान आहेत, त्यांत **श्रीक्षेत्रनासिक येथील पं० वारे शास्त्री यांचें घराणें सुप्रसिद्ध आहे.** या घराण्यांतील हल्लींचे पं. वे. शा. सं. वैदिकतिलक अण्णाशास्त्री व त्यांचे सुयोग्यपुत्र काव्यतीर्थ मीमांसक पं. श्रीधरशास्त्री वारे यांची योग्यता

* "यज्ञसंज्ञा तु विधेयं बहुविद्यान्तराश्रिता" इत्यभियुक्तोक्तिः।

उत्तमांतली समजली जाते. हे दोघे ही अनेक शास्त्रपारंगत व याज्ञिक विषयांत अधिकारी आहेत. अशी यांची कीर्ति आहे. **पं. अण्णाशास्त्री यांनीं** लिहिलेले "**शुक्लयजुःशाखीय कर्मकाण्डप्रदीप**" व "**आषाढोद्वाहनिर्णय**" हे ग्रंथ प्रकाशित आहेत. व त्यांचे "**शांतिकांडप्रदीप, श्रौतकर्मकांडप्रदीप, गोत्रप्रवरनिर्णयप्रदीपिका, पर्वनिर्णयप्रदीप, राज्याभिषेकपद्धति, शतचण्डीसहस्रचण्डीयज्ञपद्धति०** हे ग्रंथ अद्याप प्रसिद्ध झाले नाहींत. तसेंच **पं. श्रीधरशास्त्री यांनीं ही "सूत्रोक्तपद्धति, वृत्तचंद्र, दत्तकनिर्णयामृत, कुंडार्कसुप्रभा छंदोमंजरी चंद्रिकाटीका** व **नित्यब्रह्मकर्मप्रदीप,** हे ग्रंथ लिहिलेले आहेत. त्यांपैकीं **नित्यब्रह्मकर्मप्रदीप** हा ग्रंथ प्रकाशित असून "**दत्तकनिर्णयामृत**" हा ग्रंथ छापला आहे. या ग्रंथास **वेदांत वागीश प्रो० पंडितप्रवर म० म० श्रीधरशास्त्री पाठक डेक्कनकॉलेज पुणें** यांनीं प्रस्तावना जोडली आहे. आणि आतां प्रस्तुत "**कुण्डार्क**" या ग्रंथावर जी "**सुप्रभा**" नांवाची टीका लिहिली आहे, तिचें प्रसिद्धीकरण हा या पुस्तकाचा मुख्य उद्देश होय. "मरीचिका, दीधिति, पद्मिनी, नौका, मिताक्षरा" इत्यादि उपलब्ध झालेल्या पांच टीका देऊन त्यानंतर आपली सुप्रभा टीका लिहिली आहे. यामुळें तिची तुलनात्मक योग्यता आपोआपच जाहीर होऊं शकते. ही टीका कोणालाही पसंत होण्यासारखी आहे. तथापि या ग्रंथासंबंधी मीही आपले विचार या प्रस्तावनेंत दाखल करावेत, अशी पं. श्रीधरशास्त्री यांनीं आपले स्नेही **श्रीक्षेत्र उज्जयिनी येथील पं. दत्तात्रेयशास्त्री टोंककर** यांजकडून मला विनंती करविली असून आपलें हस्तलिखित मजकडे पाठविलें. त्यावरून मी येथें थोडेंसें विवरण करीत आहें. पं. वारे शास्त्रीद्वयासंबंधीं माहिती अर्थातच पं. टोंककर यांनीं कळविल्याप्रमाणें मी लिहिली आहे.

धर्म-कर्माचारांचें थोतांड आतां बंद केलें पाहिजे. कारण संस्कृतीच्या प्रगतीला धर्मविधिविषयक श्रद्धा विसंगत आहे, असें ह्मणणारे कांहीं लोक आहेत. परंतु त्यांचें एका गोष्टीकडे दुर्लक्ष होतें, ती गोष्ट ही कीं, **धर्मश्रद्धा सदैव सर्वत्र मनुष्यस्वभावांत बद्धमूलच असते.** ही श्रद्धा योग्य मर्यादेच्या आंत ठेवणें इतकेंच आपलें कर्तव्य होय रोमन, ग्रीक लोकांत ही देवतांनां संतुष्ट करण्याकरितां becatomps—म्हणजे वृषयज्ञ करीत

असत. डेल्फी येथील देवीपुढें नंदादीप जाळीत व मिनर्व्हा देवीची पूजा कुमारिका करवींच करीत असत. हें यजन पूजन यथासांग होण्याविषयीं फार काळजी घेतली जात असे. इजिप्शियन लोकांत अशी समज होती कीं अमुक कृत्यें यथाकाल व यथाशास्त्र न झालीं तर नाईल नदीला वेळेवर पूर येणार नाहीं. व त्यामुळें दुष्काळ पडेल. खाल्डियन्स व इरानियन्स लोकांतही अशा प्रकारचे विधि करण्याचा प्रचार असे. अलीकडच्या काळांत रोमन कॅथोलिक व प्रॉटेस्टंट्स यांच्यांतही असे कांहीं विधि प्रचारांत आहेत. व अगदीं अलीकडच्या काळांत सुद्धां जरी तार्किक दृष्टीच्या प्रगतीबरोबर अशा प्रकारची श्रद्धा कमी होत आहे असें मानिलें तरी **ती निर्मूल होऊं शकत नाहीं.** प्लेग किंवा तत्सम इतर राष्ट्रीय आपत्ति प्राप्त झाली असतां पाश्चात्य सुसंस्कृत लोक सुद्धां चर्चमध्यें प्रार्थना करण्याची व्यवस्था बिशपकडून करवितात. इंग्लंडांतील राजेसाहेबांची प्रकृति बिघडली असतां त्यांना आराम व्हावा म्हणून याही उपायांचा आश्रय केला जातो. त्यांच्या राज्याभिषेकाचया वेळीं अभ्यंगादिविधि यथाशास्त्र व्हावेत याविषयीं श्रेष्ठ पात्र्यांना काळजी घ्यावी लागते हें प्रसिद्धच आहे. **तात्पर्य देवतांना मग त्या साकार असोत अथवा निराकार असोत, संतुष्ट करण्याचे जे शास्त्रविहित विधि आहेत ते हल्लीं समंजस लोकांत सुद्धां प्रचलित आहेत.** तेव्हां यज्ञयागादिकर्मे करण्याकडे आपल्यांतील भाविक लोकांची प्रवृत्ति असणें यांत नांवें ठेवण्यासारखें किंवा नवल वाटण्यासारखें कांहींच नाहीं. देवतांचा संतोष हें अदृष्ट फल आहे. अर्थांत होमहवनादि नैमित्तिक कृत्यांचें फल याच प्रकारचें आहे. शरीरशुद्धि व आरोग्य हीं फलें जशीं दृश्य आहेत तसें चित्तशुद्धि हें फल एकदम नजरेस येत नाहीं. **"यज्ञाद्भवति पर्जन्यः" "अग्निहोत्रं जुहुयात्स्वर्गकामः"** या यज्ञापासून उत्पन्न होणाऱ्या फलांचा अनुभव येणें फारसें अवघड नाहीं. पर्जन्यप्राप्तीचें फल दृष्टस्वरूप आहे व स्वर्गप्राप्तीचा अनुभव आपल्या स्वर्गसंबधी कल्पनेवर अवलंबून राहील. पण तें कसेंही असलें तरी यज्ञकरणें हें फलाशा धरून करण्याचें कर्म आहे. याकरितां तें योग्यरीतीनेंच झालें पाहिजे.

यज्ञविधीच्या अंगप्रत्यंगांच्या संबंधांत शास्त्रांत नियम घालून दिले आहेत. प्रत्येक यज्ञांत कुंड हें असावयाचेंच. कुंडांची संख्या कार्याच्या महत्त्वाप्रमाणें नवांपर्यन्त सांगितली आहे. कुंडरचना झाल्यावर त्यावर मण्डपरचना करणें तित-

केंच आवश्यक आहे. ब्राह्मणांनीं मंत्र म्हणून होमकुण्डांत आहुत्या टाकल्या म्हणजे कर्माची पूर्तता झाली, असें नाहीं. कुंड जर शास्त्रोक्तरीत्या बनविलें नसेल, त्याची, लांबी, रुंदी, उंची व आकार जर ग्रंथोक्त नसतील, मंडपरचना ग्रंथांत सांगितल्याप्रमाणें नसेल, तोरणें, ध्वज, शंख, चक्र, त्रिशूलादिचिन्हें जर देवतानुरूप नसतील, तर तें हवन निष्फल होतें. **आपली स्वतःची बुद्धि चालवून शास्त्रोक्तपद्धतींत फेर बदल करतां येत नाहीं.** या संबंधांत श्रीमद्भगवद्गीता अ० १६ श्लो० २३ मध्यें भगवंतांनीं म्हटलें आहे कीं:—

**"यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ॥**
**न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ १ ॥**

यावरून शास्त्रोक्त नियम पाळण्याचें महत्त्व लक्षांत येईल. इतकेंच नव्हे, तर कर्म यथासांग न झालें तर उलट तें यजमानांस अशुभावह होतें, असें सांगितलें आहे. ही गोष्ट लक्षांत आणून निरनिराळ्या आचार्यांनीं वेळोवेळीं कुंडविषयक ग्रंथरचना केली आहे.

त्यापैकीं **"कुण्डरत्नावली"** हा ग्रंथ तर केवळ ६३ वर्षांपूर्वीं लिहिलेला आहे. कांहीं ग्रंथ विस्तारपूर्वक लिहिले आहेत, तर कांहीं थोडक्यांत लिहिले असून त्यांतील विषयांची मांडणी संगतवार केलेली आहे. अशा प्रकारच्या ग्रंथांपैकीं **"कुंडार्क" हा ग्रंथ केवळ १५ श्लोकांचा असून बव्हर्थक आहे.** या कारणानें त्याचें अध्ययन पुष्कळ लोक करितात व त्यांवर टीकाही पुष्कळ झाल्या आहेत. परंतु त्या सर्वांपेक्षां पाठ्य विषय अधिक स्पष्ट करून दाखविण्याचे हेतूनें पं. श्रीधरशास्त्री वारे यांनीं परिश्रमपूर्वक सर्व टीकांचा अभ्यास करून आपली **"सुप्रभा टीका"** लिहिली आहे. तिच्यांतला कांहीं भाग हृदयंगम असून सुलभ प्रकारें समजावून दिलेला आहे. हें विद्यार्थ्यांस आपोआपच कळून येईल.

विवेचनाची दृष्टि दोन प्रकारची असूं शकते. **विवेचन ज्यांच्याकरितां करावयाचें त्यांची पूर्वतयारी किती हें लक्षांत आणून तें करावयाचें ही एक दृष्टि, व जे त्या विषयाचे ज्ञाते असतील त्यांच्या संतोषाकरितां कांहीं उच्च विषयांचें प्रतिपादन करून शास्त्रोन्नतीच्या कार्यांत यथाशक्ति भर घालणें ही दुसरी दृष्टि.** वस्तुतः हे

दोन्ही उद्देश समोर ठेवून जी रचना व टीका होते तीच खरोखर लोकप्रिय होते. मी या विषयाचा अभ्यास करूं लागलों तेव्हां चौरसाशिवाय इतर आकृतींचीं कुंडें एक हात मानाचीं असतात. याचा अर्थ काय? व वृत्तकुंडांचा व्यास २७ अंगुलें व ५ यूका असा आडवातिडवा कां घेतला हें समजेना. बऱ्याच टीका पाहिल्या व कांहीं ग्रंथही पाहिले; पण या प्रारंभिक शंकांचें समाधान मला कोठें सांपडलें नाहीं. पुढें बरीच माहिती झाल्यावर माझ्या या शंका दूर झाल्या. तथापि **रेखागणिताच्या किंवा त्रिकोणमितिच्या आधारें निरनिराळया आकारांच्या क्षेत्रफळांचीं सूत्रें कशीं उत्पन्न झालीं हें कोणींही दाखविलें नाहीं. यावरून विवरण करण्यासारखा बराच भाग अजून शिल्लक आहे, असें लक्षांत येईल.** "मरीचिका, दीधिति, पद्मिनी, नौका, मिताक्षरा, उदय" या ६ टीका उपलब्ध असतांना आणखी एका म्हणजे ७ व्या टीकेची भर पं० श्रीधरशास्त्री यांनीं कां घातली, अशी शंका घेण्याचें कारण आतां कोणास राहिलें नाहीं. इतर टीकाकारांनीं जे भाग चांगले स्पष्ट केले नाहींत, त्यापैकीं कांहीं महत्त्वाचे भाग या **"सुप्रभा"** टीकेंत स्पष्ट करून सांगितले आहेत. उदाहरणार्थः—अर्धचंद्र कुंडाची रचना करण्यास दुसऱ्या वृत्ताचें साहाय्य कां घ्यावें याचें विवरण केलें आहे. पद्माच्या पाकळया बनविण्याची रीति योग्य शब्दांनीं ध्यानांत येण्याजोगी सांगितली आहे. मंडप, ध्वज, पताका, या बाबतींतही या टीकेंत दिलेलें विवेचन सहज समजण्यासारखें आहे. शिवाय यांच्या दिलेल्या आकृत्या फारच बोधक आहेत. त्यामुळें विषय अधिक सुलभ झाला आहे. **तेव्हां या विशिष्ट हेतूनें लिहिलेल्या टीकेचा फायदा जिज्ञासूंनीं अवश्य करून घ्यावा हें योग्य होय.**

केवळ श्लोकार्थ स्पष्ट करून सांगण्यांतच **"सुप्रभेचें"** वैशिष्ट्य आहे, असें नव्हे तर कुंडासंबंधांत जे कांहीं वादग्रस्त मुद्दे आहेत, त्यांचेंही स्पष्टीकरण मार्मिक रीतीनें केलेलें आहे. किती आहुत्यांकरितां किती मापाचें कुंड असावें याविषयीं मतभेद आहे. याकरितां हा वाद कसा उत्पन्न झाला हें दाखवून वाचनिक प्रमाणांचा अभाव असल्यामुळें **त्रैराशिक पक्ष कसा अग्राह्य ठरतो हें** स्पष्ट करून सांगितलें आहे.

तसेंच दीर्घकाळ चालणाऱ्या यज्ञाची समाप्ति स्वल्पकाळांत करावयाची आव-

श्यकता असल्यास ती कशी व काय आधारानें करितां येते याविषयीं व यासारख्या इतर अनेक विषयांचें विवेचन ज्यांच्यांत केलें आहे. असें, पं० धुंडीराज दीक्षित लेले यांनीं केलेले दोन निर्णय शेवटीं परिशिष्टवजा जोडून त्यांवर विषमपदस्थळीं "विषमपदालंक्रिया" नांवाच्या स्वकृतटिप्पण्याही जोडल्या आहेत. **त्यामुळें याज्ञिक लोकांची मोठी गैरसोय दूर झाली आहे.**

याप्रमाणें उपयुक्त असलेली **"सुप्रभाटीका"** आपल्या नांवाप्रमाणें शोभायमान होवून व कुंडमंडपविषयक ज्ञानावर प्रकाश पाडून अभ्यासकांस संतोषदायी होवो अशी श्रीयज्ञनारायणाजवळ प्रार्थना करून ही प्रस्तावना पुरी करितों.

श्रीउज्जयिनी क्षेत्र.
ता० ६।४।१९३२.

**गोविंद सदाशिव आपटे,**
M. A. B. Sc., गणकचूडामणि.
माजी प्रिन्सि० माधवकॉलेज तथा प्रस्तुत
सुपरिन्टेन्डेन्ट, वेधशाळा, उज्जैन.



श्रीशः शरणं.

व्याख्याषट्कसमुल्लसितकुण्डार्कस्थविषयानुक्रमः

# तत्रादौ मूलानुक्रमणिका.

इति मूलस्थविषयानुक्रमणिका.

---

## मरीचिकाटीकास्थविशिष्टविषयाः ।



इति मरीचिटीकास्थविशिष्टविषयानुक्रमणिका.

# अथ दीधितिटीकास्थविशिष्टविषयानुक्रमणिका.

इति दीधितिटीकास्थविशिष्टविषयानुक्रमणिका.

---

## अथ पद्मिनीटीकास्थविशिष्टविषयानुक्रमणिका ।

**इति पद्मिनीटीकास्थविशिष्टविषयानुक्रमणिका.**

---

## अथ नौकाटीकास्थविशिष्टविषयानुक्रमणिका ।



**इति नौकाटीकास्थविशिष्टविषयानुक्रमणिका.**

---

## अथ मिताक्षराटीकास्थविशिष्टविषयानुक्रमणिका ।

इति मिताक्षरास्थविशिष्टविषयानुक्रमणिका.

---

## अथ सुप्रभाटीकास्थविशिष्टविषयानुक्रमणिका ।

इति सुप्रभाटीकास्थविशिष्टविषयानुक्रमणिका.

---

## अथ कुंडमंडपसामान्यनिर्णये विषयानुक्रमणिका।



इति कुंडमंडपसामान्यनिर्णये विषयानुक्रमणिका.

---

# अथ सर्वकर्मसु सामान्यनिर्णये विषयानुक्रमणिका ।



इति सर्वकर्मसु सामान्यनिर्णये विषयानुक्रमणिका.



श्रीः

# कुण्डार्कः—

## मरीचिका-दीधिति-पद्मिनी-नौका-मिताक्षरा-सुप्रभादि-व्याख्याषट्कसमुल्लसितः ।

ॐ नमः श्रीसूर्याय ।

भास्वन्तं नीलकण्ठं पितरमनुसरञ्छंकरो वक्ति कुण्डं
भू१द्व्य२ब्ध्य४ङ्गा६ष्ट८हस्तं दशशतहवनात्तद्दशघ्नोत्तरे स्यात् ।
हस्तः स्यादूर्ध्वबाहुप्रपदगमखिनः पञ्चमोंऽशोऽङ्गुलं तत्-
सिद्धांशस्तद्गजांशो यव उरगलवस्तस्य यूकाऽष्ट लिक्षा ॥ १ ॥

**मरीचिका**—कृष्णात्रिगोत्रोद्भवभट्टसिन्धोः समुद्गतो विट्ठलपूर्णचन्द्रः ।
तस्यात्मजः श्रीरघुवीरविज्ञः करोति कुण्डार्कमरीचिकां च ॥

अत्रभगवान् श्रीभट्टनीलकण्ठसूनुर्भट्टशंकरनामा विद्वानुपपत्तिप्रधानं सुकरोपायं च कुण्डप्रकाशकं ग्रन्थमाविष्कर्तुं प्रतिजानीते—भास्वन्तमिति । भास्वन्तं कीटभृङ्गन्यायेन ध्यानबलेन भास्वद्भावं प्राप्तं नीलकण्ठं पितरं अनुसरन् शंकरः कुण्डं वक्ति । कुण्डं दशविधं साङ्गोपाङ्गमित्यर्थाज्ज्ञेयम् । अनुसरन्नित्यात्मनः सांप्रदायिकत्वमुक्तम् तत्रादौ कुण्डमानमाह—भूद्वीति । तत्कुण्डं दशशतहवनात् सहस्रहोममारभ्य दशगुणोत्तरे होमे क्रमात् भूद्व्यादिहस्तं स्यात् । यथोक्तम्—"सहस्रे त्वथ होतव्ये कुर्यात्कुण्डं करात्मकम् । द्विहस्तमयुते तच्च लक्षहोमे चतुःकरम् ॥ दशलक्षमिते होमे षट्करं संप्रचक्षते । अष्टहस्तात्मकं कुण्डं कोटिहोमे तु नाधिकम्" इति । हस्तादिमानमाह—हस्त इति । यजमानेनोर्ध्वबाहुना प्रपदोच्छ्रितेन समपादस्थि-

तेन वेति कात्यायनवचनात्। ऊर्ध्वबाहौ प्रपदगे पादाग्रोच्छ्रिते मखिनि यज-
माने यत्प्रमाणसूत्रं तस्य पञ्चमोंऽशो हस्तः । हस्तस्य चतुर्विंशतितमोंऽशोऽङ्गु-
लम् । अङ्गुलस्याष्टमांशो यवः । यवस्याष्टमांशो यूका । सा चाष्ट लिक्षा ।
यूकाया अष्टमांशो लिक्षेत्यर्थः । इतोऽप्यूनं प्रमाणमनुपयोगान्न संगृहीतम् ।
यथोक्तम्—"यवादूनं प्रमाणं तु मण्डपादौ न चिन्तयेत् । सूत्रस्याधो वि-
लीयन्ते यूकालिक्षादयः शतम्" इति । रामवाजपेयिनस्तु–'आहुलक्षमितौ
च हस्तमितमप्येकैकहस्तेधनं यावत्पङ्क्ति च लक्षवृद्धित इदं कोटौ तु पङ्क्त्या
करैः' । 'समन्ततश्चतुर्हस्तं प्रोक्तं षोडशहस्तकम्' । स्कान्दे–कोटिहुतौ कुण्डं
प्रोक्तं तत्स्थूलवस्तूनामिति च मानान्तराण्यप्युदाजह्रुः । अत्र मूलवाक्यानि
वाजपेयिकृतग्रन्थस्य टीकायामेव द्रष्टव्यानि विस्तरभयान्नेह लिख्यन्ते ॥ १ ॥

दीधितिः—नत्वा विश्वेश्वरं साम्बं रामकृष्णात्मजः शिवः ।
मौद्गल्यो विदधात्यन्यामिमां कुण्डार्कदीधितिम् ॥ १ ॥

चिकीर्षितस्य ग्रन्थस्य अविघ्नपरिसमाप्त्यर्थं शिष्टाचारानुमितश्रुतिबोधित-
कर्तव्यताकं इष्टदेवतानुसरणरूपं मङ्गलं शिष्यशिक्षार्थं निबध्नन् चिकीर्षितं
प्रतिजानीते—अत्र नीलकण्ठशब्देन शिव उच्यते योगरूढ्या । केवलं योगार्थे
गृह्यमाणे मयूरादावतिव्याप्तिः स्यात्। अतो योगार्थो रूढ्या नियम्यते । तस्य
प्रकाशरूपत्वेऽपि काल्पनिकं तद्वत्त्वं मनसिकृत्वा वदति भास्वन्तमिति ।
भक्तानां वरदातृत्वेन विश्वपालकत्वात्पितृत्वम् । तस्यानुसरणं कायवाङ्म-
नोभिः । अथवा भास्वच्छब्देन सूर्य उच्यते । पितृशब्दो जनके रूढः तत्संज्ञा
नीलकण्ठ इति । अत्र सूर्यानुसरणं पूर्ववत् । पित्रनुसरणेन ग्रन्थोक्तस्यार्थस्य
सांप्रदायिकत्वमुक्तम् । अथवा भास्वन्तमिति पितुरेव विशेषणम्, बहुग्रन्थक-
र्तृत्वेन कीर्तिरूपप्रकाशवत्त्वात् । अत्र अनुसरन्निति "लक्षणहेत्वोः क्रियायाः"
इति सूत्रविहितेन शतृप्रत्ययेनानुसरणग्रन्थकरणयोर्मध्येऽवान्तरव्यापारं वार-
यति । शंकर इति ग्रन्थकर्तुः संज्ञा । कुण्डमिति जात्येकवचनं तेन कुण्ड-
जातं सर्वं वक्ति कथयतीत्यर्थः । कुण्डमानमाह—भूर्द्वीत्यादि । दशशत-
हवनात् सहस्रहोममारभ्य दशगुणोत्तरे होमे क्रमाद्भूद्व्यादिहस्तं कुण्डं
स्यात् । अत्र शतार्धे रत्निमितं शते चाऽरत्निमितमपि मानं ग्रन्थान्तरोक्तं
संग्राह्यं उक्तस्योपलक्षणार्थत्वात् । तेन कोटिहोमे दशहस्तमितं षोड-

शहस्तमितमपि ग्राह्यम् । यथोक्तं भविष्यपुराणे—"मुष्टिमानं शतार्धे तु शते चारत्निमात्रकम् । सहस्रे त्वथ होतव्ये कुण्डं कुर्यात्करात्मकम् ॥ द्विहस्तमयुते तच्च लक्षहोमे चतुःकरम् । दशहस्तमिते होमे षट्करं संप्रचक्षते ॥ अष्टहस्तात्मकं कुण्डं कोटिहोमे तु नाधिकमि"ति । शारदातिलके—"दशहस्तमितं कुण्डं कोटिहोमे प्रशस्यते । लक्षाणां दशकं यावत्तावद्धस्तेन वर्धयेत्" ॥ स्कान्दे—"कोटिहोमे चतुर्हस्तं चतुरस्रं समन्ततः" इति । अत्रैकसंख्यायां मतान्तरोक्तं भिन्नं मानं सूक्ष्मस्थूलद्रव्यविषयं यथायथं बोध्यम् । अत्र रत्निप्रभृतिषु उक्तावधिषु कुण्डमानान्युक्तानि तदधिके उक्तावधिपर्यन्तहोमे कथमित्याकाङ्क्षायां प्रयोगरत्नकारादय आहुः—तत्रैकोनपञ्चाशदाहुतिपर्यन्तं स्थण्डिलमेव । तच्चाष्टादशाङ्गुलादि । परिमाणविशेषा उच्यन्ते—पञ्चशतादिनवनवत्याहुतिपर्यन्तं मुष्टिमात्रं कुण्डम् । शताद्येकोनसहस्रपर्यन्तं अरत्निमात्रम् । सहस्राद्येकोनायुतपर्यन्तं हस्तमात्रम् । अयुताद्येकोनलक्षपर्यन्तं द्विहस्तम् । लक्षाद्येकोनदशलक्षपर्यन्तं चतुर्हस्तम् । दशलक्षाद्येकोनकोटिपर्यन्तं षड्ढस्तम् । कोटिमारभ्याधिकहोमेऽष्टहस्तम् । अत्र मूलम्—"न्यूनसंख्योदिते कुण्डेऽधिको होमो विधीयते" इति । अन्येतु "औचित्यादर्थात्परिमाणमि"ति कात्यायनोक्तेर्यथा यथा होमो वर्धते तथा तथा कुण्डं त्रैराशिककल्पनया वर्धनीयम् । उक्तसंख्यायामुक्तमानानि किमर्थं तर्हि उक्तानि ? त्रैराशिककल्पनायां प्रमाणप्राप्त्यर्थं । कथं प्रमाणप्राप्तिरिति चेदित्थम्—सहस्रे किल हस्तमानमुक्तम् । अयुते द्विहस्तम् । यदि नवभिः सहस्रैः षट्सप्तत्यधिकपञ्चशतात्मकं क्षेत्रफलं वर्धते तर्हि अवान्तरसंख्यायां किं ? इति यथायथं क्षेत्रफलमानीय पूर्वक्षेत्रफले संयोज्य "वृत्तेऽब्जेऽब्धीष्विभाश्वै"-रितिवक्ष्यमाणप्रकारेण त्रैराशिके कृते मूलग्रहणे व्यासमानं लभ्यते । इत्थं सर्वावधिषु तत्तन्मानग्रहणेन त्रैराशिकं ग्राह्यम् । अत्र पूर्वे इमं पक्षं दूषयन्ति त्रैराशिकस्य दृष्टविषयत्वेनाऽदृष्टार्थत्वादिति । एतत्परिहारमप्यन्ये वदन्ति । यदीदं मानमदृष्टार्थमेव तर्ह्यधिकहोमेऽधिकं मानं किमर्थमुक्तमिति । विपरीतं वा कुतो नोक्तं अदृष्टार्थत्वादेव । तस्मात्त्रैराशिककल्पनापक्ष एव सम्यक् । अयमर्थः कुण्डमार्तण्डटीकायां टीकाकारेण लिखितः । तथाऽऽधुनिकैरपि रामचन्द्रपण्डितैः स्वकृतकुण्डेन्दुग्रन्थे तेषु तेषु रत्न्यादिष्ववधिषु त्रैराशिकानि कृत्वा फलान्यानीय ग्रन्थएव निबद्धानि सन्तीति दिक् ।

हस्तादिपरिभाषामाह—हस्तः स्यादूर्ध्वबाहुरित्यादि। ऊर्ध्वबाहुप्रपदगमखिनः पञ्चमोंऽशो हस्तः स्यादित्यन्वयः। मखी यजमानः मत्वर्थीय इनिः। प्रपदं पादाग्रम्। प्रपदेन गच्छतीति प्रपदगः पादाग्रेण भुवमालम्ब्य उच्छ्रित इत्यर्थः। ऊर्ध्वौ बाहू यस्य स ऊर्ध्वबाहुः। ततः कर्मधारयः। अत्र प्रपदोच्छ्रितस्य समस्थितस्य वा पञ्चमोंऽशो हस्त इति विकल्पः। "यजमानेनोर्ध्वबाहुना प्रपदोच्छ्रितेन समस्थितेन वेति" कात्यायनवचनात्। अत्र क्षेत्रफलसाधने सूक्ष्मत्वानयनादिषु कौशल्यप्रदर्शनमेव ग्रन्थकर्तुर्ग्रन्थकरणे मुख्यं प्रयोजनम्। अन्यत्राविद्यमानत्वात्। इतरत् सर्वं कंचित्पक्षमाश्रित्योक्तं। अतो ग्रन्थान्तरोक्ताः सर्वे विशेषा अत्रानुसंधेयाः। तत्सिद्धांशः अङ्गुलं। सिद्धाश्चतुर्विंशतिः। हस्तचतुर्विंशांशोऽङ्गुलमित्यर्थः। तद्गजांशो यवः। गजा अष्टौ। तस्योरगलवो यूका। उरगा अष्टौ। सा चाष्ट लिक्षा। अष्टौ लिक्षा यस्यां। यूकाष्टमो भागो लिक्षेत्यर्थः। इतोप्यूनं प्रमाणं ग्रन्थान्तरे उक्तमस्ति तदनुपयोगान्न लिखितम्। लिक्षादिप्रमाणं क्षेत्रफलसाधने एवोपयुज्यते न कुण्डकरणे।—"यवादूनं प्रमाणं तु मण्डपादौ न चिन्तयेत्। सूत्रस्याधो विलीयन्ते यूकालिक्षादयः शतम्" इति वचनात्॥ १॥

पद्मिनी—नत्वा परशिवाभिन्नं गुरुं रामेश्वराभिधम्।
गणपं त्रिपुरां वाचं भिकूदेवमपरं गुरुम्॥ १॥
करोति जड्यकृष्णाख्यः कुण्डार्कप्रियपद्मिनीम्।
अस्या रसं तु सरसाः पिबन्तु मधुपा बुधाः॥ २॥

तत्र तावच्चिकीर्षितग्रन्थस्य परिसमाप्त्यर्थमाचारप्राप्तं मङ्गलमाचरन् कुण्डोत्पत्तिं सप्रमाणां तत्साधनार्थं हस्तादिकं स्वस्वप्रमाणं वृत्तेनैकेनाह—भाः विद्यते यस्य स सूर्यः तद्भावं प्राप्तं भास्वन्तं। भ्रमरकीटन्यायेन सूर्याभिन्नमित्यर्थः। एतादृशं नीलकण्ठनामानं पितरं अनुसरन् पार्श्ववर्तित्वेन सेवां कुर्वन्। यद्वा अनुसरन् ध्यायन्। यद्वा पित्रादिना स्वीकृतसंप्रदायमनुसरन्। अनेन शिष्याः स्वसंप्रदायेनैव संचरन्त्विति रूपं ग्रन्थकरणप्रयोजनमपि सिद्धम्। सर्वत्र नम्रत्वेन नत्यात्मकं मङ्गलम्। निबन्धस्तु शिष्यशिक्षार्थमित्यन्यत्र क्षुण्णं। अनुसरन्। शंकरः शंकरनामकः कुण्डं वक्तीत्यन्वयः। कुण्डप्रकारं वक्तीत्यर्थः। कुण्डमित्यनेनास्मिन्ग्रन्थे कुण्डमभिधेयमिति स्पष्टम्।

तेन प्रतिपाद्यप्रतिपादकभावः संबन्धोपि। तत्र जिज्ञासुरधिकारी। वक्ति नाम शिष्यजिज्ञासोत्पत्त्यर्थं शब्दज्ञानविषयं करोतीत्यर्थः। भू १ द्वि २ अब्धि ४ अङ्ग ६ अष्ट ८ हस्तम्। दशानां शतानां समाहारो दशशतं तत्संख्याकं यद्धवनं तस्मादित्यर्थः। दश च तानि शतानि चेति कर्मधारयो वा। यथासंख्यं एकद्विचतुःषट्अष्टहस्तात्मकं स्वस्वगुणिते स्यात्। एकसहस्रे एकहस्तात्मकं एवं सर्वत्र। सहस्रहोमादित्युक्तेपि प्रकृतार्थो लभ्यते, पुनराचार्यैः दशशतमिति गुरुभूतं वाक्यं किमर्थमुक्तमिति चेत् एकांशे गुरुभूतमंशान्तरेऽन्यार्थकं चेद्गौरवं दोषाय न भवति। नच छन्दोनुरोधेन कृतमिति वाच्यम्। खखखकुहवनादित्युक्तेपि तत्सिद्धेः। नच विनिगमनाविरहेणैव कृतमिति वाच्यम्। तस्य दशोत्तरशतमित्यर्थसंभवात्। अत्र पक्षद्वयम्—"उक्तहोमाधिकोने तद्धोमेऽधिकोनमङ्गुलैः। यथोक्तफलभाक्तेन कर्ता स्यादन्यथान्यथे"ति रुद्रप्रसादपरशुरामवाक्यात् दशशतमारभ्यैकोनायुतपर्यन्ते त्रैराशिकेन फलं प्रकल्प्य तत्तद्व्यासेन कुण्डं कार्यम्। एवमयुतमारभ्यैकोनलक्षपर्यन्तमित्यर्थः। त्रैराशिकं तु—"प्रमाणहोमान्तरसंख्यया चेत्क्षेत्रप्रमाणान्तरमाप्यते किम्। पूर्वप्रमाणाहुतितोऽधिकाभिः फलं युतं पूर्वफले तदिष्टम्"। अस्यार्थः—अभीष्टहोमाहुतिसंख्यायाः सकाशात् पूर्वप्रमाणसंख्या उत्तरप्रमाणसंख्या च तयोर्मध्ये यदन्तरसंख्या सा प्रमाणरूपा प्रमाणहोमान्तरसंख्या भवति। तथा पूर्वप्रमाणसंख्यायां यत्कुण्डक्षेत्रफलं उत्तरप्रमाणसंख्यायां यत्कुण्डक्षेत्रफलं च तयोर्यदन्तरं तत्प्रमाणफलरूपं क्षेत्रप्रमाणान्तरं भवति। पूर्वप्रमाणाहुतितः अभीष्टहोमाहुतिपर्यन्तं यदन्तरं तदिच्छारूपपूर्वप्रमाणाहुत्यधिकाहुतयः स्युः। अतोऽनुपातः—यदि प्रमाणरूपया प्रमाणफलरूपमाप्यते तदा इच्छारूपपूर्वप्रमाणाहुत्यधिकाभिः किमिति भास्करोक्तरीत्या यत्फलं लभ्यते तत् पूर्वफले युक्तमिति अभीष्टहोमे क्षेत्रफलं भवति।

भास्करीयगणिते त्रैराशिकसूत्रं—"प्रमाणमिच्छा च समानजाती आद्यान्त्ययोस्तत्फलमन्यजाति। मध्ये तदिच्छाहतमाद्यहृत्स्यादिच्छाफलं व्यस्तविधिर्विलोमे" इति। बालावबोधार्थमुदाहरणम्—अयुते होमे द्विहस्तकुण्डे क्षेत्रफलं ११५२ लक्षहोमे चतुर्हस्ते कुण्डे क्षेत्रफलं २३०४ चत्वारिंशत्सहस्राभीष्टहोमे क्षेत्रफलमानीयते। प्रमाणहोमौ १००००।१००००० प्रमाणहोमान्तरसंख्या ९०००० क्षेत्रप्रमाणे ११५२।२३०४ क्षेत्रप्रमाणांतरसंख्या ११५२

पूर्वप्रमाणसंख्या १०००० अभीष्टहोमसंख्या ४०००० अन्तरमेतयोः ३०००० अनुपातस्थापनम् १००००।११५२।३०००० तदिच्छाहतमित्यनया रीत्या तृतीयराशिना द्वितीयो गुणितः ३४५६०००० प्रथमराशिभक्तः फलं ३८४ इदं फलं पूर्वफले ११५२ योज्यं १५३६ जातं चत्वारिंशत्सहस्रहोमे कुण्डक्षेत्रफलं १५३६ अस्य मूलं ३९।७।२।५ कुण्डविस्तृतिः। एतन्मितचतुर्भिर्भुजैः समचतुरस्रं कुण्डं कार्यमित्यर्थः। एवं स्वाभीष्टवशादनेकविधकुण्डमितिर्भवति। यद्वा षट्सप्तत्युत्तरपञ्चशतानि नवसहस्रैर्भक्तव्यानि ५७६ अयं भाज्यः। ९००० भाजकः। लब्धं ०।०।४।०।६।१।१ अयं गुण्यः। यदा एकसहस्रोपरि एकैवाहुतिस्तदा एकेनैव गुणितश्चेत्तत्तत्क्षेत्रफलं भवतीति लाघवमित्येकः पक्षः। एवं द्विपञ्चाशतोत्तरैकादशशतानि नवतिसहस्रैर्भक्तव्यानि यल्लब्धं भवति तद्दशपर्यन्तं गुण्यं सहस्रोपरिलक्षपर्यन्तमेकादिना गुणितं पूर्वफले योजितं सत् क्षेत्रफलं भवति। एवमुत्तरत्र यथा—भाज्यः ११५२ भाजकः ९०००० लब्धं ०।०।०।६।४।३ इदं दशसहस्रोपरि लक्षम्। अपरस्तु दशशतमारभ्यैकोनायुतान्तं हस्तमात्रमेव। एवं तत्तद्दशन्नेपि। तर्हि गौरवं तदवस्थमिति चेच्छृणु। दशशताद्दशघ्नोत्तरे इत्युच्यमाने तत्प्रागपि कुण्डमानं वर्तत इति सिद्धं, तत्किमित्याकाङ्क्षायां "अनुक्तमपि तद्ग्राह्यं पारक्यमविरोधि यत्"। अयं न्यायोऽविरुद्धपारक्यग्रहणे सर्वत्राचार्यैर्ज्ञापितः। तेन "मुष्टिमानं शतार्धे तु शते चारत्निमात्रकम्। सहस्रे त्वथ होतव्ये कुण्डं कुर्यात्करात्मकं" इत्यादिवचनैर्मुष्टिमानादिग्रहणेऽनुज्ञापितं नतु त्रैराशिकाद्यर्थं गौरवमिति द्वितीयः। मुष्टिमानं कृतमुष्टिहस्त एकविंशत्यङ्गुलात्मकः। एवमरत्निः सार्धद्वाविंशत्यङ्गुलात्मक इति। प्रपदे गतः प्रपदगः ऊर्ध्वबाहुश्चासौ प्रपदगश्च एतादृशमखिनः पञ्चमोंऽशो हस्तः स्यात्। तत्सिद्धांशश्चतुर्विंशत्यंशः अङ्गुलम्। तद्गजांशः अष्टमांशो यवः। तस्य उरगलवः अष्टभागः यूका। यूकाष्टभागो लिक्षा भवतीत्यर्थः। मखी नाम मखविशिष्टः योग्य इति यावत्। तेन ग्रहयज्ञादावधिकारी स एवात्रेति सूचितम्॥ १॥

नौका—आद्यां श्रियं स्वकुलजां समुदीश्वरीं तां
साम्बं शिवं सतनयं च चिरं विचिन्त्य।
कुण्डार्कजार्थकरहान्ध्यघनानिलालीं
टीकां करोमि सुलभां क्रतुकर्मसिद्ध्यै॥ १॥

इह हि खलु सकलविद्वज्जनमुकुटवर्तिरत्नदीपावलिनीराजितचरणः कश्चन भट्टशंकरनामा कुण्डमण्डपरचनायां सुकरोपायं दर्शयितुं कुण्डार्कनामकं ग्रन्थमारभते—**भास्वन्तमिति** । भाः प्रकाशकत्वसाधर्म्याद्बुद्धिः तद्वन्तमित्यर्थः । यद्वा सूर्योपासनासामर्थ्यात्तेजोवृद्ध्याऽपरं भास्वन्तं । सूर्यध्यानबलात्कीटभृङ्गन्यायेन भास्वन्तं प्राप्तं वा । पितरं नीलकण्ठनामानं । यद्वा चकाराध्याहारेण सूर्यं पितरं च अनुसरन् आश्रयन् तद्दर्शितसिद्धान्तज्ञानबलेन समर्थोऽहमिति भावः । सूर्यपक्षे तद्भक्तिजातज्ञानबलेनेत्यर्थः । शंकरभट्टनामा कुण्डं दशविधं साङ्गोपाङ्गं वक्ति ब्रूते । एवं प्रतिज्ञां कृत्वाऽऽदौ **कुण्डमानानि दर्शयति—भूद्वीति** । दशशतहवनात् सहस्राहुतिसंख्याकहोमात् दशघ्नोत्तरे दशभिर्दशभिर्गुणिते उत्तरे कोट्यवधिके होमे तत्कुण्डं क्रमात् भूव्यब्ध्यङ्गाष्टहस्तं एकद्विचतुःषडष्टहस्तं स्यात् । सहस्रे एकहस्तं । अयुते द्विहस्तं । लक्षे चतुःकरं । दशलक्षे षट्करं । कोटावष्टकरं च स्यादित्यर्थः । कोऽसौ हस्त इत्यपेक्षयां **हस्तादिमानमाह—ऊर्ध्वबाह्विति** । ऊर्ध्वमुपर्याकाशे कृतो बाहुर्हस्तो येन तादृशस्य प्रपदगमखिनः पादाग्रेण भूस्थितस्य ग्रन्थान्तरोक्तत्वात्समपादस्थितस्य वा मखिनो यजमानस्य पञ्चमोंऽशः सूत्रेण मानं यत्परिमाणं तत्पञ्चमोंऽश इत्यर्थः । हस्तः हस्तप्रमाणं स्यात् । तत्सिद्धांशस्तस्य चतुर्विंशतितमोंऽशः अङ्गुलं स्यात् । तद्गजांशः तस्याङ्गुलस्याष्टमांशो यवः स्यात् । तस्य यवस्य उरगलवः अष्टमो भागो यूका स्यात् । सा चाष्टलिक्षा स्यात् । यूकाया अष्टमो भागो लिक्षेत्यर्थः ॥ १ ॥

**मिताक्षरा**—श्रीमत्कामेशाङ्कात्कामेश्वर्याः पयोभिलाषां यः ।
शुण्डाग्रेण च दक्षं पयोधरं पीडयन्मुहुर्जयति ॥ १ ॥

प्रारिप्सितस्य ग्रन्थस्य विघ्नविघातपूर्वकं समाप्तिमिच्छुः शिष्टाचरितं मङ्गलं शिष्यशिक्षायै ग्रन्थतो निबध्नन् प्रारिप्सितं प्रतिजानीते—**भास्वन्तमित्यादिना** । अत्र ग्रन्थे पञ्चदशान्यपि वृत्तानि स्रग्धराख्यानि । "स्रग्धरा म्रौभ्नौयौय्त्रिःसप्तकाः" इति तल्लक्षणात् । अथ च भट्टकुलावतंसः शंकरनामा

---

१ तेषु तृतीयं वृत्तं "वृत्तेऽब्जे वलयोऽधिभै" रितीदं "इष्टव्यासमितैर्भुजै" रितीदं च चतुर्दशं वृत्तं शार्दूलविक्रीडितं । तल्लक्षणं "सूर्याश्वैर्मसजास्तताः सगुरवः शार्दूलविक्रीडितम्" इति ज्ञेयम् ॥

भ्रमरकीटन्यायेन सूर्यभावप्राप्तं नीलकण्ठनामकं पितरमनुसरन् तत्कृतसंप्रदायमनुसरन् । कुण्डमिति जात्येकवचनं । तेन चतुरस्राद्यष्टास्रान्तानि कुण्डानि वक्ष्मीत्यर्थः । तानि सहस्रहवनात् तत्तद्दशघ्नोत्तरे भू १ द्वि २ अब्धि ४ अङ्ग ६ अष्ट ८ हस्तं । सहस्रे एकहस्तं । अयुते द्विहस्तं । लक्षे चतुर्हस्तं । दशलक्षे षड्ढस्तं । कोटावष्टहस्तं स्यादित्यर्थः ॥ अथ हस्तादिज्ञानार्थं तत्परिभाषामाह—हस्त इति । ऊर्ध्वौ बाहू यस्यैतादृशः प्रपदेन गच्छतीति प्रपदगश्चासौ मखी यजमानस्तस्य यः पञ्चमोंऽशः स हस्तः । तस्य सिद्धांशश्चतुर्विंशांशोऽङ्गुलं । तस्याङ्गुलस्य गजांशो यवः । तस्य उरगलवोऽष्टमांशो यूका । सा यूका अष्टलिक्षात्मिका । यूकाया अष्टमांशो लिक्षेति फलितोऽर्थः । ननु सहस्रहवनात्पूर्वं किं मानं कुण्डं कर्तव्यमिति चेत् शतादेकोनसहस्रपर्यन्तमरत्निमात्रं कुण्डम् । "मुष्टिमानं शतार्धे स्याच्छते चारत्निमात्रकम् । सहस्रे त्वथ होतव्ये कुण्डं कुर्यात्करात्मकम्" द्विहस्तमयुते तच्च लक्षहोमे चतुःकरम् । दशलक्षमिते होमे षट्करं संप्रचक्षते ॥ अष्टहस्तात्मकं कुण्डं कोटिहोमे तु नाधिकं" इत्यादिवचनैः–पञ्चाशद्धवने रत्निमात्रं । तन्मानमेकविंशत्यङ्गुलात्मकं । पञ्चाशद्धवनादेकोनशतपर्यन्तं रत्निमात्रं । एवं शतादेकोनसहस्रपर्यन्तमरत्निमात्रं । तन्मानं सार्धद्वाविंशत्यङ्गुलात्मकं । सहस्रादेकोनायुतपर्यन्तं हस्तात्मकं । अयुतादेकोनलक्षपर्यन्तं द्विहस्तात्मकं । लक्षादेकोनशतलक्षपर्यन्तं चतुर्हस्तात्मकं । दशलक्षादेकोनकोटिपर्यन्तं षड्ढस्तं । कोटिमारभ्याधिकहवनेऽष्टहस्तमिति भावार्थः । केषांचिन्मते त्रैराशिकरीत्या कुण्डमानमानीय कुण्डं कर्तव्यमिति तत्प्रमाणविरुद्धं शिष्टसंप्रदायविरुद्धमतोऽनाकरम् । जिज्ञासुभिरस्मत्पितृचरणकृतकुण्डार्कपद्मिनीटीकातोऽवगन्तव्यमिति दिक् । कात्यायनशुल्बे "यजमानेनोर्ध्ववाहुना प्रपदोच्छ्रितेन समस्थितेन वे" त्यादि । आदित्यपुराणे—त्रसरेण्वादि प्रकृत्य—"वालाग्रमष्टलिक्षा तु यूका लिक्षाष्टकं स्मृतम् । अष्टौ यूका यवः प्राहुरङ्गुलं तु यवाष्टकं" इति । चतुर्विंशत्यङ्गुलको हस्त इति । "हस्तोऽङ्गुलैः षड्गुणितैश्चतुर्भि"रिति लीलावती ॥ १ ॥

श्रीशः शरणम् ।

सुप्रभा—प्रारम्भे कुलदेवतामिह महालक्ष्मीयुतां रेणुकां
भक्ताभीष्टकरीं मतिस्मृतियशोऽर्थायुःपरानन्ददाम् ।

प्रत्यूहौघविदारणक्षममथो द्वैमातुरं शारदां
सूर्यं शुक्लयजुःप्रवर्तकमृषिं श्रीयाज्ञवल्क्यं नुमः ॥ १ ॥
अज्ञानवार्धिं परिशुष्य यन्मे ज्ञानं ददावाश्रुतितत्रयुग्मम् ।
यत्क्षोणिवृन्दारकवृन्दवन्द्यं नित्यं नमामो गुरुमण्डलं तत् ॥ २ ॥
ॐ नमः श्रीमत्सद्गुरुहृदयानन्दसरस्वतीचरणकमलेभ्यः ।
पुराण इत्येव न सर्वविस्त्यान्नव्यो गुणी ज्ञः किमु नार्चनीयः ।
चेदस्ति नव्येऽपि हि दोषलेशो नोपास्यते धूमयुतः किमग्निः ॥ ३ ॥
कुण्डग्रन्थाननेकांश्च तट्टीकाश्चाप्यनेकशः ।
शुल्बसूत्रं सभाष्यं च तत्प्रयोगान्बहूनपि ॥ ४ ॥
आलोच्य क्रियते टीका नव्या कुण्डार्कसुप्रभा ।
बालानां सुखबोधाय नामूला नानपेक्षिता ॥ ५ ॥

इह खलु सकलविद्वद्वरिष्ठो भट्टनीलकण्ठसूरिसूनुः श्रीशंकरसूरिश्चिकीर्षित-ग्रन्थपरिसमाप्तिफलकं विशिष्टशिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकं स्वेष्ट-देवतानुस्मृतिरूपं मङ्गलं शिष्यशिक्षार्थमादौ निबध्नन् कुण्डमण्डपनिर्मितौ सुकरोपायमुपपत्तिप्रधानं शुल्बसूत्रानुसारिणं कुण्डार्कनामानं ग्रन्थं कर्तुं प्रतिजानीते—भास्वन्तमिति । भाः शोभा । मौलौ शशिगङ्गयोर्विधारणं । बाह्वोः सर्पविधृतिः । गजचर्मोत्तरीयत्वं । वामाङ्गे गौरीस्थितिः । वृषारूढत्वं । इत्यादिना विचित्रा शोभा तद्वन्तमित्यर्थः । यद्वा परमज्योतिःस्वरूपम् । "भीषाऽस्माद्वातः पवते । भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च । मृत्यु-र्धावति पञ्चमः" इत्यादिश्रुतेः । भक्ताभीष्टकरत्वेन जगत्पालकत्वात्पितरं । नीलकण्ठं शंकरं कायवाङ्मनोव्यापारेण । अनुसरन् ध्यायन्नाश्रयन्वा । इत्येकः पक्षः । अथवा नीलः पर्वतः "नीलो वर्णे मणौ शैले निधिवान-रभेदयो"रिति हैमात् । कण्ठः सामीप्यं । "समीपगलशब्देषु त्रिषु कण्ठं विदुर्बुधाः" इति शाश्वतात् । नीलः पर्वतः कण्ठे समीपे यस्य तादृशं । अस्तोदयव्यवहारत्व इति यावत् । तिमिरविध्वंसनद्वारा जगत्प्रबोधकत्वेन तत्तत्कर्मप्रवृत्तिजनकतया जगत्पालनात्पितरं । भास्वन्तं श्रीसूर्यं । अनुसरन्निति प्राग्वत् । इति द्वितीयः पक्षः । अथवा भाः कान्तिर्विद्यते यस्य तद्वन्तं सूर्यं । कीटभृङ्गन्यायेन तद्भावं प्राप्तं । सूर्याभिन्नमित्यर्थः । "ब्रह्मविद् ब्रह्मैव

भवति", "यो यच्छ्रद्धः स एव सः" इत्यादिश्रुतिस्मृतिभ्यः । यद्वा भाः प्रकाशकत्वसाधर्म्याद्बुद्धिः । तद्वन्तमित्यर्थः । एतेनास्मिन् शास्त्रे केवलं ग्रान्थिकज्ञानमकिंचित्करं । किंत्वेतच्छास्त्रप्रतिपित्सुना ग्रान्थिकज्ञानेन सह मूलप्रमाणाविरोधि युक्तिमत्त्वमप्यनुसंधेयमिति सूचितं भवति । स्मर्यते चाप्येतत्—"आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना । यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः" इति । शुल्बेऽपि—"योगश्च" कं. १ । सू. २५ इत्यनेन सूत्रेण युक्तिमता भाव्यमिति प्रतिपादितमिति । यद्वा भाः अनेकग्रन्थकर्तृत्वजन्ययशोरूपं बलं तद्वन्तमित्यर्थः । नीलकण्ठमेतत्संज्ञकं पितरं पाति गर्भे दौहृदपूरणादिना तं स्वकं जनकं । अनुसरन् निकटवर्तित्वेन सेवां कुर्वन् । यद्वा पितृपैतामहक्रमागतसंप्रदायपुरःसरन् । एतेन पुरस्तादुच्यमानो ग्रन्थार्थः संप्रदायविशुद्धोऽस्तीति द्योतयित्वा मामकीनाश्छात्रा अप्यमुमेव संप्रदायमङ्गीकुर्वन्त्विति ग्रन्थकरणप्रयोजनमपि दर्शितमिति तृतीयः पक्षः । अथवा भास्वन्तं सूर्यं स्वकुलेष्टदेवतां । नीलकण्ठं शिवं स्वोपास्यदेवतां । पितरं स्वजनकं । अनुसरन्नेतच्छुश्रूषया समधिगतसिद्धान्तज्ञानबलसमृद्धिमाश्रयन् । इति चतुर्थः पक्षः । शंकरः । ग्रन्थकर्तुरियं संज्ञा । भट्टशंकरनामा । कुण्डमित्युपलक्षणं । तेन कुण्डं मण्डपं चेत्यर्थो निष्पद्यते । तद्गतमेकत्वं तु जात्यभिप्रायम् । तेन साङ्गोपाङ्गं दशविधं कुण्डजातं मण्डपजातं च । एतेन प्रतिपाद्यो विषयः संबन्धश्च द्योतितः । अधिकारी त्वेतच्छास्त्रजिज्ञासुरित्युन्नेतुं सुशक इति न ध्वनितः । एवं ग्रन्थे प्रेक्षावत्प्रवृत्त्यौपयिकमनुबन्धचतुष्टयं प्रतिपाद्यादौ कुण्डपरिमाणान्याह—भूद्वीति । दशानां शतानां समाहारो दशशतं इति समाहारद्वन्द्वः । दश च तानि शतानि च दशशतं इति कर्मधारयो वा । सहस्रमित्यर्थः । तत्संख्याकं यद्धवनं होमस्तस्मात् ल्यब्लोपेयं पञ्चमी श्वशुराज्जिहेतीतिवत् । तेन सहस्रहोममारभ्येत्यर्थो भवति । दशघ्नोत्तरे दशभिर्हते गुणिते उत्तरे कोट्यवधिके होमे । स्वस्वदशगुणिते होमे इति यावत् । गणितशास्त्रे हन्तेर्गुणाकारप्रत्यायकत्वं प्रसिद्धं । भूद्व्यब्ध्यङ्गाष्टहस्तं । अत्र भ्वाद्यष्टान्तशब्दैः क्रमादेकद्विचतुःषडष्टसंख्याङ्का गृह्यन्ते । तेषु प्रत्येकं हस्तपदमन्वेति । द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यते इति न्यायात् । अत्रागमिष्यमाणानां भ्वादिशब्दानां मुख्यार्थस्य परिबाधितत्वाल्लक्षणया तत्तदङ्करूपोऽर्थो ज्योतिःशास्त्रसंकेततो

लोकव्यवहारतश्च ग्राह्यः । यथा भुव एकत्वाद्भूशब्देनैका संख्या । अब्धेर्दिगुपाधिना चतुःसंख्याकत्वादब्धिशब्देन चत्वारोऽङ्काः । अङ्गानां शिक्षादिवेदाङ्गानां षट्त्वादङ्गशब्देन षडङ्का गृहीता इति । एवमग्रेपि यथासंख्यं । एकद्विचतुःषडष्टहस्तात्मकं तत् कुण्डं स्याद्भवेत् । तेन सहस्रहोमे एकहस्तं । दशसहस्रहोमे द्विहस्तं । लक्षहोमे चतुर्हस्तं । दशलक्षहोमे षड्ढस्तं । कोटिहोमेऽष्टहस्तं । कुण्डं भवतीति समुदायार्थः । अत्र दशशतहवनादिति पञ्चम्याः प्रयोगत एवं ज्ञायते यदुक्तसंख्याककुण्डानां पूर्वसंख्याककुण्डानि सन्तीति । तेषामप्यत्रोक्तसंख्याककुण्डानि उपलक्षणं मत्वा संग्रहोऽवश्यकतया कर्तव्यः । स यथा भविष्ये—"मुष्टिमानं शतार्धे तु शते चारत्निमात्रकम् । सहस्रे त्वथ होतव्ये कुण्डं कुर्यात्करात्मकम् ॥ द्विहस्तमयुते तच्च लक्षहोमे चतुःकरम् । दशलक्षमिते होमे षट्करं संप्रचक्षते ॥ अष्टहस्तात्मकं कुण्डं कोटिहोमे तु नाधिक"मिति । यच्च शारदातिलके—"दशहस्तमितं कुण्डं कोटिहोमे प्रशस्यते" । यच्च स्कान्दे—"कोटिहोमे चतुर्हस्तं चतुरस्रं समन्ततः" इति । कोटिहोममधिकृत्योक्तं भिन्नं भिन्नं मानं सूक्ष्मस्थूलद्रव्यविषयं वैकानेककर्तृकबहुल्पदिनसाध्यविषयं वा यथायथं बोध्यं । यच्च शारदातिलके—"एकहस्तमितं कुण्डमेकलक्षे विधीयते । लक्षाणां दशकं यावत्तावद्धस्तेन वर्धयेत्" ॥ यच्च तन्त्रान्तरे—"केचिद्धस्तं लक्षहोमे द्विहस्तं लक्षद्वन्द्वे वह्निहस्तं त्रिलक्षे । होमे कुण्डं वेदलक्षेऽब्धिहस्तं प्राहुर्दोष्णां पञ्चकं पञ्चलक्षे ॥ रसकरं रसलक्षे सप्तहस्तं सप्तलक्षे । वसुलक्षे वसुहस्तं नवलक्षे नवहस्तकं कुण्डम् ॥ दशलक्षे दशहस्तं दशकरमेवेह कोटिहोमेपि । दशहस्तान्नहि कुण्डं परमस्ति महीतलेऽमुष्मि"न्निति । यच्च सिद्धान्तशेखरे—"लक्षार्धे त्रिकरं कुण्डं लक्षहोमे चतुःकरम् । कुण्डं पञ्चकरं प्रोक्तं दशलक्षाहुतौ क्रमात् ॥ षड्ढस्तं लक्षविंशत्यां कोट्यर्धे सप्तहस्तकम्" इति । एतदपि सूक्ष्मस्थूलत्वरितमन्ददाहिद्रव्यविषयं बोध्यं । अत्र मुष्टिमानं शतार्धे इत्यादौ शतार्धादिशब्दोत्तरश्रुतनिमित्तसप्तम्याः स्वस्वप्रकृत्यर्थघटिते शतार्धप्रभृत्याद्यर्थे लक्षणा । नतु स्वस्वप्रकृत्यर्थावधिकेऽर्थे । लक्षितस्य शतार्धावधिकस्यार्थस्यैकादौ प्रयोगाभावात् । अत्र शतार्धावधिके होमे कर्तव्ये तु कथमित्याकाङ्क्षायां नैराकाङ्क्ष्यमप्याहुः । तदुक्तं वसिष्ठसंहितायां—"इषुमात्रं स्थण्डिलं स्यात्संक्षिप्ते होमकर्मणि । इषुस्तु सार्धसप्तषष्ट्यङ्गुलात्मक" इति कुण्डोद्योतटीकायां । संक्षिप्ते पञ्चा-

शदाहुतेरर्वाक् । तन्त्रान्तरे—"पञ्चाशदाहुतेरर्वाग्घोमः स्थण्डिल इष्यते"। शारदातिलके—"नित्यं नैमित्तिकं होमं स्थण्डिले वा समाचरेत् । हस्तमात्रेण तत्कुर्याद्वालुकाभिः सुशोभनम् ॥ अङ्गुलोत्सेधसंयुक्तं चतुरस्रं समंततः" इति । अत्र स्थण्डिले वेति विकल्पः कुण्डेन सह नतु स्वेन सह। तेनैकादिपञ्चाशदाहुतिपर्यन्तं स्थण्डिलं । पञ्चाशदाहुतिमारभ्य नवनवाहुतिपर्यन्तं रत्निमात्रं । शताद्येकोनसहस्रपर्यन्तमरत्निमात्रं । सहस्राद्येकोनदशसहस्रपर्यन्तमेकहस्तं । अयुताद्येकोनलक्षपर्यन्तं द्विहस्तं । लक्षाद्येकोनदशलक्षपर्यन्तं चतुर्हस्तं । दशलक्षाद्येकोनकोटिपर्यन्तं षड्ढस्तं । कोटिमारभ्योत्तरहोमेऽष्टहस्तं । रत्न्यरत्निपरिमाणं तु कुण्डोद्योते—"सार्धाङ्गुलोनोऽरत्निः स्यात्स रत्निरुय्यङ्गुलाल्पकः" इति । एकविंशत्यङ्गुलात्मको हस्तो रत्निः । सार्धद्वाविंशत्यङ्गुलात्मको हस्तोऽरत्निरित्यर्थः । पक्षान्तरे—कोटिहोममारभ्योत्तरहोमे दशहस्तं षोडशहस्तं वा कुण्डं भवति । पक्षान्तरे—लक्षाद्येकोनद्विलक्षपर्यन्तमेकहस्तं । द्विलक्षाद्येकोनत्रिलक्षपर्यन्तं द्विहस्तं । त्रिलक्षाद्येकोनचतुर्लक्षपर्यन्तं त्रिहस्तं । चतुर्लक्षाद्येकोनपञ्चलक्षपर्यन्तं चतुर्हस्तं । पञ्चलक्षाद्येकोनषड्लक्षपर्यन्तं पञ्चहस्तं । षड्लक्षाद्येकोनसप्तलक्षपर्यन्तं षड्ढस्तं । सप्तलक्षाद्येकोनाष्टलक्षपर्यन्तं सप्तहस्तं । अष्टलक्षाद्येकोननवलक्षपर्यन्तमष्टहस्तं । नवलक्षाद्येकोनदशलक्षपर्यन्तं नवहस्तं । दशलक्षे कोटावपि च दशहस्तमेव कुण्डं भवति । पक्षान्तरे—पञ्चाशत्सहस्रहोममारभ्यैकोनलक्षपर्यन्तं त्रिहस्तं । लक्षाद्येकोनदशलक्षपर्यन्तं चतुर्हस्तं । दशलक्षाद्येकोनविंशतिलक्षनवनवतिसहस्रनवशतनवनवत्याहुतिपर्यन्तं पञ्चहस्तं विंशतिलक्षाद्येकोनपञ्चाशल्लक्षनवनवतिसहस्रनवशतनवनवतिपर्यन्तं षड्ढस्तं । पञ्चाशल्लक्षहोममारभ्योत्तरहोमे सप्तहस्तं कुण्डं भवति। अत्र सर्वत्र मूलं शारदातिलके कोटिहोमपद्धतौ च—"न्यूनसंख्योदिते कुण्डेऽधिको होमो विधीयते । अनुक्तकुण्डे होमस्तु नाधिकः शस्यते क्वचित्" इति । अत्र केचन पक्षद्वयं कुर्वन्ति । एकस्त्रैराशिकपक्षः अपरो वाचनिकपक्षः । वाचनिकपक्षस्त्वनुपदमेवोक्तः । इदानीं त्रैराशिकपक्षोऽनूद्यते। यथा—"अर्थात्परिमाण" मिति कात्यायनवचनस्वरसाद्यथा यथा होमो वृद्धिमापद्येत तथा तथा कुण्डमपि त्रैराशिकपरिपाट्या क्षेत्रफलमानीय वर्धनीयम् । तथाच रुद्रप्रसादे—"उक्तहोमाधिकोने तद्धोमेऽधिकोनमङ्गुलैः। यथोक्तफलभाक्तेन कर्ता स्यादन्यथाऽन्यथे" ति । विश्वकर्मापि—"आदौ

कुण्डं समुत्पाद्यमाहुतीनां यथोदितं। एतन्मध्ये विभागं यत्सर्वं तदनुपाततः" इति। तथा कुण्डकल्पद्रुमेऽपि—"प्रमाणहोमान्तरसंख्यया चेत्क्षेत्रप्रमाणान्तरमाप्यते किम्। पूर्वप्रमाणाहुतितोऽधिकाभिः फलं युतं पूर्वफले तदिष्टम्" इति। भास्करीये व्यक्तगणिते—"प्रमाणमिच्छा च समानजाती आद्यान्त्ययोस्तत्फलमन्यजाति। मध्ये तदिच्छाहतमाद्यहृत्स्यादिच्छाफलं व्यस्तविधिर्विलोमे" इति। इयमत्र स्पष्टप्रतिपत्तिः—त्रयाणां राशीनां संख्यासमूहानां समाहारो यत्र तत्तादृशं त्रैराशिकं। तच्च द्विधा समस्तं व्यस्तं च। समविषमभेदादित्यर्थः। तस्मिन्नुभयविधेऽपि त्रैराशिके भागद्वयं प्रश्नोत्तरात्मकं। तत्र प्रश्नात्मको भागो राशित्रयरूपशब्दनिष्ठः। उत्तरात्मको भागश्चोत्तरलभ्यचतुर्थराशिरूपार्थनिष्ठः। तत्र प्रथमपद्येन प्रश्नस्वरूपमुपन्यस्तं। द्वितीयपद्येन उत्तरानयनरीतिस्वरूपमुपन्यस्तं। इष्टहोमापेक्षया पूर्वप्रमाणहोमसंख्योत्तरप्रमाणहोमसंख्या च तयोरन्तरभूता संख्या प्रमाणहोमान्तरसंख्योच्यते तया। इष्टहोमक्षेत्रप्रमाणापेक्षया पूर्वोत्तरहोमप्रमाणक्षेत्रे तयोरन्तरभूता संख्या क्षेत्रप्रमाणान्तरसंख्योच्यते। तत्क्षेत्रप्रमाणान्तरमाप्यते चेल्लभ्यते यदि तदा इष्टहोमापेक्षया पूर्वभूता या आहुतयस्ताभ्यः सकाशात् अधिकाभिः पूर्वप्रमाणाहुतीनामुपरि वर्धिताभिरिष्टाहुतिभिः। तदिष्टाहुतिहोमपर्यन्तमित्यर्थः। किमिति प्रश्नार्थको निपातः। कियत्परिमाणं क्षेत्रमित्यर्थः। भास्करीयरीत्या फलमानीयेतिशेषः। तत्फलं पूर्वफले पूर्वप्रमाणहोमक्षेत्रफले युतं संगतं सत् इष्टफलं इष्टहोमस्य क्षेत्रफलं भवतीति। भास्करोक्तरीतिश्चेत्थं। तत्र प्रागुक्तप्रमाणहोमेच्छाहोमौ समानजाती एकजाती तयोः प्रमाणेच्छाहोमयोर्मानरूपैकजातिमत्त्वमस्ति। तथा आद्यान्त्ययोः प्रथमचरमयोः प्रमाणहोमयोर्यत्क्षेत्रफलं तत् अन्यजाति भिन्नजाति। तस्योत्तरत्वेन संपत्स्यमानेच्छाक्षेत्रफलजातिसमानत्वमित्यर्थः। प्रथमः प्रमाणान्तरसंख्यारूपो राशिः। द्वितीयस्तत्क्षेत्रफलान्तरसंख्यारूपो राशिः। तृतीयः प्रमाणेष्टहोमान्तरसंख्यारूपो राशिः। एवंरूपराशित्रयमध्ये। यत्। यदिति सर्वनाम्ना मध्यगतो द्वितीयराशिः। इच्छया तृतीयराशिना हतो गुणितः। आद्येन प्रथमेन राशिना हृत् हृतो भक्त इत्यर्थः। लब्धमिति शेषः। फलं पूर्वफले संयोज्य जातं फलं इष्टहोमक्षेत्रफलं भवति। अयं विधिः समे। विलोमे

विषमे तु व्यस्तविधिः । प्रथमराशिस्तृतीयराशिना गुणयित्वा द्वितीयराशिना विभजितव्य इति विशेषः । बालबोधार्थमुदाहरणम्—पूर्वप्रमाणहोमः १००० । उत्तरप्रमाणहोमः १०००० । अनयोरन्तरं ९००० । पूर्वप्रमाणहोमक्षेत्रफलं ५७६ । उत्तरप्रमाणहोमक्षेत्रफलं ११५२ । अनयोरन्तरं ५७६ । पूर्वप्रमाणहोमः १००० । इष्टहोमः ७००० । अनयोरन्तरं ६००० । ततो न्यासः । प्रथमराशिः ९००० । द्वितीयराशिः ५७६ । तृतीयराशिः ६००० । तृतीयराशिना ६००० मध्यमराशि ५७६ गुणितः । जातो गुणाकारः ३४५६००० । अयं गुणाकारः प्रथमराशिना ९००० भक्तः । लब्धो भागाकारः ३८४ अयं पूर्वप्रमाणहोमक्षेत्रफले संयोज्य जातो वर्गः ९६० । अस्य मूलं ३० अं. ७ य. ७ यू. । अयं इष्टहोम ७००० कुण्डन्यासो ज्ञेयः । एतन्मितवृत्तकुण्डानिकार्याणि । एवमिष्टहोमसकाशाद्भिन्नभिन्नक्षेत्रफलकानां कुण्डानां करणमुन्नेयं भवतीति ॥ अत्रोभयेऽपि परस्परं विवदन्ते तन्निर्णीतिश्चावश्यकी तदर्थमिदमुच्यते । तत्र द्वयोरपि वाचनिकत्रैराशिकपक्षयोर्मध्ये त्रैराशिकपक्षः साधीयान् । तथाहि—क्षेत्रमानस्य होमरूपदृष्टप्रयोजनवत्त्वेन यावता क्षेत्रमानेनाऽभीष्टहोमनिर्वृत्तिः संपद्यते तावदेव क्षेत्रमानं समुपादातुं समुचितं नाधिकं । अपिच "अर्थात्परिमाण" मिति कात्यायनवचनानुग्रहाच्च । अन्यथा—"मानहीने महाव्याधिरधिके शत्रुवर्धनम् । अनेकदोषदं कुण्डमत्र न्यूनाधिकं यदि । तस्मात्सम्यक् परीक्ष्यैव कर्तव्यं शुभमिच्छता" इति सिद्धान्तशेखरे वसिष्ठसंहिताद्युक्तदोषापत्तेः । नच "सहस्रे हस्तं स्यात्" इत्यादिनोक्तं वाचनिकमानमप्रमाणं भवेत् तस्य त्रैराशिकोपपत्तिविरहेणादृष्टार्थत्वादिति वाच्यम् । तस्य वैयर्थ्यान्यथानुपपत्त्या यावद्वाचनिकं प्रमाणमिति न्यायाच्चागतिकगत्या तावन्मात्रहोमेऽङ्गीकृतत्वादिति । नाप्यदृष्टार्थत्वं । दृष्टे संभवत्यदृष्टफलकल्पनाया अन्याय्यत्वात् । यतोऽत्र न्यूनहोमे न्यूनं मानमधिकहोमेऽधिकं मानमुक्तं सर्वैरपि तत्तत्रविद्भिरिति संक्षेपः । तथाचायमेव पक्षः प्राचीनैः कुण्डमार्तण्डटीकाकृत्कल्पद्रुमकारैरर्वाचीनैः कुण्डेन्दुकृत्—कुण्डार्कदीधितिकार—कुण्डार्कोदयकारैश्च सममानीति चेदत्र ब्रूमः । वाचनिकपक्ष एवादरपदवीमारोहति । तथाहि । यद्यपि क्षेत्रमानस्य होमाभिनिर्वृत्तिरूपदृष्टप्रयोजनं संभवति तदङ्गीक्रियते चापि । तथापि तावता त्रैराशिकपक्षो न सेत्स्यति । कुतस्त्रैराशिकस्य भविष्यपुराणादिषु शारदातिलकादि-

तन्त्रेषु शुल्बसूत्रादिषु चानुक्तत्वेन तन्मूलस्य विचिन्त्यमानत्वात् । प्रत्युत— "न्यूनसंख्योदिते कुण्डेऽधिको होमो विधीयते । अनुक्तकुण्डे होमस्तु नाधिकः शस्यते क्वचित्" इत्यादिमूलवचनविरुद्धत्वात् । नच "अर्थात्परिमाण"मिति कातीयं वचो मूलमिति वाच्यं । तस्यानारभ्यपठितत्वेनानुक्तपरिमाणमण्डपशिखरारोपणादि–स्रुक्स्रुवादिपात्रादिविषयत्वस्य तद्व्याख्यावसरे कर्कादिभाष्यकारैः सुस्फुटतरं प्रतिपादितत्वात् । ननु सहस्रायुताद्यन्तरालगतसंख्यास्वनुक्ताः अतस्तासु त्रैराशिकप्रसक्तिरिति चेन्न । तासामपि संख्यानां "शतार्धे रत्निः स्या"दित्यत्रत्यशतार्धादिशब्दोत्तरश्रुतनिमित्तसप्तमीश्रुत्यैवोक्तत्वादिति । तच्चानुपदमेवोक्तं । सहस्रे हस्तमात्रमयुते द्विहस्तं कुण्डं विदधतामृषीणामभिप्रायाच्च । यत्तु कुण्डार्कदीधितौ शिवरामोपाध्यायैरुक्तं–"उक्तसंख्यायां मानानि किमर्थं तर्हि उक्तानि? त्रैराशिककल्पनायां प्रमाणप्राप्त्यर्थं" इत्यादि, तन्न समञ्जसम् । उक्तसंख्यायामुक्तमानानां वोक्तसंख्याद्वयान्तरालसंख्यायां मानस्य प्राप्तिर्न त्रैराशिककल्पनया किंतु प्रकारान्तरेण ।

स प्रकारः कुण्डमरीचिमालायां विष्णुना प्रदर्शितः–"पञ्चाशन्मित एकविंशतिमितं कुण्डं शते रत्निकं यूकानां त्रितयं यवः प्रतिशतं वृद्धिः क्रमादीरिता । कुण्डं हस्तमितं सहस्रकमिते तस्मिन्छते यूकिकावृद्धिः सप्तसहस्रकेऽङ्गुलमिता यूका तु षड्भिर्मिता ॥ १ ॥ एवं वेदगुणाङ्गुलं वियवकं कुण्डं तु होमायुते साहस्रे त्रियवः सपादयवका खं वालकाग्रत्रयं । एवं प्रत्युतेऽङ्गुलं युगयवा यूकाश्चतस्रस्तथा लक्षे वेदकरं बुधैर्निगदितं वालादिसाहस्रके ॥ २ ॥ षड्लिक्षाह्ययुते द्वितर्कमितयो लिक्षाहिलक्षेऽङ्गुलं यूकाः पञ्च यवः सदा प्रयुतके कुण्डं भवेत्षट्करम् । वृद्धिः स्यात्प्रयुतादथो ह्ययुतके वालाग्रषट्कं भवेल्लक्षे पर्वतलिक्षका दशगुणो वृद्धिर्यवो यूकिका ॥ ३ ॥ कोटावष्टकरं क्रमान्निगदितं लक्षेऽलकाग्रत्रयं यूकार्धं प्रयुते यवस्तदपरं कोटौ शरा यूकिकाः । कोटीनां शतकेऽङ्गपर्वतमितं न्यूनं यवेनाह तत्कुण्डं कोटिहुतौ तथा प्रयुतके स्यात्स्थूलहोमादिषु ॥ ४ ॥" इति । अस्यार्थः—पञ्चाशत्प्रमिते ५० होमे रत्निः २१ अं० । शते १०० अरत्निः २२ अं० । ४ यवाः । शतादुपरि प्रतिशतं एको यवः १ यूकात्रयं ३ । एवं सहस्रे हस्तमात्रं २४ अं० । सहस्रादुपरि प्रतिशतं सप्तयूका ७ वृद्धिः प्रतिसहस्रेऽङ्गुलं १ यूकाषट्कं

६ एवमयुते यवोनं द्विहस्तं । ३३ अं० ७ य० । अयुतादुपरि प्रतिसहस्रमेको यवः २१ द्वे यूके २ शून्यं लिक्षा० वालाग्रत्रयं ३ एवं लक्षे चतुर्हस्तं ४८ अं० । लक्षादुपरि प्रतिसहस्रं लिक्षाषट्कं ६ वालाग्रमेकं १ प्रत्ययुते सप्तयूका ७ लिक्षाः पञ्च ५ प्रतिलक्षमङ्गुलमेकं १ एको यवः १ यूकाः पञ्च ५ । एवं दशलक्षे षड्ढस्तं ५८ अं० ६ य० । प्रयुतादुपरि प्रत्ययुतं वालाग्रषट्कं ६ प्रतिलक्षं लिक्षासप्तकं ७ प्रतिदशलक्षमेको यवः १ एका यूका १ । एवं कोटावष्टहस्तं ६८ अं० ७ य० । कोटेरुपरि वालाग्रत्रयं ३ प्रयुते दशलक्षे यूकार्धं लिक्षाचतुष्टयमित्यर्थः । प्रतिकोटौ पञ्चयूकाः ५ एवं शतकोटौ यवोनं दशहस्तं ७५ अं० ७ य० कुण्डं भवतीति । प्रकृतोदाहरणे त्वनया रीत्या क्षेत्रे वर्धिते ३० अं० ४ य० ४ यू० । त्रैराशिकेन तु० ३० अं० ७ य० ७ यू० । एतन्मितं कुण्डं भवति । स्पष्टमनयोर्वर्धनरीत्योर्वैषम्यम् । तत्र यदि वर्धनमेवापेक्षते तदा मरीचिमालोक्ता रीतिरेव समाश्रयणीया । तस्या उक्तसंख्यानुगामित्वात् । वस्तुतस्तु इयमपि रीतिः पदेपदे किंचित्किंचित्प्रस्खलति । अतो वर्धनापेक्षा न वाचनिकपक्षस्येति सुधियो विभावयन्तु । नच "मानहीने महाव्याधि"रित्यादिनोक्तदोषापत्तिस्तदवस्थेति वाच्यम् । तस्या उभयत्र समानत्वात् । उक्तमानप्रातिकूल्येन करणे दोषः । उक्तमानानुकूल्येन करणे तु न दोष इति । यच्चादृष्टार्थत्वं न संभवतीति प्रतिपादितं तत्रैवमुच्यते । यद्यपि क्षेत्रमानं होमनिष्पत्तिरूपदृष्टफलकं तथापि एतावति होमे एतावदेव क्षेत्रमानमिति निमित्तसप्तमीश्रुत्युक्तो यो नियमस्तज्जन्यमदृष्टं दुर्निवारम् । किंच कुण्डार्कपद्मिनीकारैरपि न सममान्ययं त्रैराशिकपक्षः । यतस्ते—अत्र पक्षद्वयमित्युपक्रम्य पूर्वं त्रैराशिकपक्षं कथयित्वा पश्चादपरस्तु इत्यादिना वाचनिकपक्षं प्रोचुस्तत एतत्स्पष्टं भवति । अत एव तत्परंपराधिगतकुण्डरहस्यैः कुण्डरत्नावलीकारैरेवं प्रत्यपादि । यत्—"उक्तेषु पक्षेष्वधिकोनकेषु त्रैराशिकेनैव विधेयमेतत् । कल्पद्रुरेवं निजगाद युक्तं नेतीति चान्ये कथयन्ति सन्तः" इति । किंच कुण्डार्ककृत्पितृचरणैर्भट्टनीलकण्ठैः स्वीयकुण्डोद्योते त्रैराशिकस्य नामापि नोल्लिखितं । तथा प्रकृतग्रन्थकृतां तत्तनयानां भट्टशंकराणामयं त्रैराशिकपक्षो न संमतः । यतस्ते पितृकृतकुण्डोद्योते टीकां कर्तुं प्रवृत्ताः सन्तः "केचित्त्वान्तरिकसंख्यायां त्रैराशिकेन कुण्डकरणमाहुः । पञ्चाशदाहुतौ चैकविंशतिरङ्गुलो व्यासो वाचनिकस्तत्र मुक्त्वाऽऽन्तरालिक-

संख्यायामेयं त्रैराशिक्यं। यदि पञ्चाशदपेक्षया पञ्चाशदाहुतिवृद्धौ सार्धाङ्गुलवृद्धिः तदा पञ्चविंशत्याहुतिवृद्धौ कियती वृद्धिः" इति । केचित्पदेनोपक्रमं कृत्वा त्रैराशिकपक्षं लिखितवन्त इति । किंच त्रैराशिकेन कुण्डकरणे यावतीनामाहुतीनां क्षेत्रमानं समुत्पद्यते तावतीनामेवाहुतीनांप्रक्षेपो भवेन्नाधिकानां न न्यूनानामिति तत्सिद्धान्तः। कर्मकाले तु यदि कदाचिद्दैविकसंकटतो वा मानुषापराधतो वा प्रायश्चित्ताहुतीनां संप्राप्तिस्तदा तासां क प्रक्षेपः। न कुण्डादौ नाप्यग्न्यन्तरे। एकस्मिन्कर्मण्यग्निद्वयाप्रसक्तेः। अतएव सर्वैरपि शास्त्रकारैश्चतुःपञ्चसप्तनवकुण्ड्यादावाचार्यकुण्डादग्निं प्रणयेदित्युक्तं संगच्छते । वाचनिकपक्षे तु सर्वं समञ्जसं भवत्यतः स एव श्रेयानित्यलं प्राचीनानां मान्यानामुपर्यधिक्षेपेणेति ॥ ततो विन्यासः ॥

| | हवनसंख्या | कुंडहस्तादि | हवनसंख्या | कुंडहस्तादि |
|---|---|---|---|---|
| प्रथमकोष्ठकम् | ५० हवने | रत्निः २१ अं. | १०००००० होमे | ६ षड्ढस्तं |
| | १०० हवने | अरत्निः २२॥ अं. | १००००००० होमे | ८ अष्टहस्तं |
| | १००० हवने | एकहस्तं १ | पक्षान्तरे | मानं |
| | १०००० हवने | द्विहस्तं २ | १००००००० होमे | दशहस्तं १० |
| | १००००० हवने | चतुर्हस्तं ४ | १००००००० होमे | षो. हस्तं १६ |
| द्वितीयकोष्ठकम् | १००००० होमे | १ एकहस्तं | ७००००० होमे | ७ सप्तहस्तं |
| | २००००० होमे | २ द्विहस्तं | ८००००० होमे | ८ अष्टहस्तं |
| | ३००००० होमे | ३ त्रिहस्तं | ९००००० होमे | ९ नवहस्तं |
| | ४००००० होमे | ४ चतुर्हस्तं | १०००००० होमे | १० दशहस्तं |
| | ५००००० होमे | ५ पञ्चहस्तं | इदमपि पक्षान्तरे | |
| | ६००००० होमे | ६ षड्ढस्तं | मानमुक्तम् | |
| तृतीयकोष्ठकम् | हवनसंख्या | कुंडहस्तादि | इदमप्येकं पक्षान्तरे | |
| | ५०००० होमे | ३ त्रिहस्तं | एवं चत्वारः पक्षाः | |
| | १००००० होमे | ४ चतुर्हस्तं | संति । यथाप्रयोज- | |
| | १०००००० होमे | ५ पंचहस्तं | नमेतेषामुपादानं | |
| | २०००००० होमे | ६ षड्ढस्तं | कर्तव्यमिति भावः | |
| | ५०००००० होमे | ७ सप्तहस्तं | | |

हस्त इति। ऊर्ध्वमुपर्याकाशे बाहू भुजौ यस्य तादृशः। प्रपदेन पादाग्रेण गच्छति तादृशः। ग्रन्थान्तरोक्तत्वात्समस्थितो वा। "यजमानेनोर्ध्वबाहुना प्रपदोच्छ्रितेन समस्थितेने"ति कात्यायनवचनात्। ऊर्ध्वबाहुश्च प्रपदगश्चेति विशेषणोभयपदकर्मधारयः। मखो यागो यस्यास्तीति मखी यष्टा। मत्वर्थे इनिः। ऊर्ध्वबाहुप्रपदगश्चासौ मखी चेति विशेषणपूर्वपदकर्मधारयः। तस्य यजमानस्येत्यर्थः। उपर्याकाशे कृतबाहोः पादाग्रेण भुवमालम्ब्योच्छ्रितस्य समपादस्थितस्य वा यजमानस्य। तन्मितसूत्रस्येति यावत्। पञ्चमोंऽशः हस्तः स्यात्। हस्तसंज्ञकपरिमाणविशेषो भवतीत्यर्थः। अत्र मखीत्यनेन कुण्डमण्डपादिनिर्माणसमये यजमानस्यासन्निधौ ऋत्विजादीनां हस्तो न ग्राह्य इति ज्ञाप्यते। यच्च कुण्डार्कोदयकारा यजमानासन्निधौ तत्पत्न्या हस्तो ग्राह्य इत्याहुस्तन्न रुचिरम्। कुतः "दानवाचनान्वारम्भवरवरणव्रतप्रमाणेषु यजमानं प्रतीयात्" इत्यादि कार्येषु यजमानस्य प्रतिनिध्यभावप्रतिपादक–कात्यायनवचनविरोधादिति। अतएव श्रौते प्रोषितयजमानके दर्शपूर्णमासादिके कर्मणि यजमानकार्यं पत्नी न करोति किंतु दाशमिकन्यायेन द्वारलोपात्कर्मलोपो भवतीति। तस्य हस्तस्य। सिद्धांशः सिद्धशब्देन चतुर्विंशतिसंख्या लक्षणीया। तेषां तत्संख्याकत्वात्। एवमग्रेऽप्यूह्यम्। सिद्धश्चतुर्विंशतितमोंऽशो भागः अङ्गुलं एतत्संज्ञः परिमाणविशेषः। स्यादिति सर्वत्रानुवर्तते। अत्र मूलं–चतुर्विंशाङ्गुलोरत्निरिति श्लोकशुल्बे। तस्याङ्गुलस्य गजोऽष्टमोंऽशो भागः यवोऽङ्गुलादूनपरिमाणविशेषः तस्य यवस्य उरगोऽष्टमो लवो भागः यूका यवादूनपरिमाणविशेषः। सा च यूका अष्टभिर्लिक्षाभिर्भवति। यूकाया अष्टमो भागो लिक्षा भवतीत्यर्थः। इतोऽप्यूनं परिमाणमन्यत्रोक्तं प्रत्यक्षतया कुण्डमण्डपनिर्माणेऽनुपयोगित्वाद्ग्रन्थकारैर्नोक्तं। तथापि क्षेत्रफलानयनादावुपयुक्तं भवतीति हेतोस्तदुच्यते कुण्डोद्योते–"रविरश्मिगतो गवाक्षगो वसुभिर्यः परमाणुभिर्मितः। त्रसरेणुभिरयं तदष्टभी रथरेणुर्विबुधास्तथाऽवदन्॥ वालाग्रलिक्षे यूका च यवोङ्गुलमिति क्रमात्" इति। लिक्षाया अष्टमो भागो वालाग्रसंज्ञः परिमाणविशेषः। वालाग्रस्याष्टमो भागो रथरेणुः। रथरेणोरष्टमो भागस्त्रसरेणुः। त्रसरेणोरष्टमो भागः परमाणुः। सच त्रसरेणुर्गवाक्षमध्ये रविरश्मिमध्ये च दृश्यते। इदं च यूकादिपरिमाणं कुण्डमण्डपकरणादिसमये न चिन्तयेत्। तदुक्तं–"यवादूनं प्रमाणं

तु मण्डपादौ न चिन्तयेत् । सूत्रस्याधो विलीयन्ते यूकालिक्षादयः शतम्" इति । तदेतत्सर्वं न्यासतो दर्श्यते—

| एतत्परिमाणभेददर्शकं कोष्टकं | |
|---|---|
| ८ परमाणुः— | १ त्रसरेणुः |
| ८ त्रसरेणुः— | १ रथरेणुः |
| ८ रथरेणुः— | १ वालाग्रं |
| ८ वालाग्रं— | १ लिक्षा |
| ८ लिक्षा— | १ यूका |
| ८ यूका— | १ यवः |
| ८ यवः— | १ अङ्गुलं |
| २४ अङ्गुलं— | १ हस्तः |
| ५ हस्तः— | १ पुरुषः |

अयं हस्तन्यासः

अं. १ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १५ १८ २१ २४

अङ्गुलयवयूकादिनां न्यासाः सूक्ष्मा अतो न दत्तास्ते सूक्ष्मधीभिरुन्नेयाः । इति प्रथमश्लोकः ॥ १ ॥

छायान्तो मध्यशङ्कोः समभुवि विहितं मण्डलं येन गच्छे-
दुज्झेच्च स्थानयुग्मं तदनुगतगुणः प्राग्गुणोऽथोदगंशुः ।
तस्यान्ताभ्यां तदर्धाधिकगुणकृतयोर्मत्स्ययोर्मध्यतः स्यात्
तत्संधेर्भ्रामयांशुं कुरु वलयमितः सर्वकुण्डप्रसिद्धिः ॥ २ ॥

**मरीचिका**—अथ प्रागादिसाधनं वृत्तसाधनं चाह—समायां भुवि मध्ये द्वादशाङ्गुलं शङ्कुं निधाय तस्मिन्पाशं प्रतिमुच्य तेन सूत्रेण षोडशाङ्गुलेन शङ्कोः परितो भ्रमणेन वृत्तं कार्यम् । पूर्वाह्णे शङ्कग्रच्छाया यत्र वृत्तरेखां स्पृशति यतश्चापराह्णे निर्गच्छति तत्स्थानद्वयमनुलक्ष्य सूत्रं देयम् । तत्प्राक्सूत्रम् । तस्य पूर्वान्तात्तदर्धाधिकेन गुणेन पश्चिमभागे वृत्तार्धं कार्यम् । एवमपरान्तात्तावतैव सूत्रेण पूर्वभागे वृत्तार्धं कार्यम् । तयोः संधिं अभिलक्ष्य तिर्यगंशुर्देयः तदुदक्सूत्रम् । अनयोः सूत्रयोः संधिमारभ्य इष्टप्रमाणसूत्रेण वलयं कार्यम् । तदेव सर्वेषां कुण्डानां प्रकृतिभूतं भवतीत्यर्थः । ये तु चतुरस्रप्रकृतिकानि सर्वाणि कुण्डानि व्याचख्युस्तेषां भुजसाम्यं क्वापि नास्तीति स्पष्टम् । नचैतदनपेक्षणीयं । चतुरस्र इव त्र्यस्रादिष्वपि तस्यावश्यकत्वादिति दिक् ॥ २ ॥

दीधितिः-अथ प्रागादिदिक्साधनमुत्तरसाधनं चाह—अत्र दिक्साधनं कर्तुं वक्ष्यमाणप्रकारेण समायां मण्डपभूमौ मध्ये द्वादशाङ्गुलं शङ्कुं निधाय तत्केन्द्रपरितः षोडशाङ्गुलेन सूत्रेण यद्विहितं मण्डलं तत्पूर्वाह्णे शङ्कोश्छायाग्रं येन प्रदेशेन गच्छेत् । अपराह्णे च येन प्रदेशेन मण्डलं उज्झेत् त्यजेदित्यर्थः । तत्स्थानयुग्मं प्राचीसाधने प्रयोजकम् । तदनुगतगुणः स्थानद्वयमभिलक्ष्य दत्तं सूत्रं प्राग्गुणो भवति । पूर्वापरसूत्रमित्यर्थः । तस्य सूत्रस्य अन्ताभ्यां तदर्धाधिकेन गुणेन कृतयोर्मत्स्ययोर्मध्यतः सूत्रे दत्ते सति उदगंशुर्भवति । दक्षिणोत्तरसूत्रमित्यर्थः । तयोः सूत्रयोः संधेः संधिमारभ्य अंशुं भ्रामय इष्टव्यासार्धपरिमितं सूत्रं भ्रामय । अथ च वलयं कुरु इति शिष्यं प्रत्युक्तिः । इतः अस्माद्वृत्तात्सर्वकुण्डप्रसिद्धिः सर्वेषां त्र्यस्रादीनां कुण्डानां सिद्धिर्भवति । अत्र दिक्साधनोपयोगिवृत्ते नृपाङ्गुलमितः कर्कटकः सूत्रं वा ग्राह्यमित्युक्तनियमः । कर्णसूत्रमानस्य अङ्कानां निरवयवत्वार्थं । इदं प्राचीसाधनं किंचित्स्थूलमिति मत्वा सिद्धान्तशिरोमणौ सूक्ष्मत्वोपायः कथितः-"तत्कालापमजीवयोस्तु विवराद्भाकर्णमित्याहताल्लम्बज्याप्तमिताङ्गुलैरयनदिश्यैन्द्री स्फुटा चालिते"ति । इदं सिद्धान्तवेदिभिर्ज्ञायते अत इतरेषां दुर्ज्ञेयमिति मत्वा कुण्डग्रन्थकारैः सिद्धान्तोक्तप्रकारेण षोडशाङ्गुलवृत्ते फलमानीय श्लोकतः पठितं । तच्च-"कर्के कीटे गोमृगे यूकया सा चाल्या द्वाभ्यां सिंहकुम्भत्रिकेऽपि । यां वै काष्ठां भानुमान्याति तस्यां चाल्या द्वन्द्वे कार्मुके चालनं ने"ति । इदं मूलकारेण स्वल्पान्तरत्वान्नोक्तं "स्वल्पान्तरत्वादबहूपयोगा"दित्यादिसिद्धान्तोक्तत्वात् । अन्यग्रन्थेषु तु प्राचीसाधने अन्येपि प्रकारा उक्ताः । ते च-"निशि वा श्रवणोदये दिगैन्द्री"त्यादिना । अस्यार्थः—शलाकया श्रवणोदये विद्धे सति शलाका पूर्वापरसूत्रसमा भवति । एवं पुष्योदये कृत्तिकोदये चित्रास्वात्योर्मध्यवेधे च शलाका प्राक्सूत्रसमा भवतीत्यर्थः । इदं मूलकारेण नोक्तं । यतस्तेषां नक्षत्राणामुक्तोदयाः इदानीं प्राच्यां न भवन्ति । शरसंस्कृतस्वस्वक्रान्त्यग्रे हि नक्षत्राणि सन्ति । तच्च स्थानं प्राच्याः सकाशाद्बह्वन्तरमस्तीति प्रत्यक्षतो दृश्यते । एवं सत्यपि अयनांशवशेन युगान्तरे कस्मिन्कस्मिंश्चित्काले तानि तानि नक्षत्राणि प्राच्यामुदितानि दृष्ट्वा ऋषिभिः स्वस्वग्रन्थे निबद्धानि तानि दृष्ट्वा आधुनिकैरप्युक्तानि । एवं ध्रुवादपि कैश्चिदुदक् साधिता । तत्रापि ध्रुवस्य चलनदर्शनात्

अन्तरितैवोदक् भवेत् । ननु ध्रुवचलनं कैरपि नोक्तं । सत्यं । यतः यस्मिन्प्रदेशे स्थितः पुरुषः सूर्यास्तानन्तरं यच्छाखाग्रसंलग्नं ध्रुवं पश्यति ततः प्रहरद्वयेन त्रयेण वा तत्रैव स्थितः तच्छाखाग्रस्पृष्टं ध्रुवं न पश्यति । अनेन प्रत्यक्षेण ध्रुवचलनमनुमेयं । अथवा "छायान्तो मध्यशङ्को"रित्यादिना या सिद्धा प्राची सैव प्रकारान्तरेष्वपि भवति न वेति बुद्धिमद्भिः प्रत्यक्षतो द्रष्टव्यम् । अत्र वृत्तात्सर्वकुण्डप्रसिद्धिरुक्ता । अन्ये तु चतुरस्रप्रकृतिकानि कुण्डानि व्याचख्युः । तेषां करणे विश्वकर्मा कुशलः । यतः सूक्ष्मं क्षेत्रफलं वृत्तप्रकृतिकादेव कुण्डात्सिध्यतीति ग्रन्थकर्तुराशयः। अत्र ध्वजायसिध्यर्थं त्रसरेण्वादि यथायोगं वर्धयित्वा साधनीयं । तेन मानाधिक्यदोषो न भवति ।—"अपि दोषविशुध्यर्थं क्रियते शास्त्रकोविदैः । शतांशेनाधिकं हीनं ह्रासो वृद्धिर्न दूषये"दिति कुण्डतत्त्वप्रदीपोक्तेः। अत्र अधिकं हीनमिति क्रियाविशेषणे तेन नपुंसकलिङ्गं द्वितीया च ॥ २ ॥

पद्मिनी—अथ कुण्डोपयुक्तं दिक्साधनमाह—मध्यशङ्कोः छायान्तः समभुवि विहितं मण्डलं येन गच्छेत् उज्झेच्च तत्स्थानयुग्ममभिलक्ष्य यत्सूत्रं तत्प्राग्गुणः । अथ उदगंशुः तस्य प्राग्गुणस्य यौ अन्तौ ताभ्यां प्राग्गुणाधिककृतगुणेन एकस्मिन्प्रान्तात्पार्श्वयोर्वृत्तार्धं कार्यं । एवमपरस्मिन्प्रान्ताद्वृत्तार्धं । एवं कृतयोर्मत्स्ययोर्मध्यतः मध्यमभिलक्ष्य यत्सूत्रं तदेव उदक्सूत्रमित्युच्यते । तत्संधेः सूत्रद्वयमध्यादित्यर्थः । वक्ष्यमाणव्यासांशुभ्रमणेन वलयं कुरु । इतः वलयात्सर्वकुण्डप्रसिद्धिर्भवति । इतः सर्वकुण्डप्रसिद्धिरित्युक्त्या भूमेर्गोलरूपत्वाच्च प्रकृतिक्षेत्रं वृत्तं, अन्यद्विकृतिरिति साधितं भवति । यैः त्र्यस्रं चतुरस्रं प्रकृतित्वेन स्वीकृतं तत्तु स्वबुद्धिख्यापनार्थमेव । तेषां भुजसाम्यत्वमपि नायातीत्यन्यत्र विस्तरः । समभुवि विहितं मण्डलमित्युक्त्या भूपरीक्षादिशङ्कुनिधानान्तमन्यतो ग्राह्यमिति स्थितं ननु प्राच्युदक्साधनं । तस्य स्वोक्तत्वात् ननु सूक्ष्मप्राच्याः कुण्डादौ कारणं । "यवादूनं प्रमाणं तु मण्डपादौ न चिन्तयेत् । सूत्रसाधो विलीयन्ते यूकालिक्षादयः शत"मिति वाक्यात् इति संक्षेपः ॥ २ ॥

नौका—अथ प्राच्यादिदिक्साधनं चाह—छायान्त इति । समभुवि समायां भूमौ विहितं द्वादशाङ्गुलमध्यशङ्कोः सकाशात्षोडशाङ्गुलादि-

मानेन सूत्रेण कृतं मण्डलं वृत्तं तत्प्रति मध्यशङ्कोर्मण्डलमध्यस्थापितशङ्कोः छायान्तः छायाया अन्त्यावयवः येन मण्डलरेखाप्रदेशेन गच्छेत् । मध्याह्ना-त्पूर्वं मण्डलाभ्यन्तरे प्रविशेत् । तथा मध्याह्नात्परतो येन प्रदेशेनोज्झेत् मण्डलाद्बहिर्गच्छेत् । तत्स्थानयुग्मं तत्प्रदेशयुगलं सचिह्नं कृत्वेति शेषः । तदनुगतगुणः तच्चिह्नव्यापिसूत्रं प्राग्गुणः प्राक्प्रत्यक्सूत्रमित्यर्थः । अथ प्राची-साधनानन्तरं तस्य प्राक्सूत्रस्यान्ताभ्यां प्राक्प्रत्यग्गतवृत्तरेखास्पर्श्यंत्यावय-वाभ्यां । तावधिकृत्वेत्यर्थः । तदर्धाधिकगुणकृतयोः तस्य प्राक्प्रत्यक्सूत्रस्य यदर्धं तदपेक्षया अधिकः किंचिदधिको यो गुणः सूत्रं कर्कटको वा तस्य पूर्वोक्तावधिद्वयाद्भ्रामणेन निष्पादितवलयार्धद्वयेन कृतयोर्मत्स्ययोः उभय-वृत्तार्धसंगमरूपयोर्मध्यतो मध्ये चोदगंशुः दक्षिणोदक्सूत्रं स्यात् । तत्स्था-नत्रयमनुलक्ष्य सूत्रं देयमिति भावः । एवं प्रागुदक्सूत्राभ्यां दिक्चतुष्टयं प्रसाध्य सर्ववृत्तजननप्रक्रियामाह—तत्संधेर्भ्रामयांशुमिति । तयोः प्रागुदक्सूत्रयोः यः संधिः मध्यभागस्थः तस्मादंशुसूत्रं कर्कटं वा भ्रामय वलयं कुरु । कर्कटभ्रामणेन वृत्तं कुर्वित्यर्थः । इतोऽस्माद्वृत्तात्सर्वकुण्डप्रसिद्धिः तत्तद्वृत्ताद्दशविधस्यापि कुण्डस्योत्पत्तिरिति भावः ॥ २ ॥

मिताक्षरा—अथ कुण्डोपयुक्तं दिक्साधनमाह–छायान्त इति । मध्यशङ्कोश्छायान्तः समभुवि विहितं मण्डलं येन गच्छेत् यत्स्थानात् वृत्ततो निर्गच्छेत् उज्झेच्च येन मार्गेण वृत्तं त्यजेत् तत्स्थानयुग्ममभिलक्ष्य यत्सूत्रं तत्प्राग्गुणः पूर्वापरसूत्रं । अथानन्तरमुदगंशुरुदग्दक्षिणसूत्रं कथ्यते । तस्य प्राग्गुणस्य यावन्तौ प्राग्गुणार्धादधिककृतगुणेन एकस्मात्प्रान्तात्पार्श्वयो-र्वृत्तार्धं कार्यं । एवमपरस्मिन्प्रान्ताद्वृत्तार्धं । एवं कृते मत्स्यद्वयं भवति । तयोर्मध्यतः मत्स्यमभिलक्ष्य यत्सूत्रं तदेवोदक्सूत्रमित्युच्यते । तत्संधेः सूत्रद्वयमध्यादित्यर्थः । वक्ष्यमाणव्यासांशुभ्रामणेन वलयं वृत्तं कुरु । इतो वलयात्सर्वकुण्डप्रसिद्धिर्भवति । समभुवीत्युक्त्या भूपरीक्षादिशङ्कुनिधाना-न्तमन्यतो ग्राह्यमित्यूह्यम् । तदुक्तं महाकपिलपञ्चरात्रे—“सिता पीता तथा रक्ता कृष्णवर्णसमन्विता । स्थिरोदका दृढा स्निग्धा भूमिः सर्वसुखा-वहा ॥ शीतस्पर्शोष्णकाले च ह्युष्णस्पर्शा हिमागमे । वर्षासु चोभयस्पर्शा सा शुभा परिकीर्तिते”ति । “गृहस्येशानपूर्वेण प्रागुदक्प्रवणेऽङ्गणे” इत्या-

दिना मण्डपस्थलमुक्तं रुद्रप्रसादे । शारदातिलके—"नक्षत्रराशिवाराणामनुकूले शुभेऽहनि । ततो भूमितले शुद्धे तुषाराङ्गारवर्जिते ॥ पुण्याहं वाचयित्वा तु मण्डपं रचयेच्छुभ"मिति । हयशीर्षपञ्चरात्रे—"सुन्दरीणां रतिर्यत्र पुरुषैः सह सत्तम । काश्मीरचन्दनामोदे"त्यादिसु विस्तृतमुक्तं ग्रन्थान्तरे विस्तरभियात्र न लिख्यते । भूमिपूजनमुक्तं मात्स्ये—"वराहं कूर्मशेषौ च क्षितिं चैव विधानतः । पूजयेद्वास्तुकार्येषु विधिना साधकोत्तम" इति ॥ २ ॥

सुप्रभा—अथ कुण्डमण्डपोपयोगि प्रागादिदिक्साधनं वृत्तसाधनं चाह—छायान्त इति । समभुवि समायां भूमौ "समभूमौ भवेद्विद्वानि"ति श्लोकशुल्बात् । विहितं द्वादशाङ्गुलमध्यशङ्कोः सकाशात् षोडशाङ्गुलमानेन कृतं । मण्डलं वृत्तं । मण्डलमध्यस्थापितशङ्कोरित्यर्थः । इदं च मण्डलशङ्कोर्मानं ग्रन्थकर्त्रा यद्यपि नोक्तं तथापि "अनुक्तमन्यतो ग्राह्य"मितिन्यायेनान्यत्र पठितस्य प्रकृते त्वावश्यकस्य ग्रहणं कर्तव्यं । तदुक्तं कात्यायनेन शुल्बसूत्रे—"समे शङ्कुं निखाय शङ्कुसंमितया रज्ज्वा मण्डलं परिलिख्य यत्र रेखयोः शङ्क्वग्रच्छाया निपतति तत्र शङ्कुं निहन्ति सा प्राचीति ॥ १ ॥ २ ॥

परशुरामोपि—"प्रमाणमङ्गुलस्योक्तं शङ्कुः स्याद्द्वादशाङ्गुलः । एकाङ्गुलप्रमाणं तु शङ्कुं भुवि विनिक्षिपेत् ॥ रज्ज्वा तन्मितया वृत्तं कृत्वाऽस्मिन्छङ्कुभा यतः । शङ्कुद्वयं पुनर्देयं प्राह्णापराह्णकालिकम् ॥ तयोरुपरिसूच्यस्था प्राची ज्ञेया सपश्चिमा" इति । छायान्तः छायाया अन्त्यावयवः येन रेखामार्गेण गच्छेत् । सूर्योदयसमये प्रविशेदित्यर्थः । च परं येन रेखामार्गेण उज्झेत्त्यजेत् । सूर्यास्तसमये मण्डलाद्बहिर्भवेदित्यर्थः । तदुक्तप्रकारेण लब्धं स्थानयुग्मं प्रदेशद्वयं तत्र चिह्नं कृत्वा तच्चिह्नद्वयमित्यर्थः । अनु अनुलक्ष्य गतः प्राप्तो गुणः सूत्रं प्राग्गुणः स्यात् प्राग्दण्डो भवति । एवं प्राक्सूत्रं प्रसाध्योदक्सूत्रसाधनमाह—अथ प्राक्सूत्रसाधनानन्तरं तस्य प्राक्सूत्रस्य अन्ताभ्यां प्राक्प्रत्यक्चिह्नयुक्तप्रान्ताभ्यां सकाशात्तयोरेकं कर्कटकप्रान्तं निधायेत्यर्थः । तस्य प्राक्सूत्रस्य यदर्धं तदपेक्षया किंचिदधिकेन गुणेन सूत्रेण । अपरककर्कटकप्रान्तेनेत्यर्थः । पूर्वोक्तचिह्नद्वयाक्रमणेन संपादितवृत्तार्धद्वयेन कृतयोः उभयवृत्तार्धसंगमरूपयोर्मत्स्ययोर्मत्स्याकृतिचिह्नयोर्मध्यतो

मध्ये च उदगंशुरुदक्सूत्रं भवति तत्स्थानद्वयमनुलक्ष्य दत्तं सूत्रमुदग्दण्डो भवतीत्यर्थः। तदुक्तं कात्यायनेन शुल्बसूत्रे—"तदन्तरं रज्ज्वाऽभ्यस्य, पाशौ कृत्वा, शङ्क्वोः पाशौ प्रतिमुच्य, दक्षिणाऽऽयम्य मध्ये शङ्कुं निहन्त्येवमुत्तरतः सोदीची ॥ १-३ ॥ एवं प्रागुदक्सूत्रसाधनेन प्रागादिदिक्चतुष्टयं प्रसाध्य सर्वं वृत्तजननप्रक्रियावृत्तमाह। तयोः प्रागुदक्सूत्रयोः संधेःसकाशात् अंशुं सूत्रं कार्काटकं वा भ्रामय वलयं कुरु। कर्काटकभ्रामणेन वृत्तं कुर्वित्यर्थः। इतोऽस्माद्वृत्तात् सर्वेषां चतुरस्रादीनां कुण्डानां प्रसिद्धिः प्रसाधनं भवेत्। तत्तद्वृत्ताद्दशविधस्यापि कुण्डस्य समुत्पत्तिरिति तात्पर्यम्। ततो न्यासः—

प्राचीसाधनं



उदीचीसाधनं



अत्र वृत्तात्सर्वकुण्डप्रसिद्धिं वदता ग्रन्थकर्त्रा एवं ज्ञाप्यते। प्रकृतिक्षेत्रं वृत्तं। अन्यत्सर्वं विकृतिरिति। यैस्तु चतुरस्रादिप्रकृतित्वेन स्वीकृतं तत्स्वीय-बुद्धिकौशल्यमेव प्रदर्शितं। यतस्तेषां स्थूलत्वेन भुजसाम्यं यथावत्क्षेत्रफल-कत्वं च न सिद्ध्यतीति। तच्चोक्तं कात्यायनेन शुल्बसूत्रे—"नान्यद्वृत्तात्प्रमाभ-वेत्" इति ॥ ४ ॥ तथा भूम्याः समत्वविशिष्टोक्त्या इदमपि ज्ञापितं भवति। भूपरीक्षादिशङ्कुनिखननान्तमनुक्तमन्यतो ग्राह्यमिति। तदुक्तं शारदाति-लके—"नक्षत्रराशिवाराणामानुकूल्ये शुभेऽहनि। ततो भूमितले शुद्धे तुषा-ङ्गारविवर्जिते ॥ पुण्याहं वाचयित्वा तु मण्डपं कारयेच्छुभ"मिति। भूपरी-क्षोक्ता पञ्चरात्रे—"तत्र भूमिं परीक्षेत वास्तुज्ञानविशारदः। स्फुटिता च

सशल्या च वल्मीकारोहिणी तथा ॥ दूरतः परिवर्ज्या भूः कर्तुरायुर्धनापहा । ईशकोणे प्लवा सा च कर्तुः श्रीदा सुनिश्चितम् ॥ पूर्वप्लवा वृद्धिकरी वरदातू-त्तरप्लवा । शेषकाष्ठाप्लवा भूमिर्धनायुर्गृहनाशिनी ॥ ब्राह्मणी घृतगन्धा स्याल्क्ष-त्रिया रसगन्धभृत् । कुशकाशाकुला वैश्या शूद्रा सर्वतृणाकुला ॥ सिता पीता तथा रक्ता कृष्णवर्णसमन्विता । स्थिरोदका दृढा स्निग्धा भूमिः सर्वसुख-प्रदा ॥ शीतस्पर्शोष्णकाले या वह्निस्पर्शा हिमागमे । वर्षासु चोभयस्पर्शा सा शुभा परिकीर्तिता" इति । हयग्रीवपञ्चरात्रे—"सुन्दरीणां रतिर्यत्र पुरुषैः सह सत्तम । काश्मीररचनामोदकर्पूरागरुगन्धिनी ॥ कमलोत्पलगन्धा च जातीचम्पकगन्धिनी । पाटलामल्लिकागन्धा नागकेसरगन्धिनी ॥ दधि-क्षीराज्यगन्धा च मदिरासवगन्धिनी । सुगन्धिर्व्रीहिगन्धा च शुभगन्धि-युता च या ॥ सर्वेषामेव वर्णानां भूमिः साधारणी मता । कुसुमप्रकरस्तद्व-द्यस्यां न म्लानिमृच्छति ॥ न निर्याति तथा दीपस्तोयं शीघ्रं न जीर्यति । मधुरा च कषाया च अम्लानकटुका तथा ॥ कुशैः शरैस्तथा काशैर्दूर्वा-भिर्या च संभृता" इति । प्रयोगसारे—"वितस्तिमात्रविस्तारं निर्माय विवरं भुवि । निक्षिपेत्ता मृदस्तस्मिंस्तासु शिष्टासु शोभनम् ॥ समासु मध्यमं विद्यान्न्यूनास्वधममुच्यते ॥ परीक्ष्यैवं प्रयत्नेन त्यक्त्वा भूमिं कनीयसीं । अङ्गारतुषकेशादिहीनं कृत्वा तु भूतलम्" इति । वासिष्ठ्यां—"खन्यमाने यदा कुण्डे पाषाणः प्राप्यते यदि । तदापन्मृत्यवे स्वस्थिकेशाङ्गारैर्धनक्षयः ॥ भस्मना च भयं प्रोक्तं तुषैः प्रोक्ता दरिद्रता" इति । गौतमीयतन्त्रे—"श-ल्यादिशोधनं कुर्यात्तुषाङ्गारादि शोधयेत्" इति । याज्ञवल्क्यस्मृतौ—"भूशुद्धिर्मार्जनाद्दाहात्कालाद्गोक्रमणादपि । भूमिमशोध्यैव कुण्डकरणे दोष उक्तः" इति । अन्येपि संस्कारा अन्यत्रोक्ता उपादेया इति दिक् । इति द्वितीयश्लोकः ॥ २ ॥

वृत्तेऽब्जे वलयोऽधिभै २७।०।५ रधिपदह्यग्निः ३८।२।३
सपात्स्वानलो ३०।२ दृग्वेदे सयवे ४२।१ रसत्रि सदलं ३६।४
सिद्धाः २४ करामेऽकले २३।७।४ ॥ क्ष्मारामे सयवे ३१।१
ऽधिपादधृतयो १८।२।३ ऽनंघ्रौ खरामे २९।६ दलं १४।७

गोद्वा २९ वत्रियवत्रिभू १२।५ रपदले २८।४ ज्यानिस्त्रियूकाः शिवाः १०।७।५ ॥ ३ ॥

मरीचिका—अथैकहस्तस्य दशविधस्यापि कुण्डस्य प्रकृतिवृत्तव्यासान्, भुजवतां भुजमानानि चाह—अत्राधिशब्दः कतिपययूकाधिक्यार्थः। संख्याशब्दश्च संख्येयाङ्गुलपरः। तेन वृत्तकुण्डे पद्मकुण्डे च वलयव्यासः पञ्चयूकाधिकैः सप्तविंशत्यङ्गुलैः संमित इति ज्ञेयम्। अत्र व्यासाद्यानयनप्रकारं सोपपत्तिकमग्रे वक्ष्यामः। अधिपदह्यग्निः यूकात्रयाधिकश्चरणः यवद्वयात्मा अष्टत्रिंशदङ्गुलानि चैकज्येऽर्धचन्द्राभे वलयो वलयमानं। सपात्खानलः यवद्वयाधिकत्रिंशदङ्गुलः। द्विज्ये योनिकुण्डे दग्वेद इति यवाधिकद्विचत्वारिंशदङ्गुले वृत्ते सार्धषट्त्रिंशदङ्गुलास्तिस्रो ज्या भवन्ति। सिद्धा इति। अकले षोडशांशहीने यूकाचतुष्टयन्यूने चतुस्त्रिंशदङ्गुले वृत्ते चतुर्विंशत्यङ्गुलाश्चतस्रो ज्या भवन्ति। क्ष्मारामे इति। एकयवाधिकैकत्रिंशदङ्गुले यूकाद्वयाधिकयवद्वयेन सहिता अष्टादशाङ्गुलाः पञ्च ज्याः। अनंघ्राविति पादोनत्रिंशदङ्गुले वृत्ते यवोनपञ्चदशाङ्गुलाः षट्ज्याः। गोद्वाविति। एकोनत्रिंशदङ्गुले वृत्ते पञ्चयवाधिकद्वादशाङ्गुलाः सप्तज्या भवन्ति। अपदले इति। ज्यानिस्त्रियूकाः शिवाः यवचतुष्टयाधिकाष्टाविंशत्यङ्गुले वृत्ते यूकात्रयोनैकादशाङ्गुला अष्टौ ज्या भवन्ति ॥ ३ ॥

दीधितिः—अथैकहस्तस्य दशविधस्यापि कुण्डस्य प्रकृतिवृत्तव्यासान् भुजवतां भुजमानानि चाह—अत्राधिशब्दः कतिपययूकाधिक्यार्थः। भशब्दो नक्षत्रवाची। तत्संख्या सप्तविंशतिः। भशब्देन लक्षणया सप्तविंशतिसंख्यां गृहीत्वा संख्येयाङ्गुलपरा कृता। तेन अधिभैः पञ्चयूकाधिकैः सप्तविंशत्यङ्गुलैः वृत्ते अब्जे पद्मकुण्डे च वलयो भवति। वलयशब्देन लक्षणया व्यास उच्यते। अधिपदह्यग्निः अधिपत् किंचिदधिकः पादो यस्मिन् अह्यग्निः। अहिशब्दो नागवाची। तत्संख्या अष्टौ। अग्निशब्दः अग्निहोत्राग्निपरः। तत्संख्या त्रयं। लक्षणा सर्वत्र पूर्ववत्। तेन एकज्येऽर्धचन्द्राभे यूकात्रयाधिकयवद्वयविशिष्टाष्टत्रिंशदङ्गुलानि व्यासो भवति। अत्र पच्छब्दस्य पादे शक्तिः "पदंघ्रिश्चरणोऽस्त्रिया"मिति कोशात्। सपात्खानलः। पादेन सहितः सपात्। पादशब्दस्य अकारलोपः समासान्तः।

"पादस्य लोपोऽहस्त्यादिभ्य" इति सूत्रात्। खानलः। खशब्द आकाशवाची। आकाशस्य पदार्थत्वेपि लक्षणया शून्यपरः। अनलशब्देन पूर्ववत्त्रयं। तेन द्विज्ये योनिकुण्डे यवद्वयाधिकत्रिंशदङ्गुलानि व्यासो भवति। अथ त्रिभुजादिकुण्डानां क्रमेण व्यासमानं भुजमानं चाह—दृग्वेदे सयवे। दृक्शब्दो लोचनवाची। तत्संख्या द्वयं। वेदशब्देन ऋगादयः। तत्संख्या चत्वारि। रसत्रिदलं। रसशब्दः षड्विधरसपरः। तत्संख्या षट्। तेन यवाधिकद्विचत्वारिंशदङ्गुले वृत्ते सार्धषट्त्रिंशदङ्गुलास्तिस्रो ज्या भवन्ति। कारामे। कशब्दो जलवाची समुद्रपरः। तत्संख्या चत्वारः। रामशब्दः परशुरामादिरामत्रयवाची। अकले। कलाशब्दश्चन्द्रगतषोडशकलापरः। सिद्धाः सिद्धशब्दश्चतुर्विंशतिसिद्धपरः। तेन यूकाचतुष्टयोनचतुस्त्रिंशदङ्गुले वृत्ते चतुर्विंशदङ्गुलाश्चतस्रो ज्या भवन्ति। क्ष्मारामे--सयवे क्ष्मा पृथिवी। तत्संख्या एकः। रामशब्दः पूर्ववत्। अधिपादधृतयः। धृतिशब्देनाष्टादशपादच्छन्दोवृत्तं। तेन एकयवाधिकैकत्रिंशदङ्गुले वृत्ते यूकात्रयाधिकपादविशिष्टाष्टादशाङ्गुलाः ज्या भवन्ति। अनंघ्रौ खरामे। अंघ्रिः पादः। दलं व्यासार्धं। तेन पादोनत्रिंशदङ्गुले वृत्ते यवोनपञ्चाशदङ्गुलाः षट् ज्या भवन्ति। गोद्वौ। गावो नव। कृष्णरक्षितगवां नवलक्षसंख्यत्वात्। देवशब्दोपलक्षितसंख्यावत्। अत्रियवत्रिभूः। तेन एकोनत्रिंशदङ्गुलवृत्ते पञ्चयवाधिकद्वादशाङ्गुलाः सप्त ज्या भवन्ति। अपदले। अपगतं दलं चत्वारो यवाः यस्मात्। गोद्वौ इति पूर्वोक्तस्य विशेषणं। निस्त्रियूकाः शिवाः। शिवशब्देनैकादशरुद्राः। तत्संख्या एकादश। तेन सार्धाष्टाविंशत्यङ्गुलवृत्ते यूकात्रयोनैकादशाङ्गुलानि अष्टौ ज्या भवन्ति। अस्मिन् श्लोके वृत्तवाचकं पदं सप्तम्यैकवचनान्तं। ज्यानां बहुत्वेन तद्वाचकं पदं बहुवचनान्तम्। व्यस्रादिषु त्रिभुजत्वादिव्यवहारः सर्वत्रास्ति। आचार्यस्यापि "दोष्णं दोर्व्यासकृत्यो"रित्यादिस्थले तादृश एवास्ति। एवं सत्यपि अस्मिन्श्लोके भुजानां ज्यात्वकथनं ज्यावदृजुत्वप्रदर्शनार्थम्। अस्योपपत्तिस्तु "वृत्तेऽब्जेऽब्धीष्विभाद्वै"रित्यादिना आचार्य एवाग्रे वक्ष्यति। चिन्तामणिदीक्षितैरेतद्ग्रन्थटीकायां विस्तरेण प्रदर्शिताऽप्यस्ति अतो नेह प्रदर्श्यंते ॥ २ ॥

पद्मिनी—अथैकहस्तानां कुण्डानां वलयार्थं व्यासान्, भुजवतां भुज-

मानानि चाह—अत्राधिशब्दो यूकाधिक्यार्थः । अङ्कोक्तिस्त्वङ्गुलपरा । पादादिशब्दस्त्वेकाङ्गुलावयवपरः । तेन वृत्तकुण्डे षड्यूकाधिकसप्तविंशत्यङ्गुलमिति व्यासः १ । पद्मकुण्डेऽप्ययमेव व्यासः किमर्थमित्यग्रे प्रपञ्चयिष्यामः । २ अधिपदह्यग्निः । यूकात्रययवद्वयाधिकाष्टत्रिंशदङ्गुलान्येकज्ये अर्धचन्द्रव्यासः ३ । सपात्खानलः । योनिकुण्डे यवद्वयाधिकत्रिंशदङ्गुलः ४ । एकयवाधिकद्विचत्वारिंशदङ्गुले वृत्ते त्र्यस्रस्य षट्त्रिंशदङ्गुलाश्चतुर्यवसहितास्तिस्रोज्या भवन्ति ५ । सिद्धाः करामेऽकले । यूकाचतुष्टयोनचतुस्त्रिंशदङ्गुले चतुरस्रस्य चतस्रोज्याः ६ । क्ष्मारामे सयवेऽधिपादधृतयः । यवाधिकैकत्रिंशदङ्गुले यूकात्रययवद्वयसहित अष्टादशाङ्गुलाः पञ्चास्रस्य पञ्च ज्याः ७ । अनंभ्रो खरामे दलं । पादोनत्रिंशदङ्गुले यवोन पञ्चदशाङ्गुलाः षडस्रस्य षड्ज्याः । ८ गोद्वावत्रियवत्रिभूः । एकोनत्रिंशदङ्गुले त्रियवरहितत्रयोदशाङ्गुलाः सप्तास्रस्य सप्त ज्याः । ९ अपदले ज्या निघ्नियूकाः शिवाः । गोद्वौ अपदले सार्धाष्टाविंशत्यङ्गुले यूकात्रयोनैकादशाङ्गुलाः अष्टास्रस्याष्टौ ज्या भवन्ति । १० एकज्यद्विज्ययोर्ज्यामानं कुतो नोक्तमिति चेदेकज्ये व्यासस्यैव ज्यावत्वात् द्विज्येऽप्यस्रकल्पत्वान्नोक्तमिति दिक् ॥ २ ॥

नौका—अथ कियत्प्रमाणानि वृत्तानीत्यपेक्षायां दशविधानामप्येकहस्तात्मककुण्डानां प्रकृतिव्यासान्, भुजवतां भुजमानानि चाह—वृत्तेऽब्ज इति । वृत्तेन तत्राधिशब्दः कतिपययूकालक्षकः । संख्यासंकेतशब्दश्च संख्येयाङ्गुललक्षक इति ज्ञेयम् । वृत्ते वृत्तकुण्डे अब्जे पद्मकुण्डे च । अधिभैः । अत्राधिशब्देन यूकापञ्चकं भशब्देन सप्तविंशत्यङ्गुलानि । अङ्कानां वामतो गतिरितिन्यायेन यूकापञ्चकाधिकसप्तविंशत्यङ्गुलैर्वलयः तत्परिमितो वृत्तव्यास इत्यर्थः । २७।०।५ । एतदग्रे ज्यावृद्धिक्रमादष्टौ कुण्डानि ज्ञेयानि । तत्रादौ एका धनुःप्रत्यंचासादृश्याज्ज्या यस्य । तस्मिन्नेकज्येऽर्धचन्द्राभे । अधिपदह्यग्निः । अधिना यूकात्रयं पदा यवद्वयं अहिना अष्टौ अग्निना त्रीणि । यूकात्रयाधिकसयवद्वयाष्टत्रिंशदङ्गुलात्मको वलयः वृत्तव्यासः ३८।२।३ । अथ क्रमप्राप्ते द्विज्ये योनिकुण्डे । सपात्खानलः । खेन शून्यं । अनलेन त्रीणि । सपात् पादसहितः यवद्वयात्मकपादसहितत्रिंशदङ्गुलपरिमितो वृत्तव्यासः ३०।२। एतत्कुण्डद्वयस्य ज्यामानं नोक्तं प्रयोजनाभावात् । अग्रे व्यासमानं ज्यामानम-

व्याह-तत्र व्यासमानं सप्तम्यन्तं ज्यामानं प्रथमान्तमित्यवधेयम् । अथ क्रमप्राप्ते त्रिज्ये त्रिकोणकुण्डे दृग्वेदे सयवे । दृशा द्वे वेदेन चत्वारि यवः प्रसिद्धः । यवाधिकद्विचत्वारिंशदङ्गुले वृत्तव्यासे ४२।१ सति रसत्रिसदलं रसाः षट् त्रिशब्देन त्रीणि । दलमर्धाङ्गुलं सार्धषट्त्रिंशदङ्गुलात्मकं प्रत्येकं ज्यात्रयमानं ३६।४ । अथ चतुर्ज्ये चतुरस्रकुण्डे करामेऽकले । केन चत्वारि रामेण त्रीणि । अकले अङ्गुलषोडशांशोने । तथाच अङ्गुलषोडशांशयूकाचतुष्टयहीने चतुस्त्रिंशदङ्गुले वृत्तव्यासे सति ३३।७।४ । सिद्धाश्चतुर्विंशत्यङ्गुलपरिमिताः २४ चतस्रो ज्या भवन्ति । अथ पञ्चज्ये पञ्चास्रकुण्डे । क्ष्मारामे सयवे । क्ष्माशब्देन एकं रामेण त्रीणि यवाधिकैकत्रिंशदङ्गुले वृत्तव्यासे ३१।१ सति । अधिपादधृतयः अधिना यूकात्रयं पादेन यवद्वयं धृत्याऽष्टादश सयूकात्रययवद्वयाष्टादशाङ्गुलमिताः १८।२।३ पञ्च ज्या भवन्ति । अथ षड्ज्ये षडस्रकुण्डे । अनंघ्रौ खरामे । खेन शून्यं रामेण त्रीणि अनंघ्रियवद्वयन्यूनता यवद्वयात्मकाङ्गुलपादोने त्रिंशदङ्गुले वृत्तव्यासे २९।६ सति । दलं । दलशब्देन पूर्वार्धं ग्राह्यं । यवोनपञ्चाशदङ्गुलमिताः १४।७ षट् ज्या भवन्ति । अथ सप्तज्ये सप्तास्रकुण्डे गोद्वौ । गोशब्देन नव द्विशब्देन द्वे एकोनत्रिंशदङ्गुले वृत्तव्यासे २९ सति । अत्रियवत्रिभूः । त्रिशब्देन त्रीणि भुवैकं अत्रियवशब्देन यवत्रयन्यूनता । यवत्रयोनत्रयोदशाङ्गुलमिताः १२।५ सप्त ज्या भवन्ति । अथाष्टज्ये अष्टास्रिकुण्डे अपदले अपगतं दलं अङ्गुलार्धं यस्मात्सप्तास्रव्यासमानात्तादृशे सार्धाष्टाविंशत्यङ्गुले वृत्तव्यासे २८।४ सति । निस्त्रियूकाः शिवाः निर्गतास्तिस्रो यूकायेभ्यस्तादृशाः शिवा एकादश यूकात्रयोनैकादशाङ्गुलमिताः १०।७।५ अष्टौ ज्या भवन्ति ॥ ३ ॥

सिताक्षरा—अथैकहस्तकुण्डानां वृत्तार्थं व्यासान् भुजवतां भुजमानानि चाह वृत्तेनैकेन—वृत्त इति । अत्राधिशब्दः कतिपययूकाधिक्यार्थः । अङ्कोक्तिस्त्वङ्गुलपरा । पादादिशब्दस्त्वेकाङ्गुलावयवपरः । तेन वृत्तकुण्डे पद्मकुण्डे षड्यूकाधिकसप्तविंशत्यङ्गुलव्यासः । २७।०।६ अत ऊर्ध्वमेकज्यादिक्रमेणाह—एकज्ये अर्धचन्द्रे अधिपदद्व्यग्निः यूकात्रययवद्वयाधिकाष्टत्रिंशदङ्गुलात्मकः ३८।२।३। द्विज्ये योनिकुण्डे सपात्खानलः । यव-

द्वयाधिकत्रिंशदङ्गुलात्मकः ३०।२। त्रिज्ये त्र्यस्रे दृग्वेदे सयवे रसत्रि सदलं। एकयवाधिकद्विचत्वारिंशदङ्गुलके ४२।१ वृत्ते सार्धषट्त्रिंशदङ्गुलाः ३६।४ तिस्रो ज्या भवन्ति। श्लोकान्ते वक्ष्यमाणं ज्या इति पदं त्र्यस्रादौ योज्यं। चतुर्ज्ये चतुरस्रे सिद्धाः करामेऽकले। यूकाचतुष्टयोनचतुस्त्रिंशदङ्गुले वृत्ते ३३।७।४ चतुर्विंशत्यङ्गुलाः २४ चतस्रो ज्याः। पञ्चज्ये पञ्चास्रे क्ष्मारामे सयवेऽधिपादधृतयः। एकयवाधिकैकत्रिंशदङ्गुले वृत्ते ३१।१ यूकात्रययवद्वयाधिकाष्टादशाङ्गुलाः १८।२।३ पञ्च ज्या भवन्ति। षड्ज्ये षडस्रे अनंग्नौ खरामे दलं। पादोनत्रिंशदङ्गुले वृत्ते २९।६ यवोनपञ्चदशाङ्गुलाः १४।७ षट् ज्याः। सप्तज्ये सप्तास्रे गोद्वावत्रियवत्रिभूः एकोनत्रिंशदङ्गुले वृत्ते २९ पञ्चयवाधिकद्वादशाङ्गुलाः १२।५ सप्त ज्याः। अष्टज्ये अष्टास्रे अपदले ज्या निस्त्रियूकाः शिवाः। गोद्वावित्यनुवर्तते। गोद्वावपदले। सार्धाष्टाविंशत्यङ्गुले वृत्ते २८।४ यूकात्रयोनैकादशाङ्गुलाः १०।७ अष्टौ ज्या भवन्तीत्यर्थः॥ अथ भुजवत्कुण्डानां व्यासोक्तिः सप्तम्यन्ता। भुजोक्तिः प्रथमान्तेति ज्ञेयम्॥२॥

सुप्रभा—अथ दशविधानामप्येकहस्तात्मककुण्डानां व्यासान्, भुजवतां भुजमानानि चाह—वृत्तेऽब्ज इति। अत्र यत्रयत्राधिशब्दः प्रयुक्तः स तत्र तत्र कतिपययूकाधिक्यलक्षकः। तथा अङ्कसूचकाः शब्दा अङ्गुललक्षकाः। तथा पादादिशब्दा एकाङ्गुलावयवीभूतयवलक्षका इति ग्रन्थकर्तुः संकेतः। वृत्ते वृत्तकुण्डे अब्जे पद्मकुण्डे। अधिभैः। अधिशब्देन यूकापञ्चकं। भशब्दो नक्षत्रवाची। ते च सप्तविंशतिकाः। अतो भशब्देन लक्षणया सप्तविंशतिसंख्यां गृहीत्वा "अङ्कानां वामतो गति"रितिन्यायेन सप्तविंशत्यङ्गुलैः पञ्चयूकाभिः। वलयो व्यासः। तत्परिमितवृत्तव्यास २७।०।५ इत्यर्थः। इत उत्तरं ज्यावृद्धिक्रमादष्टौ कुण्डानि लक्ष्याणि। तत्क्रमेणैव व्यासा अपि कथ्यन्ते। तत्र प्रथमं क्रमप्राप्तस्यार्धचन्द्रस्य व्यासमाह—एका धनुःप्रत्यंचासदृशी ज्या यस्य तस्मिन्नेकज्येऽर्धचन्द्राभे कुण्डे। अधिपदह्यग्निः। अधिना यूकात्रयं पदा यवद्वयं अहिना अष्टौ अग्निना त्रीणि। अष्टत्रिंशदङ्गुलयवद्वययूकात्रयात्मको ३८।२।३ वृत्तव्यासः। अथ द्विज्ये योनिकुण्डे सपात्खानलः। पादेन यवद्वयेन सहितः सपात्। खेन शून्यं अनलेन त्रीणि। त्रिंशदङ्गुलयवद्वयात्मको ३०।२ वृत्तव्यासः। अथ त्रिज्ये त्रिको-

णकुण्डे। इत आरभ्य व्यासमानं भुजमानं चाह। तत्र सप्तम्या व्यासमानं प्रथमया भुजमानमित्यनुसंधेयं। इग्वेदे सयवे। यवेन सहिते। इशा द्वे वेदेन चत्वारः। द्विचत्वारिंशदङ्गुलैकयवात्मके ४२।१ वृत्तव्यासे रसत्रि सदलं। दलेनाङ्गुलार्धमर्थाद्यवचतुष्कं तेन सहितं। रसेन षट् त्रिशब्देन त्रीणि। षट्त्रिंशदङ्गुलयवचतुष्टयात्मिकाः ३६।४ तिस्रो ज्या भवन्ति। अथ चतुर्ज्ये चतुरस्रकुण्डे। सिद्धाः करामेऽकले। अकले। कलया षोडशांशः। अर्थादङ्गुलषोडशांशो यूकाचतुष्टयात्मकः स नास्ति यस्मिंस्तादृशे। तद्रहिते इत्यर्थः। केन चत्वारि रामेण त्रीणि। यूकाचतुष्टयहीने चतुस्त्रिंशदङ्गुलात्मके ३३।७।४ वृत्तव्यासे। सिद्धाः सिद्धशब्देन चतुर्विंशाङ्गुलात्मका २४ श्चत्वारो भुजाः। अथ पञ्चज्ये पञ्चकोणकुण्डे। क्ष्मारामे सयवे। सयवे यवेन सहिते। क्ष्माशब्देनैकं रामेण त्रीणि। एकत्रिंशदङ्गुलैकयवात्मके ३१।१ वृत्तव्यासे। अधिपादधृतयः। अधिना यूकात्रिकं पादेन यवद्वयं धृत्याऽष्टादश। अष्टादशाङ्गुलयवद्वययूकात्रयात्मिकाः १८।२।३ पञ्च ज्याः। अथ षड्ज्ये षडस्रकुण्डे। अनंघ्रौ खरामे। नास्ति अंघ्रिः पादोऽर्थाद्यवद्वयं यस्मिंस्तादृशे। तद्रहिते इत्यर्थः। खेन शून्यं रामेण त्रीणि। यवद्वयहीने त्रिंशदङ्गुलात्मके २९।६ वृत्तव्यासे दलं। अत्र दलशब्देन वृत्तव्यासार्धो गृह्यते। स च यवोनपञ्चदशाङ्गुलात्मकः १४।७ एतन्मिताः षड्भुजाः। अथ सप्तज्ये सप्तकोणे कुण्डे। गोद्वौ। गोशब्देन नव द्विशब्देन द्वे। एकोनत्रिंशदङ्गुलात्मके २९ वृत्तव्यासे। अत्रियवत्रिभूः। त्रयो यवास्त्रियवाः न सन्ति यस्यां तादृशी। त्रिशब्देन त्रीणि भुवा एकं। यवत्रयहीनास्त्रयोदशाङ्गुलात्मिकाः १२।५ सप्त ज्या भवन्ति। अथाष्टज्येऽष्टास्रकुण्डे। गोद्वाविति पदमनुवर्त्य तस्मिन्नपदले कृते सति एकोनत्रिंशत्तमादङ्गुलादर्धे यवचतुष्टये न्यूने कृते सति। अष्टाविंशत्यङ्गुलयवचतुष्टयात्मके २८।४ वृत्तव्यासे। ज्या निस्त्रियूकाः शिवाः। निर्गतास्तिस्रो यूका येभ्यस्तादृशाः। शिवशब्देनैकादश यूकात्रयहीना एकादशाङ्गुलात्मकाः १०।७।५ अष्टौ भुजा भवन्ति। अत्रैकज्यस्य ज्यामानं व्यासपरिमितत्वेन प्रत्यक्षं दृश्यते। द्विज्यस्य ज्यामानं द्विज्यस्य व्यस्तकल्पितत्वात्तज्ज्यामानेन गतार्थत्वाच्च नोक्तम्। अस्य सर्वस्योपपत्तिस्तु ग्रन्थकर्ता "वृत्तेऽब्जेऽब्धीष्विभाश्वै"रित्यादिना स्वयमेव वक्ष्यति। ततो विन्यासः

| कुण्डनाम | व्यासमानं | भुजमानं |
|---|---|---|
| वृत्तकुण्डे | २७।०।५ | ० |
| पद्मकुण्डे | २७।०।५ | ० |
| अर्धचन्द्रे | ३८।२।३ | ३८।२।३ |
| योनिकुण्डे | ३०।२।० | ३६।४।० |
| त्र्यस्रकुण्डे | ४२।१।० | ३६।४।० |
| चतुरस्रे | ३३।७।४ | २४।०।० |
| पञ्चास्रे | ३१।१।० | १८।२।३ |
| षडस्रे | २९।६।० | १४।७।० |
| सप्तास्रे | २९।०।० | १२।५।० |
| अष्टास्रे | २८।४।० | १०।७।५ |

इदमेकहस्तात्मकानां दशविधकुण्डानां व्यासभुजमानप्रदर्शकं कोष्टकम्—

इति तृतीयश्लोकार्थः ॥ ३ ॥

द्विघ्नोऽब्धिघ्ने फलेंशुर्दलिनि विदशमेनांघ्रिणेद्धो द्विनिघ्ने
त्र्यंशेन स्वांघ्रिभाजा वियुगगुणलवस्त्वंघ्रिरेतद्भुजादौ ।
कोट्यः पूर्वोत्तरांश्चोरिह वरुणदिशः पुच्छपार्श्वास्यपार्श्वा
अंसौ पार्श्वास्यमध्यावनु जघनयुगं मध्यतः पुच्छकुक्ष्योः ॥४॥

मरीचिका—एवमेकहस्तेषु कुण्डेषु वलयादिमानान्युक्त्वा द्विहस्तचतुर्हस्तषड्ढस्ताष्टहस्तेषु तद्वृद्धिप्रकारमाह—द्विघ्नो द्विगुणितः अंशुः मूलसूत्रं कार्यं । फलेऽब्धिघ्ने सति । चतुर्विंशत्यङ्गुलो हस्तः तत्परिमितस्य कुण्डस्य फलं चतुर्विंशत्या गुणितं चतुर्विंशतिरेव । तच्च षट्सप्तत्यधिकानि पञ्चशतान्यङ्गुलानि भवन्ति । चतुर्हस्ते तु कुण्डे एतदेव फलं चतुर्गुणितं तच्चतुरधिकानि त्रयोविंशतिशतानि । तत्र मूलसूत्राङ्गुलानि अष्टचत्वारिंशद्भवन्ति । एवं सर्वस्मिन्परिमाणे चतुर्गुणिते मूलं द्विगुणमेव कर्तव्यं । दलिनीति । अस्मिन्नेव चतुर्हस्तफले दलिनि अर्धाधिके ३४५६ एतावति फले मूलाङ्गुलानि दशांशोनपादमात्रं वर्धन्ते १०।६।४। ततश्च[1] सार्धयवोनान्येकोनषष्टिरङ्गुलानि षड्ढस्ते

---

१ 'तद्विघ्नमन्त्यें' इति पाठः ।

मूलसूत्रं। यथोक्तं वाजपेयिभिः—"वियवमङ्केष्विति" ५८।७। द्विनिघ्ने द्विगुणिते तु फले ११५२ त्र्यंशेनाष्टभिरङ्गुलैः स्वाङ्घ्रिभाजा स्वचतुर्थांशेन युक्तैः दशभिरित्यर्थः। तैर्युक्तो हस्तश्चतुस्त्रिंशदङ्गुलानि भवन्ति। तत्राप्यंघ्रिरङ्गुलद्वयं। तच्च स्वस्य चतुस्त्रिंशत्तमेन भागेन यूकाचतुष्टयात्मकेन न्यूनमिति। यदेतद्द्विहस्तसूत्रं तदेव द्विगुणितं अष्टहस्तस्य मूलसूत्रं भवति। तदुक्तं वाजपेयिभिः—"नागाङ्गानि यवोनानी"ति। एतदेव वा स्वपञ्चदशांशद्वयोनं षड्ढस्तमूलं ६७।७। तदेवं फलाधिक्यान्मूलाधिक्ये सिद्धे कुण्डोत्पत्तिं वक्तुं परिभाषामाह—कोष्ठ्य इति। प्रागुदक्सूत्रयोर्यो मध्यस्तत आरभ्य वृत्तं कार्यमित्युक्तं। तस्य वृत्तस्य पश्चिमां दिशमारभ्य सूत्रद्वयस्य येऽन्ता वृत्तरेखास्पर्शिनः ते पश्चिमादिक्रमेण पुच्छपार्श्वास्यपार्श्वा भवन्ति। पूर्वान्त आस्यं। पश्चिमान्तः पुच्छं। दक्षिणोत्तरावन्तौ पार्श्वौ तत्र पार्श्वास्ययोर्मध्यौ अंसौ पुच्छपार्श्वयोर्मध्यौ जघने॥ ४॥

दीधितिः—एवमेकहस्तेषु कुण्डेषु वलयादिमानान्युक्त्वा द्विहस्तादौ तद्वृद्धिप्रकारमाह—द्विघ्नोऽब्धिघ्नेति। अब्धिघ्ने फले। अब्धयश्चत्वारः। सूर्यसिद्धान्ते समुद्रस्यैकत्वकथनेऽपि चतुर्दिक्संबद्धत्वेन संख्याग्रहणे चत्वारो गृहीताः। तद्गुणिते फले मूलसूत्रं द्विगुणं कर्तव्यं। फलं नाम कुण्डान्तर्वर्तिनः अङ्गुलप्रमाणाश्चतुरस्राः समाः कोष्ठाः। ते चैकहस्तकुण्डे षट्सप्तत्यधिकपञ्चशतसंख्याकाः। तत्साधनमग्रे वक्ष्यति। दलिनि। दलमस्यास्तीति दली तस्मिन्। मत्वर्थे इनिः। फलमर्धीकृत्य पूर्वफलयोजनाकाङ्क्षायां। विदशमेनांघ्रिणा। विदशमेन स्वकीयदशमांशरहितेन अंघ्रिणा मूलसूत्रचतुर्थांशेन इद्धः मूलसूत्रं युक्तं कर्तव्यं। द्विनिघ्ने। फले द्विगुणे कर्तव्ये सति त्र्यंशेन मूलसूत्रतृतीयांशेन। स्वांघ्रिभाजा। स्वांघ्रिं भजति योगं प्राप्नोतीति तथा तेन। वियुगगुणलवस्त्वंघ्रिः। स्वचतुस्त्रिंशदंशेन रहितोऽङ्घ्रिर्ग्राह्यः। अत्रैतदुक्तं भवति—मूलसूत्रस्य तृतीयांश एकत्र स्थाप्यः। तस्यैव चतुर्थांशोऽन्यत्र। सः स्वचतुस्त्रिंशदंशेन रहितः कार्यः। तत्सहिततृतीयांशयुक्तं मूलसूत्रं द्विनिघ्नक्षेत्रफलवृत्तस्य व्यासो भवति। एतद्भुजादौ। अयमेव न्यायो भुजादावपि ज्ञेयः। अत्रोपपत्तिस्तु दीक्षितैर्विस्तरतो लिखिता। अथवा "वृत्तेऽब्जेऽब्धीष्विभाश्वै"रित्यादिना सिद्धानां व्यासादीनां सिद्धिः प्रकारान्तरेण यथा

भवति तथा दर्शितमाचार्येण। कोष्ठ इति। अत्र वक्ष्यमाणप्रकारेण मण्डपः साध्यः। तत्रोपोद्घातत्वेन वक्तुं योग्या पूर्वपीठिका ग्रन्थान्तरोक्तत्वात् मूलग्रन्थानुक्ताऽपि टीकाकारेण दर्शनीयाऽतो लिख्यते। शारदातिलके—"नक्षत्रराशिवाराणामनुकूले शुभेऽहनि। ततो भूमितले शुद्धे तुषाङ्गारविवर्जिते॥ पुण्याहं वाचयित्वा तु मण्डपं कारयेच्छुभ"मिति। भूमिपरीक्षा पञ्चरात्रे—"तत्र भूमिं परीक्षेत वास्तुज्ञानविशारदः। स्फुटिता च सशल्या च वल्मीकारोहिणी तथा॥ दूरतः परिवर्ज्या भूः कर्तुरायुर्धनापहा। ईशकोणे प्लवा सा च कर्तुः श्रीदा सुनिश्चितम्। पूर्वप्लवा वृद्धिकरी वरदा तूत्तरप्लवा। शेषकाष्ठाप्लवा भूमिर्धनायुर्गृहनाशिनी॥ ब्राह्मणी घृतगन्धा स्यात्क्षत्रिया रसगन्धभृत्। क्षारगन्धा भवेद्वैश्या शूद्रा विड्गन्धिनी क्षितिः॥ ब्राह्मणी भूः कुशोपेता क्षत्रिया शरसंकुला। कुशकाशाकुला वैश्या शूद्रा सर्वतृणाकुला"॥ अनिषिद्धा यथा—"सिता पीता तथा रक्ता कृष्णवर्णसमन्विता। स्थिरोदका दृढा स्निग्धा भूमिः सर्वसुखावहा॥ शीतस्पर्शोष्णकाले या वह्निस्पर्शा हिमागमे। वर्षासु चोभयस्पर्शा सा शुभा परिकीर्तिता"॥ हयग्रीवपञ्चरात्रे—"सुन्दरीणां रतिर्यत्र पुरुषैः सह सत्तम। काश्मीररचनामोदकर्पूरागरुगन्धिनी॥ कमलोत्पलगन्धा च जातीचम्पकगन्धिनी। पाटला मल्लिकागन्धा नागकेसरगन्धिनी॥ दधिक्षीराज्यगन्धा च मदिरासवगन्धिनी। सुगन्धिव्रीहिगन्धा च शुभगन्धियुता च या॥ सर्वेषामेव वर्णानां भूमिः साधारणी मता। कुसुमप्रकरस्तद्वद्यस्यां न म्लानिमृच्छति। न निर्याति यथा दीपस्तोयं शीघ्रं न जीर्यति॥ मधुरा च कषाया च अम्लानकटुका तथा। कुशैः शरैस्तथा काशैर्दूर्वाभिर्या च संभृते"ति। प्रयोगसारे—"वितस्तिमात्रविस्तारं निर्माय विवरं भुवि। निक्षिपेत्ता मृदस्तस्मिंस्तासु शिष्टासु शोभनम्॥ समासु मध्यमं विन्द्यान्न्यूनास्वधममुच्यते। परीक्ष्यैवं प्रयत्नेन त्यक्त्वा भूमिं कनीयसीम्॥ अङ्गारतुषकेशादिहीनं कृत्वा तु भूतलम्"। वासिष्ठ्याम्—"खन्यमाने यदा कुण्डे पाषाणः प्राप्यते यदि। तदाऽपमृत्यवे त्वस्थिकेशाङ्गारैर्धनक्षयः॥ भस्मना च भयं प्रोक्तं तुषैः प्रोक्ता दरिद्रते"ति। वास्तुदेहज्ञानं सोमशम्भौ—"जानुनी कूर्परासक्ते दिशि वातहुताशयोः। पैत्र्यां पादपुटौ रौद्र्यां शिरोऽस्य हृदयेऽञ्जलि"रिति। इदमभीष्टभूमौ नव कोष्ठचक्रं विधाय दृष्टं द्रष्टव्यम्। भूमिशोधनेऽन्येऽपि दाहा-

दयः संस्काराः स्मृत्युक्ता अनुसंधेयाः विस्तरभयान्नेह लिख्यन्ते । हयशीर्षपञ्चरात्रे—"भूमिं तोयसमां कृत्वा दर्पणोदरसंनिभा"मिति । मत्स्यपुराणे—"वराहं कूर्मशेषौ च क्षितिं चैव विधानतः । पूजयेद्वास्तुकार्येषु विधिना साधकोत्तम" इति । एवं प्रथमतस्तृणदाहखननादिभिर्भूमिं संशोध्य वज्रलेपवद्दृढां जलसंप्लावनेनादर्शोदरवत् समां च कृत्वा तन्त्रोक्तप्रकारेण प्राचीं प्रसाध्य तत्र वक्ष्यमाणप्रकारेण मण्डपं विधाय वेद्याः समन्तादष्टदिक्षु वक्ष्यमाणप्रकारेष्वन्यतमपक्षान्ते मेखलान्तो यथा भवेत्तथा कुण्डमध्यं ज्ञात्वा तत्र दिग्विदिक्सूत्राणि दत्त्वा तत्तद्दिक्षु कुण्डमानव्यासार्धेन वृत्तं कृत्वा तत्र पूर्वतः मुखादिपरिभाषामाह—कोष्ठ्य इति । पूर्वोत्तरांश्चोः । अंशुः सूत्रं । कोष्ठ्यो वृत्तसंबद्धा अन्ताः । वरुणदिशः पश्चिमदिशमारभ्य । पुच्छपार्श्वास्यपार्श्वाः । वरुणदिशि पुच्छं । उत्तरदिशि पार्श्वं । पूर्वदिशि मुखं । दक्षिणदिशि पार्श्वं । अंसौ पार्श्वास्यमध्यौ । अनु अनुलक्ष्यीकृत्य अंसौ भवतः । पुच्छकुक्ष्योर्मध्यतः अनु जघनयुगं कटीद्वयमित्यर्थः । विदिक्संबद्धवृत्तचतुष्टयचिह्नेषु प्राग्भागे अंसद्वयं पश्चिमभागे जघनद्वयमिति परिभाषा कृता प्राच्यां मुखे कल्पिते सति सर्वाः संज्ञा अन्वर्था भवन्ति । तत्र स्वायंभुवे—"प्राग्भियाम्यकुण्डानां प्रोक्ता योनिरुदङ्मुखी । पूर्वामुखाः स्थिताः शेषा यथाशोभं व्यवस्थिताः" । त्रैलोक्यसारे—"नवमस्यापि कुण्डस्य योनिर्दक्षिणतः स्थिते"तिवचनात् आचार्यकुण्डमारभ्य दक्षिणदिक्कुण्डपर्यन्तं दक्षिणदिशि कुण्डयोनिकथनात् उत्तरादितः प्रागादिव्यवहारः कार्यः ॥ ४ ॥

पद्मिनी—अथ कुण्डव्यासज्यामानं चोक्त्वेदानीं वृद्धिन्यूनप्रकारं वृत्तार्धेनाह—पादाद्वृद्धौ फलेंशुर्विधृतिलवगजांशोदिगंशोनकांशोदन्तांशोनाग्निभागः सयुगगुणलवोनांघ्रियुग्वह्निभागः । उदाहरणम्—एकहस्तफलं ५७६ अस्य पादः १४४ एतत्सहिते मूलसूत्राष्टमांशः ३ अस्याष्टादशांशः ०।१।२।५।२।५।३ अनेनोनोष्टमांशः २।६।२।५।२।५ एतत्सहितो मूलांशुः २६। ६।३ पादत्रयसहिते २४ अस्य दन्तांशोनाग्निभागः ७।६ एतद्युक्तोंशुः ३१।६ अन्यत्प्रसिद्धमेव । अब्धिघ्ने फले अंशुर्द्विघ्नः इष्टफले चतुर्गुणिते कर्तव्ये सति मूलसूत्रं द्विगुणं कार्यं तेन सूत्रेण वलयं कार्यं । तच्चतुर्गुणितफलकं भवति । अत एव मूलसूत्रं द्विभक्ते सति सपादफलं ददातीति सिद्धं । स्वाभीष्टफले स्वार्ध-

सहिते कर्तव्ये मूलसूत्रं स्वदशमांशरहितेनांघ्रिणा युक्तं कार्यं । द्विगुणितं तत्तु चतुर्स्त्रिंशांशरहितस्वांघ्रिणा युक्तो यो मूलसूत्रस्य त्र्यंशः तेन युक्तं मूलसूत्रं कार्यं । एतद्भुजादौ इदं व्यासस्य यदुक्तं तद्भुजादावपि द्रष्टव्यं । आदिपदेन योन्यादीनां संग्रहः । उदाहरणम्—चतुरस्रस्य भुजः २४ द्विगुणितः ४८ अयं चतुर्हस्तात्मककुण्डस्य भुजः । एवमेकहस्तस्य भुजः २४ अस्यांघ्रिः ६ अयं विदशमः ५।३ अनेन युक्तो भुजः २९।३।१।४ अयं द्विगुणितः षड्ढस्ते मूलं ५८।७ अल्पांतरत्वाद्यवोनैकोनषष्टिः । तदेवोक्तं ग्रन्थकारैः वियवमङ्केष्विति । भुजः २४ अस्य त्र्यंशः ८ अस्यांघ्रिः २ अयं स्वचतुर्स्त्रिंशत्तमेन भागेनोनः १।७।४ एतत्सहितेन त्र्यंशेन युक्तो भुजः ३३।७।४ अयमेव एकहस्तकुण्डस्य कर्णः । अनेन एकहस्तस्य यः कर्णः स एव हस्तद्वयस्य भुज इति सिद्धम् । युक्त इति पूर्वस्यैवानुवृत्तिः । एवं फलाधिक्यान्मूलाधिक्ये सिद्धे कुण्डोत्पत्तिं वक्तुं परिभाषां वृत्तार्धेनाह—कोष्ठ्य इति । पूर्वोत्तरांश्वोः कोष्ठ्यः इह वरुणदिश आरभ्य पुच्छपार्श्वांसपार्श्वाः क्रमेण चतुर्दिक्ष्विति ज्ञेयं । पार्श्वांस-मध्यौ अंसौ कार्यौ । ईशान्यामाग्नेय्यां चिह्नद्वयं कार्यमिति पुच्छकुक्ष्योर्म-ध्यतः अनुलक्ष्य मध्ये जघनद्वयं कार्यम् । नैरृत्यां वायव्यां च द्वे चिह्ने कार्ये । इदमुपलक्षणं यत्र उदीची पूर्वा तत्र तदारभ्यैव ज्ञेयम् ॥ ४ ॥

नौका—तदेवमेकहस्तात्मकदशविधकुण्डानां वलयादिमानान्युक्त्वा द्विह-स्तचतुर्हस्तषड्ढस्ताष्टहस्तात्मकेषु तेषु व्यासादिवृद्धिप्रकारमाह द्विघ्न इति वृत्तार्धेन । तथाहि एकहस्तस्य चतुर्विंशतिरङ्गुलानि तत्परिमितैकह-स्तस्य फलं चतुर्विंशत्या गुणितं चतुर्विंशतिरेव । तच्च षट्सप्तत्यधिकानि पञ्चशतान्यङ्गुलानि ५७६ भवन्ति । दशविधस्याप्येकहस्तकुण्डस्येदं क्षेत्रफलं दशविधस्यापि द्विहस्तात्मकस्य द्विगुणितं चतुर्हस्तात्मकस्य चतुर्गुणितं षड्ढस्ता-त्मकस्य षड्गुणितमष्टहस्तात्मकस्याष्टगुणितं यथा स्यात्तथा साध्यते । तत्रादौ चतुर्हस्तात्मकमाह—द्विघ्न इति । अब्धिघ्ने चतुर्गुणिते फले २३०४ अपेक्षिते सति अंशुः उक्तवृत्तव्यासः द्विघ्नो द्विगुणितः कर्तव्यः यथा वृत्त-कुण्डे ५४।२।१ तत्र मूलव्यासः २७।०।५ स द्विगुणोजातः । एवमन्य-कुण्डेष्वपि तत्तद्व्यासादिगुणाः कर्तव्याः । तेन चतुर्हस्तात्मकं कुण्डमुत्पन्नं भवति । अथ षड्ढस्तं । अब्धिघ्ने इत्यनुवर्तते । चतुर्गुणिते दलिनि सार्धे

फले सति ३४५६ एकहस्तफले षड्गुणे सतीति फलितोऽर्थः । द्विघ्नोंऽशुरित्यनुवर्तते । अंशुर्मूलव्यासः द्विघ्नश्चतुर्हस्तव्यासतुल्यः सन् । विदशसेनांघ्रिणेद्धः विगतो दशमांशो यस्मात्तादृशेनांघ्रिणा स्वचरणेन इद्धः युक्तः कर्तव्यः । यथा वृत्तकुण्डे ६६।३ तत्र मूलव्यासः २७।०।५ स द्विघ्नश्चतुर्हस्तव्यासतुल्यः ५४।१।२ तस्यांघ्रिः १३।४।२।४ स विदशमः दशमांशोनः १२।१।३।७ तादृशेनांघ्रिणा युक्तो व्यासः ६६।२।५।७ अल्पान्तरत्वादेकलिक्षाधिकयूकाद्वयमधिकं ६६।३ एवमन्येष्वपि तेन षड्हस्तात्मकं कुण्डं भवति । अथ द्विहस्तं । द्विनिघ्ने मूलफले द्विगुणिते ११५२ सति अंशुर्मूलव्यासः स्वांघ्रिभाजा त्र्यंशेनेद्धः स्वस्यात्मनः अंघ्रिं पादं भजति प्राप्नोति स स्वांघ्रिभाक् तादृशेन त्र्यंशेन स्वतृतीयांशेन युक्तः कर्तव्यः । तत्रापि स्वांघ्रिर्वियुगगुणलवश्चतुस्त्रिंशत्तमोंशो यस्मात्तादृशः न तु समग्रः । एवं चतुस्त्रिंशत्तमोंशोनात्मांघ्रियुक्तस्वतृतीयांशेन युक्तो वृत्तव्यासः कर्तव्य इति निष्पन्नं । यथा वृत्तकुण्डे ३६।२।३ तत्र मूलव्यासः २७।०।५ तस्य त्र्यंशः ९।०।१।५ तस्य स्वांघ्रिः २।२।०।३ स वियुगगुणलवः स्वचतुस्त्रिंशत्तमांशोनः २।१।४।१ अनेन स्वांघ्रिणा युक्तस्त्र्यंशः ११।१।५।६ अनेनेद्धो व्यासः ३८।२।२।६ अल्पान्तरत्वाल्लिक्षाद्वयमधिकं ३८।२।३ एवमन्येष्वपि । तेन द्विहस्तात्मकं कुण्डं जायते । अथाष्टहस्तं । तद्द्विघ्नमन्त्य इति । अंशौ अष्टघ्ने मूलफले ४६०८ सति अंशुः मूलव्यासः तद्द्विघ्नः द्विगुणितः कर्तव्य इत्यर्थः । यथा वृत्तकुण्डे ७६।४।६ तत्र मूलव्यासः २७।०।५ तत्र द्विहस्तव्यासः ३८।२।३ तद्द्विगुणितः सः ७६।४।६ एवमन्येष्वपि हस्तात्मकं कुण्डं भवति । अनयैव रीत्या भुजवत्कुण्डभुजानां मानं वर्धनीयम् । नन्वेतया प्रक्रियया व्यासवृद्धौ कृतायां सत्यां तत्तद्दिष्टक्षेत्रफलमायातीत्यत्र किं प्रमाणमिति चेत् तर्हि समचतुरस्रकुण्डभुजवृद्ध्या स्पष्टं द्रष्टव्यं । तथाहि एकहस्तात्मकचतुरस्रस्वभुजाश्चतुर्विंशत्यङ्गुलमिता २४ भवन्ति । तत्र चतुर्विंशत्या गुणिता चतुर्विंशतिरेव फलं षट्सप्तत्यधिकानि पञ्चशताङ्गुलानि ५७६ भवन्ति । द्विहस्तात्मकचतुरस्रभुजास्तु स्वचतुस्त्रिंशत्तमांशोनस्वचरणयुक्तस्वतृतीयांशेन युक्ताः सन्तः यूकाचतुष्टयोनचतुस्त्रिंशदङ्गुलमिताः ३३।७।४ भवन्ति । तत्रापि यूकाचतुष्टयोनचतुस्त्रिंशदङ्गुलानि यूकाचतुष्टयोनचतुस्त्रिंशदङ्गुलैर्गुणितानि यूकाचतुष्टयोनचतुस्त्रिंशदङ्गुलान्येव फलं पूर्वफलद्विगुणितं द्विपञ्चाशदधिकैकादशशताङ्गुलानि ११५२ भवन्ति । एवं

चतुर्हस्तात्मकस्य भुजा अपि अब्धिघ्ने द्विघ्न इत्यनेन गुणिताः सन्तोऽष्टचत्वारिंशदङ्गुलमिता ४८ भवन्ति। तत्राप्यष्टाचत्वारिंशद्भिर्गुणिता अष्टाचत्वारिंशदेव फलं पूर्वफलचतुर्गुणितं चतुरधिकानि त्रयोविंशतिशतान्यङ्गुलानि २३०४ भवन्ति। एवं षड्ढस्तात्मकस्य बाहवो दलिनि विदशमेनांघ्रिणेद्ध इत्यनेन स्वदशमांशहीनस्वपादयुक्तचतुर्हस्तभुजाङ्गुलमिताः ६७।७ भवन्ति। तत्रापि यवोनाष्टषष्ट्या गुणिता यवोनाष्टषष्टिरेव फलं पूर्वफलाष्टगुणितं अष्टोत्तराणि षट्चत्वारिंशच्छतान्यङ्गुलानि ४६०८ भवन्ति। एवं च दशानामप्येकहस्तात्मककुण्डानां प्रागुक्तवृत्तव्यासा उक्तरीत्या वर्धिताः सन्तः स्वस्ववृत्तगर्भे तावत्तावद्वर्धितभुजमानकतत्तद्धस्तात्मककुण्डोत्पत्तिं कुर्वन्तीति। तदेवं फलाधिक्याद्व्यासाधिक्ये सिद्धे कुण्डोत्पत्तिप्रक्रियां वक्तुं परिभाषामाह—कोट्य इति। पूर्वोत्तरांश्चोः प्रागुदक्सूत्रयोः कोट्यः दिक्चतुष्टयसंस्थवृत्तरेखास्पर्शिनोऽन्ताः इहास्यां कुण्डोत्पत्तिक्रियायां वरुणदिशः प्रतीचीदिक्तः पुच्छपार्श्वास्यपार्श्वा भवन्ति। प्रत्यगन्तः पुच्छं प्राग्गतो मुखं दक्षिणोदग्गतौ पार्श्वौ पार्श्वास्यमध्यौ पार्श्वमुखमध्यभागौ अंसौ भवतः। पुच्छकुक्ष्योः पुच्छपार्श्वयोः मध्यतो जघनयुगं मध्यभागौ श्रोण्यावित्यर्थः॥ ४॥

सिताक्षरा—अथेदानीं व्यासस्य वृद्धिन्यूनप्रकारं वृत्तार्धेनाह—द्विघ्न इति। अब्धिघ्ने चतुर्गुणिते फले कर्तव्ये अर्थाच्चतुर्हस्तं कुण्डं कर्तव्यं चेत् अंघ्रुरेकहस्तव्यासो द्विगुणितश्चेच्चतुर्हस्तकुण्डव्यासो भवति। एवं दलिनि सार्धे कर्तव्ये एकहस्तकुण्डव्यासस्य अंघ्रिः स्वदशमांशेनोनः सन् व्यासे युक्तश्चेत् सार्धफलदव्यासो भवति। एवं द्विगुणिते कर्तव्ये एकहस्तव्यासस्य त्र्यंशः स्वचतुर्थांशेन स्वचतुस्त्रिंशदंशोनेन युक्तस्तेनांघ्रुर्युक्तश्चेद्द्विहस्तफलदो भवति। एवं द्विहस्तव्यासे द्विगुणिते अष्टहस्तफलदो भवति। एवं चतुर्हस्तव्यासस्य सार्धकरणरीत्या संस्कृते षड्ढस्तफलदो भवति। अथवा एकहस्तव्यासस्य सार्धकरणरीत्या संस्कृत्य द्विगुणिते षड्ढस्तव्यासो भवतीत्यर्थः। अथोदाहरणं क्रमेण वृत्ते

एकहस्तव्यासः २७।०।६ अयं द्विगुणितः ५४।१।४ जातोयं चतुर्हस्तव्यासः।

अथ द्विहस्तफलव्यासे कर्तव्ये एकहस्तव्यासः २७।०।६ अस्य त्र्यंशः ९।०।२ अस्यांघ्रिः २।२।०।४ अस्य चतुस्त्रिंशदंशः ०।०।४।२ अनेन न्यूनोंघ्रिः २।१।४।२ अनेन युक्तस्त्र्यंशः ११।१।० अनेन युक्तोंघ्रुः ३८।२।४।२ जातोयं द्विह-

स्तफलव्यासः ॥ अथ सार्धे कर्तव्ये एकहस्तव्यासः २७।०।६ अस्यांघ्रिः ६।६।१।४ अस्य दशमोंऽशः ०।५।३।३ विदशमोंघ्रिः ६।०।६।७ अनेन युक्तोंशुः ३३।१।४।१ जातोऽयं सार्धफलव्यासः । अत्र चतुर्हस्तफलस्य द्विहस्तफलस्य चोपयोगात्करणसार्थक्यं । सार्धहस्तफलस्य क्वाप्युपयोगाभावात् तत्कथनमनर्थकमिति चेन्न । स्वोक्तषडस्रेण तदुपयोगादिति पूर्वमुक्तम् । तथाहि सार्धहस्तफलव्यासः ३३।१।४।१ द्विगुणः ६६।२।०।२। अथवा चतुर्हस्तफलव्यासः ५४।१।४ अस्यांघ्रिः १३।४।३ अस्य दशमांशः १।२।६।६ अनेन हीनोंऽघ्रिः १२।१।४।२ अनेन युक्तोंशुः ६६।३।०।२ जातः स एव षड्ढस्तफलव्यासः । अथाष्टहस्तफले द्विहस्तोंशुः ३८।२।४।२ अयं द्विगुणः ७६।५।०।४ जातोऽयमष्टहस्तफले द्विहस्तोंशुः ३८।२।४।२ अयं द्विगुणः ७६।५।०।४ जातोऽयमष्टहस्तस्य फलव्यासः । एवमुक्तकुण्डानामुक्तैकद्विचतुःषडष्टहस्तपर्यन्तं व्यासवृद्धिन्यूनप्रकारो बोध्यः ॥

बालावबोधार्थं सर्वेषां करणं पृथक्पृथगुदाह्रियते । तत्र पद्मकुण्डस्य वृत्तवत्सर्वम् ॥ अथार्धचन्द्रे एकहस्तव्यासः ३८।२।३ द्विगुणः ७६।४।६ जातोयं चतुर्हस्तफलव्यासः । अथ द्विगुणे एकहस्तव्यासः ३८।२।३ अस्य त्र्यंशः १२। ६।१ अस्यांघ्रिः ३।१।४।२ अस्य चतुस्त्रिंशदंशः ०।०।६ अनेन हीनोंघ्रिः ३।०। ६।२ अनेन युक्तत्र्यंशः १५।६।७।२ अनेन युक्तोंशुः ५४।१।२।२ जातोऽयं द्विहस्तफलव्यासः । अथ षड्ढस्ते चतुर्हस्तव्यासः ७६।४।६ अस्यांघ्रिः १९।१। १।४ अस्य दशमांशः १।७।२।४।३ अनेन हीनोंघ्रिः १७।१।६।७।५ अनेन युक्तोंशुः २३।६।४।७ जातोयं षड्ढस्तफलव्यासः ॥ अथाष्टहस्तफले द्विहस्तफलव्यासः ५४।१।२।२ द्विगुणः १०८।२।४।४ जातोऽयमष्टहस्तफलव्यासः । अथ योनिकुण्डे एकहस्तव्यासः ३०।२ द्विगुणः ६०।४ जातश्चतुर्हस्तफलः ॥ अथ द्विहस्ते एकहस्तव्यासः ३०।२ अस्य त्र्यंशः १०।०।५।२।५ अस्यांघ्रिः १।४।१।२।५ अस्य चतुस्त्रिंशदंशः ०।०।४।६ अनेनोनोंघ्रिः २।३।४।४।५ अनेन युक्तत्र्यंशः १२।४।१।७।२ अनेन युक्तोंशुः ४२।६।१।७।२ जातोयं द्विहस्तफलव्यासः । अथ षड्ढस्तफले चतुर्हस्तोंशुः ६०।४ अस्यांघ्रिः १५।१ अस्य दशमलवः १।४।१ अनेन हीनोंघ्रिः १३।४।७ अनेन युक्तो व्यासः ७४।०।७ जातः षड्ढस्तफलकः ॥ अथाष्टहस्तफलके व्यासः ४२।६।१।७।२ द्विगुणः

८५।४।३।६।४ जातोयमष्टहस्तफलव्यासः ॥ अथ त्र्यस्रकुण्डे एकहस्तफले व्यासः ४२।१ द्विहस्तफलेऽस्य त्र्यंशः १४।०।२।५ अस्यांघ्रिः ३।४।०।५ अस्य युगगुणलवः ०।०।६।५ अनेनोनोंघ्रिः ३।३।२ अनेन युक्तत्र्यंशः १७।३।४।५ अनेन युक्तोंघ्रिः ५९।४।४।५ जातोयं द्विहस्तफलव्यासः ॥ अथ चतुर्हस्तफले एकहस्तव्यासः ४२।१ अयं द्विगुणः ८४।२ जातश्चतुर्हस्तफलव्यासः ॥ अथ षड्हस्तफले चतुर्हस्तव्यासः ८४।२ अस्यांघ्रिः २१।०।४ अस्य दशमलवः २।०।७ विदशमोंघ्रिः १८।७।५ अनेन युक्तोंघ्रिः १०३।१।५ जातोयं षड्हस्तफलकः। अथाष्टहस्तफले द्विहस्तव्यासः ५९।४।४।५ द्विगुणः ११९।१।१।२ जातोयमष्टहस्तफलव्यासः ॥ अथ चतुरस्रे एकहस्तव्यासः ३३।७।४ द्विहस्तेऽस्य त्र्यंशः ११।२।४ अस्यांघ्रिः २।६।५ अस्य युगगुणलवः ०।०।५ अनेनोनोंघ्रिः २।६ अनेन युक्तत्र्यंशः १४।०।४ अनेन युक्तोंघ्रिः ४८ जातोयं द्विहस्तफलव्यासः ॥ अथ चतुर्हस्ते एकहस्तव्यासः ३३।७।४ द्विगुणः ६७।७ जातोयं चतुर्हस्तफलः ॥ अथ षड्हस्ते चतुर्हस्तव्यासः ६७।७ अस्यांघ्रिः १६।७।६ अस्य दशमोंशः १।५।४।५ अनेनोनोंघ्रिः १५।२।१।३ अनेन युक्तोंघ्रिः ८३।१।३।३ जातोयं षड्हस्तफलः ॥ अथाष्टहस्ते द्विहस्तव्यासः ४८ द्विगुणः ९६ जातोयं चतुरस्रेऽष्टहस्तफलकव्यासः। अथ पञ्चास्रे एकहस्तफलव्यासः ३११ द्विहस्तेऽस्य त्र्यंशः १०।३ अस्यांघ्रिः २।४।६ युगगुणलवः ०।०।५ रहितोंघ्रिः २।४।१ युक्तत्र्यंशः १२।७।१ अनेन युक्तोंघ्रिः ४४।०।१ जातोयं द्विहस्तफलः ॥ चतुर्हस्ते एकहस्तव्यासः ३११ द्विगुणः ६२।२ जातोयं चतुर्हस्तफलस्य ॥ षड्हस्ते चतुर्हस्तव्यासः ६२।२ अस्यांघ्रिः १५।४।४ दशमलवः १।४।३।५ ऊनोंघ्रिः १४।०।०।३ अनेन युक्तश्चतुर्हस्तव्यासः ७६।२।०।३ जातोयं षड्हस्तफलकः ॥ अथाष्टहस्तफले द्विहस्तव्यासः ४४।०।१ द्विगुणः ८८।०।२ जातोयमष्टहस्तफलः ॥ अथ षडस्रे एकहस्तव्यासः २९।६ द्विहस्ते अस्य त्र्यंशः ९।७।२।५ अस्यांघ्रिः २।३।६।५ अस्य युगगुणलवः ०।०।४।५।३ रहितोंघ्रिः २।३।१।५ अनेन युक्तत्र्यंशः १२।२।४।४।५ अनेन युक्तोंघ्रिः ४२।०।४।४।५ जातोयं द्विहस्तफलस्य ॥ चतुर्हस्ते एकहस्तव्यासः २९।६ द्विगुणः ५९।४ जातोयं चतुर्हस्तस्य ॥ अथ षड्हस्ते चतुर्हस्तव्यासस्यांघ्रिः १४।७ अस्य दशमलवः १।३।७।१।५ अनेन रहितोंघ्रिः १३।३।१ अनेन युक्तश्चतुर्हस्तव्यासः ७२।७ जातः षड्हस्तफलस्य ॥ अथाष्टहस्ते द्विहस्तव्यासः ४२।०।४।४।५

द्विगुणः ८४।१।१ जातोयमष्टहस्तफलस्य ॥ अथ समास्रे एकहस्तव्यासः २९ द्विहस्ते अस्य त्र्यंशः ९।५।२।५ अस्यांघ्रिः २।३।२।५ अस्य चतुस्त्रिंशल्लवः ०।०।४।४।३ अनेन ऊनोंघ्रिः २।२।६।०।३ अनेन युक्तस्त्र्यंशः १२।०।०।५।३ अनेन युक्तोंशुः ४१।०।०।५।३ जातोयं द्विहस्तफलकः ॥ चतुर्हस्तफले एकहस्तव्यासः २९। द्विगुणः ५८ जातोयं चतुर्हस्तफलकः ॥ अथ षड्ढस्ते चतुर्हस्तव्यासः २९। द्विगुणः ५८ जातोयं चतुर्हस्तफलकः ॥ अथ षड्ढस्ते चतुर्हस्तव्यासः ५८ अस्यांघ्रिः १४।४ दशमलवः १।३।५ अनेनोनोंघ्रिः १३।०।३ युक्तोंशुः ७१।०।३ जातः षड्ढस्तफलस्य ॥ अष्टहस्तफले द्विहस्तव्यासः ४१। ०।०।५।३ द्विगुणितः ८२।०।१।२।६ अष्टहस्तफलव्यासो जातः ॥ अथाष्टास्रे एकहस्तफले व्यासः २८।४ द्विहस्ते अस्य त्र्यंशः ९।४ अंघ्रिः २।३ चतुस्त्रिंशदंशः ०।०।४।४ ऊनोंघ्रिः २।२।३।४ युक्तस्त्र्यंशः ११।६।३।४ युक्तोंशुः ४०।२। ३।४ जातोयं द्विहस्तफलकः ॥ चतुर्हस्तफले द्विहस्तव्यासः ४०।२।३।४ द्विगुणितः ५७ जातोयं चतुर्हस्तफलकः ॥ षड्ढस्ते चतुर्हस्तव्यासः ५७ अंघ्रिः १४।२ दशमलवः १।३।३।२ ऊनोंघ्रिः १२।६।४ युक्तोंशुः ६९।६।४।६ जातः षड्ढस्तफलकः ॥ अष्टहस्तफले द्विहस्तव्यासः ४०।२।३।४ द्विगुणः ८०।४।७ जातोयमष्टहस्तफलकः ॥ अथ प्रकारान्तरेणोक्ताष्टास्रे एकहस्ते व्यासः ४०।३ द्विहस्तेऽस्य त्र्यंशः १३।३।५।३ अस्य चतुर्थांशः ३।२।७।२ चतुस्त्रिंशदंशः ०।०।६।२।६ ऊनोंघ्रिः ३।२।१ युक्तस्त्र्यंशः १६।५।६।३ युक्तोंशुः ५७।० ६।३ जातोयं द्विहस्तफलकः ॥ चतुर्हस्तफलके एकहस्तव्यासः ४०।३ द्विगुणः ८०।६ जातोयं चतुर्हस्तफलकः ॥ अथ षड्ढस्तफले चतुर्हस्तव्यासः ८०।६ अस्यांघ्रिः २०।१।४ दशमलवः २।०।१।३ ऊनोंघ्रिः १८।१।२।५ युक्तोंशुः ९८। २।७ जातोयं षड्ढस्तफलकः ॥ अथाष्टहस्ते द्विहस्तव्यासः ५७।०।६।३ द्विगुणः ११४।१।४।४ जातोयमष्टहस्तफलकः ॥

अथ त्रैराशिकाभिमानिनां संतोषाय श्रीमत्तातचरणकृतकुण्डार्कपद्मिन्यां व्यासस्य पादाद्यृद्धिप्रकारयुक्त्यन्तरं वृत्तार्धेनोक्तमुदाहृत्यात्र प्रदर्श्यते । तद्यथा । "पादाद्यृद्धौ फलेंऽशुर्विधृतिलवगजांशो दिगंशो नकांशो दंतांशोनाग्निभागो वियुगगुणलवोनांघ्रियुग्वह्निभागः इति । अस्यार्थः— पादादिसहिते कर्तव्ये अंशुर्व्यासो यस्तस्य गजांशेन स्वाष्टादशांशेनां-

शुर्युक्तश्चेत्स पादफलको भवति । द्विगुणे व्यासस्य त्र्यंशः स्वचतुर्थांशः स्वचतुस्त्रिंशदशोनयुक्तस्तेनांशुर्युक्तश्चेद्द्विगुणफलदो भवतीत्यर्थः । अस्मिन्वृत्तार्धे सार्धकरणं द्विगुणकरणं मूलानुवादकं । पञ्चहस्तसप्तहस्तकरणं मूले नोक्तं तदेवात्र प्रदर्शितम् । यथोदाहरणम्—चतुरस्रैकहस्तव्यासः ३३।७।४ द्विहस्ते अस्य त्र्यंशः ११।२ अस्यांघ्रिः २।६।५ अस्य चतुस्त्रिंशदंशः ०।०।५ ऊनोंघ्रिः २।६ युतस्त्र्यंशः १४।०।४ अनेन युतोंशुः ४८ ॥ त्रिहस्ते द्विहस्तव्यासः ४८ अस्यांघ्रिः १२ दशमलवः १।१।५ ऊनोंघ्रिः १०।७।३ युतोंशुः ५८।६।३ जातस्त्रिहस्तफलकः ॥ चतुर्हस्ते एकहस्तव्यासः ३३।७।४ द्विगुणोयं ६७।७ जातश्चतुर्हस्तफलस्य ॥ पञ्चहस्ते चतुर्हस्तव्यासः ६७।७ अस्याष्टमांशः ८।३।७ अस्याष्टादशांशः ०।३।६।१ अनेनोनोऽष्टमांशः ८।०।०।७ अनेन युतोंशुः ७५।७।०।७ जातः पञ्चहस्तफलस्य ॥ षड्ढस्ते चतुर्हस्तव्यासः ६७।७ अंघ्रिः १६।७।६ दशमोंशः १।५।४।४ ऊनोंघ्रिः १५।२।१।३ युक्तोंशुः ८३।१।१।३ जातः षड्ढस्तफलस्य ॥ सप्तहस्ते चतुर्हस्तव्यासः ६७।७ अस्य त्र्यंशः २२।५ अस्य द्वात्रिंशल्लवः ०।५।२।२। अनेनोनस्त्र्यंशः २१।७।२।६ अनेन युक्तोंशुः ८९।६।२।६ जातः सप्तहस्तफलस्य ॥ अष्टहस्ते द्विहस्तव्यासः ४८ द्विगुणोयं ९६ जातोऽष्टहस्तफल इति । अथवा अस्मत्कृतकुण्डरत्नावल्यां तातचरणोक्तिमनुसृत्य प्रकारान्तरमार्ययोक्तम्—"द्विगुणादौ कर्तव्ये द्व्यादिघ्नव्यासवर्गमूलं यत् । इष्टो व्यासः स्यादिति जयति श्रीमद्गुरोरुक्तिः" इति स्पष्टोर्थः । उदाहरणं—चतुरस्रैकहस्तव्यासः ३३।७।४ अस्य वर्गः ११५२ द्विगुणः २३०४ अस्य मूलं ४८ त्रिहस्ते त्रिगुण इत्यादि यथा कोष्टके क्रमेण दशहस्तानामिति ॥ एवं यथेष्टफलका व्यासा भवन्ति । सपादादिकर्तव्येऽस्मत्कृतकुण्डरत्नावल्यां प्रकारान्तरं । तत्तु तातचरणोक्त्यन्तर्गतत्वात् विस्तरभिया चेह विरम्यते ॥

एतद्भुजादाविति । भुजानां त्र्यस्राद्यष्टास्रान्तानां कुण्डानां ये भुजास्तेषामपि फलानुसारेण द्विहस्तादौ वर्धनीये एतदेव ज्ञेयमित्यर्थः । यथोदाहरणं । चतुरस्रैकहस्ते भुजः २४ द्विहस्ते अस्य त्र्यंशः ८ अंघ्रिः २ युगगुणलवः ०।०।४ ऊनोंघ्रिः १।७।४ युक्तस्त्र्यंशः ९।७।४ युक्तोंशुः ३३।७।४ त्रिहस्ते अस्याष्टमांशः ८।३।७ दशमलवः ०।६।६।२ ऊनोंघ्रिः

| हस्तः | व्यासवर्गाः | मूलानि |
| --- | --- | --- |
| एक | ११५२ | ३३।७।४ |
| द्वि | २३०४ | ४८।०।० |
| त्रि | ३४५६ | ५८।६।२ |
| चतुः | ४६०८ | ६७।७।० |
| पञ्च | ५७६० | ७५।७।१।२ |
| षट् | ६९१२ | ८३।१।१।२ |
| सप्त | ८०६४ | ८९।६।३ |
| अष्ट | ९२१६ | ९६।०।० |
| नव | १०३६८ | १०१।६।४ |
| दश | ११५२० | १०७।२।५।२ |

७।५।१ युक्तोंशुः ४१।४।५ चतुर्हस्ते अंशुः २४ द्विगुणः ४८ पञ्चहस्तेंशुः ४८ अष्टमोंशः ६ अष्टादशलवः ०।२।२ ऊनोष्टमांशः ५।५। २।३ युक्तोंशुः ५३।५। २।३ षड्ढस्ते अंशुः ४८ अंघ्रिः १२ दशमलवः १।१।५ ऊनोंघ्रिः १०।६।३ युक्तोंशुः ५८।६।३ सप्तहस्ते अंशुः ४८ त्र्यंशः १६ द्वात्रिंशदंशः ०।४ ऊनत्र्यंशः १५।४ युक्तोंशुः ६३।४ अष्टहस्ते अंशुः ३३।७।४ द्विगुणः ६७।७ जातोयमष्टहस्तकुण्डभुज इति सर्वं शिवम् ॥

एवं फलाधिक्यान्मूलाधिक्ये सिद्धे कुण्डोत्पत्तिं वक्तुं परिभाषां वृत्तार्धेनाह। कोट्य इति। पूर्वोत्तरांशयोः प्रागगुणोदग्गुणसूत्रयोः कोट्यः प्रांता इह वरुणदिशः पश्चिमदिक्तः सकाशात्क्रमेण पुच्छपार्श्वास्यपार्श्वाख्याः भवन्ति । पश्चिमे पुच्छं। उत्तरे वामपार्श्वः। पूर्वे मुखं। दक्षिणे दक्षपार्श्वः। इति चिह्नसंज्ञेत्यर्थः। एवं पार्श्वास्यमध्यौ उभयतः पार्श्वयोर्मुखस्य च यौ मध्यौ अर्थादैशान्याग्नेय्यौ अंसौ बाहुसंज्ञौ। पुच्छकुक्ष्योर्मध्यतः अनुजघनयुगं। कुक्षीनामपार्श्वौ। पार्श्वयोः पुच्छस्य च मध्यमनुलक्ष्य ये चिह्ने ते जघनयुगं कटियुग्ममित्यर्थः। वायव्यां वामकटिः। नैर्ऋत्यां दक्षकटिरिति ज्ञेयं। इदमुपलक्षणम्। यत्रोदीचीपूर्वा तत्र तदारभ्यैव ज्ञेयम्। अथ च श्रीमत्तातचरणैः कुण्डार्कपद्मिनीटीकायां मण्डलस्याष्टांशकरणे लाघवयुक्तिरुक्ता। यथा। "प्राचीतोऽर्धेन सूत्रेण षट्धा मण्डलमाभजेत्। तृतीयस्य तृतीयस्य भ्रमात्कार्यौ तु मत्स्यकौ ॥ ताभ्यां समानसूत्रेण दक्षिणोदक्स्फुटा भवेत्। चतुर्थं पश्चिमादिक्स्यादेवं स्याद्दिक्चतुष्टयम् ॥ अन्योन्यदिक्स्थसूत्रेण साध्यं विदिक्चतुष्टयम्। एवं षोडशभागादिकरणं तु यथातथमि"ति ॥ ४ ॥

सुप्रभा—अथ द्विहस्तादौ तद्वृद्धिप्रकारमाह श्लोकार्धेन-द्विघ्न इति। अंशुशब्देन मूलसूत्रं विवक्षितव्यं सर्वत्र। चतुर्विंशत्यङ्गुलो हस्तः। तत्परि-

---

१ अंशुशब्दः सूत्राद्यर्थे वर्तते। "अंशुः सूत्रादिसूक्ष्मांशे किरणे चण्डदीधितौ" इति कोषात्।

मितैकहस्तकुण्डस्य फलं चतुर्विंशत्या गुणितं चतुर्विंशतिरेव। तच्च षट्सप्तत्यधिकपञ्चशताङ्गुलात्मकं भवति ५७६ इदं क्षेत्रफलं दशविधस्याप्येकहस्तकुण्डस्य विज्ञेयं। एतदेव क्षेत्रफलं द्विगुणितं सत् ११५२ द्विहस्तकुण्डस्य। त्रिगुणितं १७२८ त्रिहस्तकुण्डस्य। चतुर्गुणितं २३०४ चतुर्हस्तकुण्डस्य। पञ्चगुणितं २८८० पञ्चहस्तस्य कुण्डस्य। षड्गुणितं ३४५६ षड्ढस्तकुण्डस्य। सप्तगुणितं ४०३२ सप्तहस्तकुण्डस्य। अष्टगुणितं ४६०८ अष्टहस्तकुण्डस्य। नवगुणितं ५१८४ नवहस्तस्य कुण्डस्य। दशगुणितं ५७६० दशहस्तकुण्डस्य। दशविधस्येति विशेषणं सर्वत्र बोध्यम्। यद्यपि मूलकृता त्रिपञ्चसप्तनवदशहस्तानि कुण्डानि नोक्तानि अतएव तद्वृद्धिप्रकारो नोक्तः। तथापि प्रसङ्गादुपयुक्तत्वाच्च प्रदर्श्यंते। तत्रादौ मूलकारानुसरणेन द्विचतुःषडष्टहस्तकुण्डादौ वृद्धिप्रकारः। तत्रोदाहरणार्थं वृत्तकुण्डं गृह्यते। फले मूलक्षेत्रफले ५७६ अब्धिघ्ने चतुर्गुणिते कर्तव्ये २३०४ सति अंशुर्मूलसूत्रमुक्तवृत्तव्यासो द्विघ्नो द्विगुणितः कर्तव्यः। यथा वृत्तकुण्डे एकहस्तव्यासः २७।०।५ स द्विगुणः ५४।१।२ जातः। चतुर्हस्तकुण्डे भवति। एवमन्यकुण्डेष्वपि। अब्धिघ्ने फले इत्यनुवर्तते। चतुर्गुणिते फले २३०४ अर्थान्मूलफले ५७६ दलिनि दलमस्यास्तीति दली तस्मिन्। स्वकीयार्धं ११५२ संयुक्ते अर्थात् षड्गुणे कर्तव्ये ३४५६ सति। द्विघ्नोंऽशुरित्यनुवर्तते। द्विगुणितोऽशुर्व्यासः। अर्थाच्चतुर्हस्तो व्यासः। विदशमेनांघ्रिणेद्धः। विगतो दशमांशो यस्मात्तादृशेनांघ्रिणा स्वचरणेन इद्धो युक्तः कार्यः। यथा वृत्तकुण्डे मूलवृत्तव्यासः २७।०।५ द्विगुणितवृत्तव्यासः ५४।१।२ तस्मिन्स्वार्धयुक्ते कर्तव्ये सति तस्यांघ्रिः १३।४।१।४ स दशमांशेन १।३।६।१।५ हीनः १२।१।३।७ तेनांघ्रिणा युक्तो व्यासः ६६।२।५।७ अल्पान्तरत्वादेकलिक्षाधिकयवद्वयमधिकं गृहीत्वा ६६।३ जातः षड्ढस्तकुण्डे भवति। फले इत्यनुवृत्य द्विनिघ्ने फले। फले मूलफले ५७६ द्विनिघ्ने द्विगुणिते ११५२ कर्तव्ये सति। अंशुर्मूलव्यासः त्र्यंशेन स्वांघ्रिभाजा वियुगगुणलवस्त्वंघ्रिः। स्वकीयेनांघ्रिणा त्र्यंशेन स्वतृतीयांशेन इद्धो युक्तः कार्यः। वर्धयेदित्यर्थः। यद्यपि "ञिइन्धी दीप्तौ" इति धातो रूपमिदं तथापि अत्र युक्ते, वर्धिते, इत्यस्मिन्नेवार्थे तस्य वृत्तिर्गृह्यते। प्रकरणादौचित्याच्च। स चांघ्रिः वियुगगुणलवः विगतः ३४ चतुस्त्रिंशत्तमोंऽशो यस्मात्तादृशः तद्विहीन इत्यर्थः। चतुस्त्रिंशत्तमांशोनांघ्रियुक्तस्वतृतीयांशेन वर्धितः कर्तव्य इति फलितोर्थः। यथा वृत्तकुण्डे मूल-

फले ५७६ द्विगुणिते ११५२ कर्तव्ये सति मूलवृत्तव्यासः २७।०।५ अस्य तृतीयांशः ९।०।१।५ तस्य स्वांघ्रिः २।२।०।३ स च चतुस्त्रिंशत्तमांशेन २ यू० १ लि० हीनः २।१।५।७ अनेन युक्तः तृतीयांशः ११।१।५।६ अनेन वर्धितो व्यासः ३८।२।२।६ अल्पान्तरत्वाल्लिक्षाद्वयमधिकं गृहीत्वा जातः ३८।२।३ द्विहस्तकुण्डे भवति । अयमेव द्विहस्तकुण्डव्यासो द्विगुणितश्चेदष्टहस्ते कुण्डे भवति । इति चतुर्हस्तव्यासप्रक्रियया दिग्दर्शितत्वान्नोक्तः । तद्विघ्नमन्त्ये इति पाठेतु तद्विहस्तकुण्डव्यासः द्विघ्नो द्विगुणितः कृतश्चेदन्त्येऽष्टघ्नेऽष्टहस्ते भवति । यथा वृत्तकुण्डे मूलफले ५७६ अष्टघ्ने कर्तव्ये ४६०८ सति द्विहस्तव्यासः ३८।२।३ द्विगुणितः ७६।४।६ जातः अष्टहस्ते कुण्डे भवतीति स्पष्टम् । एवं प्रकारेणान्येष्वपि चतुरस्रादिषु कुण्डेषु द्विहस्तादिवृद्धिः कार्या । इह तु केवलं तत्तद्दशविधकुण्डानां सिद्धा व्यासा विन्यासमुखेन प्रदर्श्यन्ते ।

| कुण्डानि | द्विहस्ते | चतुर्हस्ते | षड्ढस्ते | अष्टहस्ते |
|---|---|---|---|---|
| वृत्तेपद्मेच | ३८।२।३।० | ५४।१।२।० | ६६।३।०।० | ७६।४।६।० |
| अर्धचन्द्रे | ५४।१।२।० | ७६।४।६।० | ९४।०।०।० | १०८।२।४।० |
| योनिकुण्डे | ४२।७।०।० | ६०।४।०।० | ७४।४।०।० | ८५।६।०।० |
| त्र्यस्रकुण्डे | ५९।४।२।५ | ८४।२।०।० | १०३।१।०।० | ११९।०।४।० |
| चतुरस्रे | ४७।७।७।६ | ६७।७।०।० | ८२।६।०।० | ९५।७।७।४ |
| पञ्चास्रे | ४४।०।१।० | ६२।२।०।० | ७६।२।०।० | ८८।०।२।० |
| षडस्रे | ४२।१।०।० | ५९।४।०।० | ७३।२।०।० | ८४।२।०।० |
| सप्तास्रे | ४१।०।०।६ | ५८।०।०।० | ७१।०।३।० | ८२।०।१।४ |
| अष्टास्रे | ५६।६।०।० | ८०।६।०।० | ९८।३।०।० | ११३।४।०।० |

एवं त्रिपञ्चसप्तनवदशहस्तकुण्डव्यासे कर्तव्ये एकहस्तात्मकदशविधकुण्डानां यो यो व्यासवर्गः स स त्रिपञ्चसप्तनवदशभिर्गुणितस्तस्य तस्य मूलं क्रमेण त्रिपञ्चसप्तनवदशहस्तानां दशविधकुण्डानां व्यासो भवति । एवं त्रिहस्ते त्रिगुणव्यासवर्गमूलं । पञ्चहस्ते पञ्चगुणव्यासवर्गमूलं । इत्यादि यथा । एकहस्ते वृत्तव्यासः २७।०।५ अस्य वर्गः ७२९।३।१ अयं त्रिगुणः २१८८।१।३ अस्य मूलं ४६।६।१ अयं त्रिहस्तवृत्तकुण्डे वृत्तव्यासः । एवमन्येष्वपीति दिक् । एतद्भुजादौ अयमेव न्यायो भुजादौ भुजादिवर्धने ज्ञेयः । अत्र आदिपदेन नाभिकण्ठ-

मेखलायोनिमण्डपतद्वाराद्यङ्गानि ग्राह्याणि । एतेषां वृद्धिकरणे सतीयमेव रीतिः समवलम्बनीयेत्यर्थः । अत्र भुजवदष्टविधकुण्डानां द्व्याद्यष्टहस्तेषु सिद्धं भुजमानं विन्यासत उच्यते । तत्र वृत्तपद्मकुण्डयोर्भुजा न सन्ति इति ।

भुजवत्कुण्डानां भुजमानप्रदर्शको विन्यासः ( कोष्टकं )

| कुण्डनामानि | द्विह० भुज० | चतुर्ह०भुज० | षड्ढ० भुज० | अष्टह०भुज० |
|---|---|---|---|---|
| एकज्ये अर्धचन्द्रे | ५४।१।२।० | ७६।४।६।० | ९४।०।०।० | १०८।४।०।० |
| द्विज्ये योनौ | ५२।०।०।४ | ७३।०।०।० | ८९।५।३।० | १०४।०।१।० |
| त्रिज्ये त्र्यस्रे | ५२।०।०।४ | ७३।०।०।० | ८९।५।३।० | १०४।०।१।० |
| चतुर्ज्ये चतुरस्रे | ३३।७।४।० | ४८।०।०।० | ५८।७।०।० | ६७।७।०।० |
| पञ्चज्ये पञ्चास्रे | ३३।४।३।२ | ३६।४।६।० | ४४।५।६।३ | ६७।०।६।४ |
| षड्ज्ये षडस्रे | २१।०।५।५ | २९।६।०।० | ३६।३।४।३ | ४२।१।३।२ |
| सप्तज्ये सप्तास्रे | १७।६।६।५ | २५।५।०।० | ३१।३।१।० | ३५।५।५।२ |
| अष्टज्येऽष्टास्रे | १५।३।७।० | २१।७।२।० | २६।६।५।३ | ३०।७।६।० |

एवं क्षेत्रफलवृद्ध्या व्यासवृद्धौ स्वस्ववृत्तमध्ये तावत्तावद्भुजमानकतत्तत्करात्मककुण्डानां सिद्धिः संजायते । द्विचतुःषडष्टहस्तकुण्डसिद्धौ क्षेत्रफलतोऽङ्गुलानि वर्धयित्वा तावद्वर्धिताङ्गुलानां चतुर्विंशत्यङ्गुलावयविनं हस्तं प्रकल्प्य तेन "वृत्तेऽब्जे वलयोऽब्धिभै"रित्याद्युक्तवृत्तव्यासगर्भं वक्ष्यमाणप्रकारेण दशविधान्यपि द्विचतुःषडष्टहस्तात्मकानि कुण्डानि साध्यानीति सुगमोपायः । एवं कृते व्यासवृद्धेरावश्यकता नास्ति । अङ्गुलवृद्ध्या व्यासवृद्धेः सिद्धत्वादिति । यथा प्राकृतो हस्तश्चतुर्विंशत्यङ्गुलः । तस्य यूकापञ्चकाधिकसप्तविंशत्यङ्गुलैरेकहस्तवृत्तकुण्डव्यासः । स एव प्राकृतो हस्तो यूकाचतुष्टयसप्तयवसहितनवाङ्गुलैर्वर्धितो यूकाचतुष्टयोनचतुस्त्रिंशदङ्गुलात्मकः सन् द्विहस्तकुण्डसाधको भवति । एतत्परिमाणककाष्ठं गृहीत्वा तस्मिंश्चतुर्विंशाङ्गुलानि कृत्वा तेन हस्तेन द्विहस्तात्मकं कुण्डं २७।०५ अनेनैव वृत्तव्यासेन भवति । ततो विन्यासः ।

प्राकृतो हस्तः

अं०
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २० २१ २२ २३ २४





अयं द्विहस्तकुण्डकरणे हस्तः । प्राकृतहस्तस्याङ्गुलापेक्षया उत्तरोत्तरहस्तेऽङ्गुलानि महान्ति भवन्तीति यावत् । अत्र सर्वत्र मूलं शुल्बसूत्रे–"समचतुरस्रस्याक्ष्णया रज्जुर्द्विकरणी २।१२ करणीं तृतीयेन वर्धयेत्तत्र स्वचतुर्थेनात्मचतुस्त्रिंशोनेन सविशेष इति विशेषः ।२।१३ प्रमाणं तिर्यक् द्विकरण्यायामस्तस्याक्ष्णया रज्जुस्त्रिकरणी ।२।१४। द्विप्रमाणा चतुःकरणी त्रिप्रमाणा नरकरणी चतुःप्रमाणा षोडशकरणी ।३।६। यावत्प्रमाणा रज्जुर्भवति तावन्तस्तावन्तोवर्गा भवन्ति तान्समस्येत् ।३।७। इत्यादीति ।

इदानीं कुण्डोत्पत्तिप्रक्रियां वक्तुं परिभाषामाहाऽवशिष्टेन श्लोकार्धेन । कोट्य इति । पूर्वोत्तरांश्योः प्रागुदक्सूत्रयोः कोट्योऽग्राणि इह कुण्डोत्पत्तिप्रक्रियायां वरुणदिशः पश्चिमदिक्तः तदारभ्य क्रमेणेत्यर्थः । पुच्छपार्श्वास्यपार्श्वाः पुच्छपार्श्वमुखपार्श्वसंज्ञका भवन्ति । पश्चिमदिक्स्था कोटिः पुच्छं । प्राचीदिक्स्था कोटिर्मुखं । दक्षिणोत्तरादिक्स्थौ कोटी पार्श्वौ दक्षिणोत्तरपार्श्वौ इत्यर्थः । पार्श्वास्यमध्यौ उत्तरपार्श्वमुखमध्यं मुखदक्षिणपार्श्वमध्यं च अंसौ दक्षिणोत्तरस्कन्धौ भवतः । पुच्छकुक्ष्योः पुच्छपार्श्वयोः मध्यतो मध्ये अनुअंसावनुलक्ष्य । जघनयुगं श्रोणिद्वयं भवति । दक्षिणपार्श्वपुच्छमध्यं दक्षिणा श्रोणिः । पुच्छोत्तरपार्श्वमध्यमुत्तरा श्रोणिः इत्यर्थः । इति चतुर्थश्लोकार्थः ॥४॥



## दिग्विदिक्प्रदर्शकं यंत्रं.




संधेः पार्श्वास्यमध्यावनुततगुणयोः कोटयोऽभ्यस्रकोणा-
स्तस्मात्प्राग्ज्यांऽघ्रिदेशात्कुरु वलयमिहार्धेऽन्दुभं पश्चिमार्धे ।
श्रोण्यौ पुच्छाद्दलेन द्व्यमुखगुणतस्त्र्यस्त्रिवृत्ते भगाभे
पुच्छश्रोणीगुणज्यं दलवलययुगं चाधिकं षड्भुजे तु ॥ ५ ॥
श्रोण्यंसौ पार्श्वतोर्धाद्युगभुजयुगुलं दिग्विदिक्कोणकं स्या-
द्वाह्यत्र्यस्राष्टकोनं त्रियवयुतनगै[2]स्त्र्यङ्गुलेऽष्टास्त्रिकुण्डे ।
सप्तास्रे दोस्त्रिदोर्दोर्दलमिभरसदृग्भागयुग्वक्रतो ज्याः
पञ्चास्रे द्विघ्नपार्श्वाननततिविवरं खाभ्रवेदांशयुक्तम् ॥ ६ ॥

**मरीचिका**—एवं सर्वकुण्डोपयुक्तां पूर्वपीठिकामारभ्य कुण्डरचनाप्रकारं वृत्तद्वयेनाह—संधेरिति ।

---

१ क्वचित्पुस्तके कोणमिति पाठ उपलभ्यते । २ क्वचित्पुस्तके "खासिंध्वङ्गुले" इति पाठो दृश्यते स प्रामादिकः ।

अत्रैकहस्ते वृत्ते पद्मकुण्डे च मूलाङ्गुलप्रमाणं २७।०।५ इत्युक्तमेव। द्विहस्ते ३८।२।३ चतुर्हस्ते ५४।१।२ षड्ढस्ते ६६।३ अष्टहस्ते ७६।४।६। तत्र वृत्ते कर्तव्यतैव नास्ति। अन्ये तु वक्ष्यते। चतुरस्रे आह—संधेरिति। अत्र वृत्तस्याष्टौ भागाः सुसमाः कार्याः। ते च द्वावंसौ द्वौ पार्श्वौ द्वे जघने मुखं पुच्छं चेत्युक्तं। तत्र चतुरस्रस्य समतासिद्ध्यर्थं दक्षिणांसादारभ्योत्तरश्रोणीपर्यन्तं सूत्रं देयं। तच्च संधिभागमनुलक्ष्य देयं। एवमुत्तरांसाद्दक्षिणश्रोणिपर्यन्तं द्वितीयं सूत्रं। तत्र सूत्रकोट्यः अन्ताः वृत्तरेखास्पर्शिनश्चतुरस्रकोणा भवन्ति। तत्र श्रोणिद्वयसूत्रं देयं। अंसद्वयसूत्रं दक्षिणांसश्रोणिसूत्रं उत्तरांसश्रोणिसूत्रं चेति तैः समचतुरस्रं भवति। अत्र पञ्चस्वपि मानेषु मूलाङ्गुलानि प्रागेवोक्तानि। द्विहस्तादौ चतुरस्रवृत्तमूलसूत्राणि द्विहस्ते ४७।७।७।६ चतुर्हस्ते ६७।७।० षड्ढस्ते ८२।६ अष्टहस्ते ९५।७।७।४ तस्मादिति। अर्धचन्द्रकुण्डस्य मध्यसाधनार्थं तस्मात्सूत्रद्वयसंधेः प्राक् प्राच्यां अत्र प्राक् शब्देनोत्तरा ग्राह्या। ज्याचतुर्थांशे देशे शङ्कुं निखाय तस्य परितो ज्यार्धसूत्रेण वृत्तं कार्यं। तस्य वृत्तस्य पश्चिमार्धं अर्धचन्द्राभं कुण्डं भवति। अत्रोदक्सूत्रानुपातेन ज्यासूत्रस्य ऋजुत्वमुन्नेयं। अत्रापि द्विहस्तादौ मूलसूत्राणि द्विहस्ते ५४।२ चतुर्हस्ते ७६।४।६ षड्ढस्ते ९४ अष्टहस्ते १०८।४ श्रोण्याविति। वृत्तार्धप्रमितेन कर्कटेन पुच्छमारभ्य वृत्तरेखास्पर्शि श्रोणिद्वयं साध्यं। तत्र च सूत्रं देयं। श्रोणिद्वयात्सूत्रद्वयं मुखपर्यन्तं देयं। तेन वृत्तगर्भे तिसृभिर्ज्याभिस्त्रिकोणं कुण्डमुत्पद्यते। अत्राप्येकहस्ते दृग्वेदे सयवे रसत्रि सदलं इति वृत्तमानं भुजमानं चोक्तं। उक्तयुक्त्या द्विहस्तादौ तदेव वर्धनीयं। द्विहस्ते ५९।४।२।५ चतुर्हस्ते ८४।२ षड्ढस्ते १०३।१ अष्टहस्ते ११९।०।४॥ अथ द्विज्ये योनिकुण्डे वृत्तव्यासः ३०।२ सपात्खानल इत्युक्तः। द्विहस्ते ४२।७ चतुर्हस्ते ६०।४ षड्ढस्ते ७४।४ अष्टहस्ते ८५।६ अत्र इष्टे वृत्ते उक्तरीत्या त्र्यस्रमुत्पाद्य भगाभे योनिकुण्डे पुच्छश्रोणीगुणज्यं पुच्छाच्छ्रोणिपर्यन्तो यो गुणस्तमेव ज्यां कृत्वा तन्मध्यात्पुच्छादारभ्य श्रोणिपर्यन्तं अर्धवृत्तं कार्यं। एवं द्वितीयभागेपि वृत्तार्धमुत्पादनीयं तत् योन्याकारं कुण्डं भवति॥ षट्कोणे तु अनंघ्रौ खरामे दलं २९।६।४।७ इति वृत्तस्य बाहोश्च मानमुक्तं। तदेव द्विहस्ते ४२।१ चतुर्हस्ते ५९।४ षड्ढस्ते ७३।२ अष्टहस्ते ८४।२ अत्र सर्वत्र

वृत्तार्धं ज्यामानं । अत्रापि वृत्तार्धमितेन कर्कटेन पार्श्वस्थानात् उभयतोंऽस-श्रोण्यौ कल्पनीयौ । तेनांसयोः सूत्रं श्रोण्योः सूत्रं उत्तरांसादुत्तरपार्श्वसूत्रं तत उत्तरश्रोणीसूत्रं । एवं दक्षिणपार्श्वादंसावधि श्रोण्यवधि च सूत्रं देयं तेन षड्भुजं भवति । यद्यप्ययं प्रकारो मुखतः पुच्छतश्च कर्तुं शक्यस्तथापि पुच्छ-स्थाने कोणपातास्यक्तव्यः । "नार्पयेत्कुण्डकोणेषु योनिं तां तन्त्रवित्तम" इति वचनेन तत्र योनिनिषेधात् यथा पश्चिमभुजस्य मध्ये योनिः पतति तथैव सर्वत्र भुजमानमूह्यं ॥ अष्टास्रिमाह—युगेति । अत्र वृत्तव्यासो यवत्रयाधिकच-त्वारिंशदङ्गुलः सप्तत्रिंशदङ्गुलः एकहस्ते । द्विहस्तादौ तु ५६।६ चतुर्हस्ते ८०।६ षड्ढस्ते ९८।३ अष्टहस्ते ११३।४ अस्मिन्वृत्ते चतुरस्रप्रकृतिवृत्तवदष्टा-वंशाः सुसमाः कार्याः । तत्र पूर्ववच्चतुरस्रं दिग्विदिक्कोणकं कार्यं । तत्रैव पुच्छ-पार्श्वसूत्राभ्यां मुखपार्श्वसूत्राभ्यां च दिक्कोणकं चतुरस्रान्तरं कर्तव्यं । तत्र बाह्या-न्यष्टौ त्रिकोणानि परिमार्ज्य मध्येऽष्टकोणं ज्याष्टकरम्यं कुण्डमुत्पद्यते । अस्य प्रकृतिवृत्तसार्धाष्टाविंशत्यङ्गुलं प्रागेवोक्तं । इदं स्थितिवृत्तं पूर्वं तु प्रक्रियावृत्त-मिति भेदः । अत्र सर्वत्र फलानयनादिकं सोपपत्तिकमग्रे वक्ष्यते । यद्वा अस्मिन्नेव वृत्ते चतुरस्रवृत्तवदष्टावंशाः कल्प्याः यथा कुण्डकोणे योनिर्न पतेत् तथैव चिह्नानि कर्तव्यानीति बोध्यं ॥ सप्तास्रमाह—सप्तास्र इति । अत्र प्रकृतिवृत्तमुक्तं गोद्वाविति । अस्मिन्वृत्ते ऽयस्रि बाहुः वृत्तवर्गस्य पादत्रयमू-लेन भवति । वृत्तवर्गः ८४१ तस्य पादत्रयं ६३०।६ अस्य मूलं २५।१ अस्यार्धं १२।४।४ इदमष्टषष्ट्यधिकद्विशततमेनांशेन युक्तं सप्तास्रिदोर्भवति १२।५ तदि-दमुक्तं अत्रियवत्रिभूरिति ॥ पञ्चास्रमाह—पञ्चास्र इति । क्ष्मारामे सय-वेऽधिपादधृतयः । एकयवाधिकैकत्रिंशदङ्गुले वृत्ते किंचिदधिकपादयुक्ताष्टादशा-ङ्गुलाः पञ्च ज्या भवन्तीत्युक्तं । तत्र व्यासवर्गः ९६८ अस्यार्धं ४८४।३ अस्य मूलं द्वाविंशतिः २२ इदं पार्श्वाननसूत्रं द्विगुणितं ४४ ततिर्वृत्तव्यासः । सोपि द्विगुणितः ६२।२ अनयोरन्तरं १८।२ इदं चतुःशततमेनांशेन यूकात्रयात्मकेन युक्तं पञ्चास्रदोर्भवति ॥ ५ ॥ ६ ॥

दीधितिः—एवं सर्वकुण्डोपयुक्तां पूर्वपीठिकामुक्त्वा कुण्डरचनाप्र-कारमाह । तत्र कुण्डानि प्रसाध्य क्रममग्रे वक्ष्यति—वेदास्रं योनिरित्या-दिना । संधेः पार्श्वास्यमध्यादिति । तत्रादौ चतुरस्रमाह—। संधेः दक्षिणपूर्वसूत्रयोः संपातात् । पार्श्वास्यमध्यावनु अनुलक्ष्यीकृत्य ततगुणयोः

नैर्ऋतिमारभ्य ईशानीपर्यन्तं वायवीमारभ्य आग्नेयीपर्यन्तं विस्तृतसूत्रयोः कोट्यः अन्ताः अव्यस्रकोणाः भवन्ति। अंसद्वये एको भुजः दक्षिणांसजघनयोरन्यः जघनयोरपरः उत्तरजघनांसयोश्चतुर्थः एवं चतुरस्रमुत्पद्यते॥ अर्धचन्द्रमाह । तस्मात्प्राग्ज्यांघ्रिदेशात् । तस्मात्संधिमारभ्य प्राक् । अत्र प्राक्शब्देनोत्तरा ग्राह्येति पूर्वमेवोक्तम्। ज्यांघ्रिदेशात् व्यासचतुर्थांशान्तरे चिह्नं कृत्वा तस्मात् वलयं कुरु पूर्वोक्तमानेन कुर्विति शिष्यं प्रत्युक्तिः । इह अस्मिन्वृत्ते पश्चिमार्धं दक्षिणदिक्स्थमर्धं अर्धेन्दुभं अर्धचन्द्राकारं कुण्डं भवति॥ त्र्यस्त्रिकुण्डमाह—पुच्छाद्दलेन व्यासार्धेन श्रोण्यौ कार्ये पुच्छे स्थापितव्यासार्धमितकर्कटेन दक्षिणत उत्तरतश्च वृत्ते श्रोणीद्वयसंज्ञकं चिह्नद्वयं कार्यमित्यर्थः। द्वयमुखगुणतः त्र्यस्त्रि द्वयं श्रोणीद्वयं तत्र दत्तं सूत्रमेको भुजः। उभयतः सूत्रान्ताभ्यां मुखपर्यन्तं सूत्रद्वयं अन्यौ भुजौ भवतः। एवं त्र्यस्त्रि कुण्डमुत्पद्यते। वृत्ते इति पदं सर्वकुण्डेष्वन्वेति॥ योनिकुण्डमाह—अत्रापि योनिकुण्डव्यासार्धेन वृत्तं कृत्वा योन्यग्रमुत्तरस्यां यथा भवति तथा उक्तप्रकारेण त्र्यस्रमुत्पाद्य भगाभे योनिकुण्डे पुच्छश्रोणीगुणज्यं दलवलययुगं च अधिकं। पुच्छात् श्रोणिद्वये सूत्रद्वयं देयं तदर्धपरिमितकर्कटेन उभयत्र सूत्राद्बहिः वृत्तार्धे कार्ये। त्र्यस्रापेक्षया योनिकुण्डे इदमधिकं। तत्रान्तर्वर्तिपश्चिमभागस्थत्र्यस्रभुजान्परिमार्ज्य योनिकुण्डमुत्पादनीयं॥ षडस्रमाह—षड्भुजे तु। अत्र तुशब्दः कुण्डान्तरद्योतनार्थः। षड्भुजे कर्तव्ये श्रोण्यंसौ श्रोणिद्वयं अंसद्वयं चेत्यर्थः। पार्श्वतः पार्श्वचिह्नद्वयात् अर्धात् व्यासार्धपरिमितकर्कटेन कार्यौ। मुखपुच्छसहितपूर्वचिह्नचतुष्टयं परित्यज्य चिह्नषट्केषु सूत्रदानात् षडस्त्रिकुण्डमुत्पद्यते। अत्र केचिदिदं वक्ष्यमाणमष्टास्त्रि चोत्कलिकमाहुः। तत्र नेत्ररमणीयत्वं हेतुरपि दर्शितः। अथ च इतरग्रन्थकारविरोधमाशङ्क्य प्राचीनेषु रामवाजपेयी-राघवभट्ट-लक्ष्मणाचार्यादिकृतग्रन्थेषु परस्परविरोधं प्रदर्श्य स्वबुद्धिविलासमात्ररचितत्वे संमतिं दर्शयामासुः परंतु तत्प्राचीनकृतऋजुभुजकुण्डविरोधो यथावस्थित एव। विरोधोऽपि कया रीत्येति चेत् यत्षडस्त्रि तत्षड्भुजमित्यप्याचक्षते। अत्रान्तः कोणषट्कं बहिःकोणषट्कं च एवं द्वादशकोणा उत्पद्यन्ते। एवं भुजा अपि द्वादश। तस्मान्नेदं षडस्त्रि षड्भुजं च। भुजद्वयस्यैकभुजत्वव्यवहारः क्वापि नास्ति त्रिभुजत्वहान्यापत्तेः। एवं दोषं पश्यन्नाचार्यः भुजत्वोक्तिस्थाने भुजस्य ऋजुत्वज्ञापनार्थं ज्यात्वेन पूर्वमेवोक्तवान्। अथ चोत्कलिकस्य षडस्रस्याष्टास्रस्य

च पद्मकुण्डात्को विशेषः पद्मपत्राकृतीनां नानात्वात् पद्मपत्राणां संख्यापि नानाविधैव लोके दृश्यते इति प्राचीनानामभिप्रायः ॥ अष्टास्रमाह—युगभुजयुगलं दिग्विदिक्कोणकं स्याद्वाह्यान्यस्राष्टकोनमिति। दिक्कोणकं विदिक्कोणकं च चतुरस्रद्वयं कृतं सत् बाह्यान्यष्टौ त्र्यस्राण्युत्पद्यन्ते तानि परिमार्ज्य अन्तर्वर्ति अष्टास्रिकुण्डमुत्पद्यते परंतु वृत्तव्यासः कियानित्यत आह-त्रियवयुतनगत्र्यङ्गुले वृत्ते इत्यर्थः। अत्र पञ्चयूकाधिक्यमस्ति अतो द्वियवेनि पाटेपि यूकात्रयं त्यक्तं स्यात् तत्र स्वल्पान्तरत्वाददोषः। ग्रन्थस्य गुरुताभयेन वा त्यक्तमिति मन्तव्यम् ॥

अत्र युक्तिरुच्यते। तत्र चतुरस्रद्वयं कियद्व्यासजे वृत्ते स्यादिति विचार्यते। तदेतद्भुजवहिस्त्र्यस्रं तत्समभुजत्वात् समचतुरस्रावयवत्वात् कर्णावच्छिन्नसमचतुरस्रार्धरूपं भवति। अथ यदि भुजान्तस्तादृशमेव त्र्यस्रं क्रियते तर्हि समभुजकर्णं चतुरस्रं भवति। कुण्डभुजश्च तत्र कर्णः अतो बाह्यत्रिभुजलम्बरूपेण कुण्डभुजार्धेन ५।३।५।५।१ केन्द्रात्कुण्डभुजार्धचिह्नपर्यन्तः भुजार्धवर्गो न व्यासार्धवर्गमूलग्रहणेन साधितोऽयं लम्बः १३।१।३।६।२ योज्यते चेत् केन्द्रादारभ्य स्वमार्गवृद्धभुजसंपातपर्यन्तमन्तरं स्यात् १८।५।१।३।३ इदमेव व्यासार्धं द्विगुणं व्यासः ३७।२।२।६।६ अत्र बहुषु पुस्तकेषु "त्रियवयुतखसिंधवङ्गुले" इति पाठो दृश्यते स लेखकादिदोषजन्य एव प्राथमिकपुस्तके मष्यादिपातादृष्टाक्षराणि केनचित्कल्पितानीति वा, कथमन्यथाऽतिसूक्ष्मदर्शी आचार्यो बह्वन्तरजनकं वृत्तं वदेत्। अत्र चतुरस्रशब्दे अन्तिमाक्षरं तालव्यादिं बहवो लिखन्ति तत्र प्रमाणं "सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रेणीपदाजपदप्रोष्ठपदा" इति सूत्रं दर्शयन्ति तदसत् तत्सूत्रव्याख्यानं एते बहुव्रीहयोऽचप्रत्ययान्तानिपात्यन्ते। निपातो नाम अन्यथा प्राप्तस्यान्यथोच्चारणं तत्कथमिति व्याख्याता दर्शयति। चतस्रः अस्रयो यस्य चतुरस्रः एण्या इव पादावस्य एणीपदः इत्यादि। अत्र विग्रहवाक्ये समासात्पूर्वमेवास्रिपदं स्त्रीप्रत्ययान्तमुक्तं तद्घटितसमासान्ते इकारे प्राप्ते अकारो निपातितः। अन्तिमवर्णस्य तालव्यादित्वं समासात्पूर्वमेवास्ति नहि तस्य निपातनेन विकारान्तरं कृतं एणीपदे पादशब्दादिमवर्णस्य ह्रस्वत्वं यथा। एवंच स्त्रीप्रत्ययान्तास्रिपदं क्वचित्कर्मविशेषे रूढं। नह्यत्र कोणवाचकास्रपदघटितचतुरशब्दरसोऽस्ति त्र्यस्रपञ्चास्रादिषु अन्तिमवर्णस्य तालव्यादित्वप्रसङ्गात्। तत्रापि तालव्यादिरेव वर्तते इति चेत् चतुः-

शब्दसमभिव्याहारेण कृतं निपातनं व्यर्थं स्यादिति तर्हि दन्त्याद्यक्षरान्तघटितोऽस्रशब्दः कथम्। असुक्षेपण इत्यस्माद्धातो रौणादिको रप्रत्ययान्तः। अस्येते संयुज्येते बाहू यस्मिन्निति कोणवाचक इति सुधीभिरूह्यम्।

पूर्वं "वृत्तेऽब्जे वलयोऽधिभे"रिति श्लोके "अपदले ज्या निस्त्रियूकाः शिवाः" इति अष्टास्त्रिकुण्डमानमुक्तं तस्य क्वोपयोग इति चेदुच्यते। पूर्वमानेन कुण्डकरणे क्रियागौरवेण पश्चिमदिशि कोणपाताभावः अतोऽनेनोक्तक्रियया कुण्डकरणे पूर्वमानेनान्तर्वर्ति कुण्डं स्वत एवोत्पद्यते इत्यभिप्रायेणेदानीं मानान्तरमुक्तं। पश्चिमदिशि योनिस्थानस्य सत्त्वात्तत्र "नार्पयेत्कुण्डकोणेषु योनिं तां तत्त्ववित्तम" इति वचनेन कोणे योनिनिषेधात्॥ अथ सप्तास्रमाह—सप्तास्रे दोरित्यादि। सप्तास्रे उक्तव्यासार्धेन वृत्तं कृत्वा दिक्चिह्नानि विधाय वक्त्रतः मुखमारभ्य उक्तज्यामानेन वृत्ते चिह्नानि कृत्वा ज्याः भुजाः देया इत्यर्थः। पञ्चास्रेऽपि तथा। एवं कृते पश्चिमदिशि कोणपातो न भवतीति वक्त्रत उक्तं। अत्र त्रिदोर्दोर्दलं इभरसदृग्भागयुक् अस्मिन्वृत्ते कृतत्र्यस्रभुजार्धं इभरसदृग्भागयुक् सप्तास्रभुजो भवतीति प्रकारान्तरमुक्तम्। एवं पञ्चास्रे द्विघ्नपार्श्वाननततिविवरं खाभ्रवेदांशयुक्तं। द्विघ्नशब्दः पार्श्वाननव्यासयोरन्तरे अन्वेति तत्खाभ्रवेदांशयुक्तं कृतं सत् प्रकारान्तरेण पञ्चास्रे भुजः स्यात्॥५॥६॥

पद्मिनी—अथ कुण्डरचनाप्रकारं वृत्तद्वयेनाह—संधिमभिलक्ष्य पार्श्वास्यमध्यद्वयादारभ्य पार्श्वपुच्छमध्यद्वयपर्यन्तौ अनुततौ विस्तृतौ यौ गुणौ तयोः कोट्योऽध्यस्रस्य चतुरस्रस्य कोणा भवन्ति अर्थाद्दक्षिणांसादारभ्य दक्षिणश्रोणिपर्यन्तं तदारभ्योत्तरश्रोणिपर्यन्तं तदारभ्योत्तरांसपर्यन्तं तदारभ्य दक्षिणांसपर्यन्तमेवं भुजदानमपि सिद्धम्। एवं चेद्भुजदानमेव कुतो नोक्तमिति चेत् यद्यपि कर्णदानमन्तरा समभुजतासिद्धिर्भवति तथापि समचतुरस्रतासिध्यर्थं कर्णदानमेवोक्तं। अन्यथा समचतुरस्रता न स्यात्। एवं द्विहस्तादौ उक्तरीत्या मूलसूत्रं वर्धनीयम्॥ अर्धचन्द्रे तस्मादिति प्रागुदक्सूत्रमध्यादारभ्य पुरतः ज्याचतुर्थांशदेशे कर्कटं स्थाप्य उक्तव्यासार्धेन वृत्तं कार्यं। तन्मध्ये एका ज्या देया। वृत्तस्य पूर्वप्रान्तो मार्जनीयः। अपरः स्थाप्यः इदमेवार्धचन्द्रम्॥ त्र्यस्रे श्रोण्याविति उक्तव्यासार्धेन वृत्तं कार्यं। तेनैव व्यासार्धेन वृत्तरेखास्पर्शिन्यौ पुच्छश्रोण्यौ कल्पनीयौ। तत्र मुखादारभ्य दक्षिणश्रोणिपर्यन्तं सूत्रं तदारभ्योत्तरश्रोणिपर्यन्तं सूत्रं तदारभ्य मुखान्तमिति सूत्रत्रयेण मुखादारभ्य

त्र्यस्त्रिकुण्डमुत्पद्यते । अर्थात्सर्वत्र ज्यासंख्याकबहिर्धनुषां मार्जनं । योनौ तु उक्तव्यासार्धेन वृत्ते कृते त्र्यस्त्रवत्कल्पेन मुखतः दक्षिणोत्तरश्रोणिपर्यन्तं गुणद्वयं । ततः पुच्छाद्दक्षिणश्रोण्यन्तमेकं सूत्रं । तथा पुच्छादुत्तरश्रोण्यन्तमेकं तत्सूत्रार्धमितकर्कटेन तन्मध्याच्छ्रोणिपुच्छस्पर्शि वृत्तार्धं कार्यं । एवं द्वितीयभागेपि वृत्तार्धं कार्यं । एवं स्वस्मारकं योनिकुण्डं भवति इदमेवाधिकं त्र्यस्त्रादिति शेषः ॥ ५ ॥ षड्भुजे तु पार्श्वद्वयात् व्यासार्धमानेन श्रोण्यंसौ कार्यौ । तेन यानि मुखपुच्छचिह्नातिरिक्तानि पार्श्वद्वयचिह्नसहितानि षट्चिह्नानि भवन्ति । तत्रैकचिह्नादारभ्य तत्समीपस्थं द्वितीयचिह्नपर्यन्तं यत्सूत्रं तदेव षडस्त्रे भुजः । एवं षड्भुजदानेन षडस्त्रं भवति । अष्टास्त्रे तु युगेति यवत्रयाधिकचत्वारिंशदङ्गुले वृत्ते दिग्विदिशोरन्तरालेऽष्टौ चिह्नानि कार्याणि । तत्र समचतुरस्त्रद्वयं कार्यं । तत्र यानि बाह्याष्टत्रिकोणानि भवन्ति तदेकत्रिकोणभूमिमध्यादारभ्य तत्समीपस्थद्वितीयत्रिकोणभूमिमध्यपर्यन्तमेको भुजो देयः । एवमष्टौ भुजाः कार्याः । एवं तत्र त्रिकोणाष्टकद्वयमुत्पन्नं तत्परिमार्ज्यं मध्ये ज्याष्टकं रम्यं कुण्डमुत्पद्यते । अयमेव मूलाशय इति भाति । यथाश्रुतार्थकरणस्य दोषावहत्वात् । ननु युगभुजयुगुलं कुण्डं एतादृशवाक्यादयमर्थः कथं लभ्यत इति चेन्न । अस्मिन्वाक्ये दिग्विदिक्पदं नोक्तमपि इष्टकार्यं भवति । "नार्पयेत्कुण्डकोणेषु योनिं तां तत्रवित्तमः" इति कुण्डकोणे योनिनिषेधात्कर्ता दिग्विदिक्कोणकमेव करोति । तस्मादिदं वाक्यं व्यर्थं सञ्ज्ञापयति अत्र दिग्विदिक्पदस्य दिग्विदिगन्तराले लक्षणां कृत्वा दिग्विदिगन्तरालेषु कोणा यस्य तत् दिग्विदिक्कोणकं अयं बहुव्रीहिः । तेन दिग्विदिगन्तरालकोणकं कार्यमिति सिद्धम् ॥ बाह्यत्र्यस्त्राष्टकोणेपीत्यत्र बाह्यपदं न वक्तव्यम् । ऊनकरणे त्र्यस्त्राष्टकमन्यत्रास्त्येव । अतो बाह्यपदं व्यर्थं सञ्ज्ञापयति बाह्यपदेनोनकरणयोग्यताकाभ्यन्तरमपि त्र्यस्त्राष्टकं वर्तत इति सूचयति । तत्कथं कार्यमिति चेद्यथा क्षेत्रफलमायास्यतीत्यर्थसिद्धम् । तत्तूक्तरीत्या कृतं चेद्भवति । अस्तु तर्हि बाह्यपदेनाभ्यन्तरत्र्यस्त्राष्टककरणं सूचितं नतूनकरणमिति चेन्न । यद्यदुत्पन्नं तत्सर्वं सफलमिति न्यायेनोत्पन्नस्य त्र्यस्त्राष्टकस्य फलमपि सिद्धम् । तत्किमित्याकाङ्क्षायामूनकरणमेव सिध्यति । ऊनपदस्य स्वोत्तरवर्तित्वात्क्षेत्रफलसंपादकत्वाच्च । तेन त्र्यस्त्राष्टकद्वयमप्यूनं कार्यमिति सुधीभिरूह्यत्वात् । न चात्र प्रागुक्तव्यासस्य कारणत्वाभावात्तस्य व्यर्थत्वं पुनरुक्तिरूपदोषश्चेति वाच्यं । तस्य

सर्वकुण्डवज्र्याव्यासमानं चोक्त्वाऽधुना तत्क्रमप्राप्तक्रियातो व्याख्यातत्वात् । अतएव रघुवीरटीकाकारेणापि अस्य श्लोकस्य व्याख्यानावसरे अस्य प्रकृतिवृत्तं सार्धाष्टाविंशत्यङ्गुलं प्रागेवोक्तं । इदं स्थितिवृत्तं पूर्वं क्रियावृत्तमिति भेद इत्युक्तं । नचात्र चतुरस्रद्वयलेखनेनैव तत्सिद्धेः स्वाग्नियवयुतखसिंध्वेस-रपाठसाधुत्वायोक्तक्लेशकरणापेक्षया "द्वियवयुतमुनिव्यङ्गुले" इत्येव स्वीकर्तव्ये इति वाच्यम् । एवं चेदस्त्वेव त्वदुक्तप्रकारस्यापि क्लेशप्रदत्वं । यतो हि सार्धाष्टाविंशत्यङ्गुलवृत्तस्थचिह्नानां परस्परमेलनेन तदुत्पत्तिसंभवात् । अस्तु तर्हि उभयत्र समो दोष उभाभ्यां परिहार्य इति चेन्न । पूर्वोक्तपुनरुक्तिदोषापरिहार्यत्वात् । नचात्रापि क्रियातो व्याख्यातमस्तीति वाच्यं । सार्धाष्टाविंशत्यङ्गुलात्मकव्यासस्य कारणत्वाभावात् बहुविधानां लाघवगौरवक्रियाविशिष्टानां कुण्डकरणविधीनां ज्ञानवृद्धिकरत्वेन शिष्यशिक्षार्थत्वात् पाठभेदकरणस्यैव क्लेशप्रदत्वं शिष्यज्ञानप्रकाशरूपप्रकृत्यर्थानुपयुक्ताक्षरयोजनागौरवाच्च । यदि च ग्रन्थकर्तुरेवायं पाठ इत्युच्यते तर्हि तत्पाठलोपस्यैतत्पाठप्रसिद्धेश्च कारणं विवक्षितं तत्तु टीकाकारस्याप्यनुपलब्धं अतोऽनाकरं । एतेनैव त्रियवयुत-खसिंध्विति वक्तारः कृतिगौरववक्तारश्चापि निरस्ताः । का कथा गणितान्तर-मस्तीति जल्पकस्य बुद्धिमन्दस्येति दिक् ॥

अथान्यत्किमपि विचार्यते । ननु अष्टाविंशत्यङ्गुलात्मकव्यासेन कार्ये भवति सति वृत्तद्वयकरण-चतुरस्रद्वयकरण–दिग्विदिक्पदान्तरालपरबाह्यपदसार्थकार्थाभ्यन्तर–त्र्यस्राष्टकोत्पत्ति–तन्न्यूनकरणमिदं सर्वं गुरुभूतं अस्य चत्वारिंशदङ्गुलात्मकव्यासेऽपेक्षितत्वादयं व्यास एव न ग्राह्य इति चेन्न । महाकार्यकरस्य गौरवस्यादोषावहत्वात् । तथाहि "वृत्तेऽब्जे वलयोऽधिभे"रित्यादावङ्गुलपदमन्तराऽप्यङ्गुलस्यैव ग्रहणं यथा जायते तथा खसिंध्वङ्गुले इत्यत्रापि भविष्यति । अतोऽङ्गुलपदं व्यर्थं सज्ज्ञापयति अस्य वाक्यस्य वक्ष्यमाणकार्यमात्रेऽङ्गुलस्यैव ग्रहणं भवतु नतु यवाद्यवयवाङ्गस्य । तत्किं कार्यमिति चेदुच्यते । अत्रैकं वृत्तं चत्वारिंशदङ्गुलात्मकं एकमष्टाविंशत्यङ्गुलात्मकं । अयमेव युगभुजस्य भुजः सार्धाष्टाविंशत्यङ्गुलात्मकः । द्वयोरन्तरं द्वादशाङ्गुलात्मकं । अयमेव सप्तास्रभुजः सदलं चेत्पञ्चास्रभुजः द्विघ्नश्चेच्चतुरस्रभुजः त्रिघ्नश्चेत्त्र्यस्रभुजः । एवं हस्तद्वयादावपि द्रष्टव्यं गौरवभियाऽत्र न लिखितम् । अस्तु तर्हीदं सर्वं चत्वारिंशदङ्गुले सिद्धं पुनः किमर्थं

वृत्तद्वयकरणमिति चेदुच्यते । अत्रानुक्तषडस्राष्टास्रभुजोक्त्यर्थं उच्यते । सार्धाष्टाविंशत्यङ्गुलात्मकव्यासवर्गस्य ज्यावर्गस्य चान्तरमूलं २६।२।४ अस्य व्यासस्य च यदन्तरं तत्पूर्वपरिभाषयाऽङ्गुलात्मकमेव ग्राह्यं । तदङ्गुलद्वयात्मकं २ इदमुक्तद्वादशाङ्गुले योजितं सत्षडस्रभुजो भवति । इदमेवाङ्गुलद्वयमुक्तद्वादशाङ्गुले न्यूनं सदष्टास्रभुजो भवति । नन्विदं सर्वमप्रकृतत्वात्किमर्थमुक्तमितिचेन्न । अस्मिन्ग्रन्थे बुद्धिमतामभिरुचिर्वर्धतां शिष्याणां बुद्धिवैशद्यं भवत्वितीच्छया च कृतत्वात् । पूर्वस्मिन् "वृत्तेऽब्जे वलय" इत्यत्रोक्तज्यानां मानमनया रीत्यैवं वक्ष्यमाणसप्तास्रपञ्चास्रोत्पत्त्या स्युर्वृत्तव्यासवर्गादित्यनयारीत्याऽपि द्रष्टव्यं । कुत इति चेत् भ्रान्तेः पुरुषधर्मत्वात्सर्वाभिः स्थूलसूक्ष्मरीतिभिर्मानमेकीकृत्य कर्तव्यं अन्यथा न्यूनाधिक्यप्रसङ्गः स्यादिति ज्ञापनार्थत्वाच्च । एवं यत्र गौरवं पुनः प्रसक्तिर्वा तत्र सर्वत्रैवं बोध्यमिति दिक् । यद्वाऽस्मिन्नेव वृत्तेऽष्टचिह्नानां परस्परमेलनेनाष्टज्याकं यथा कुण्डकोणे योनिर्न पतेत्तथा उत्पाद्य तत्र येऽष्टौ भुजाः संभवन्ति तत्रैकैकस्मिन्भुजमध्ये एकैकं चिह्नं कृत्वा तादृशचिह्नेष्वेकान्तरितसंयोगेन चतुरस्रद्वयं एकं दिक्कोणकमेकं विदिक्कोणकं च संपाद्य बाह्यत्र्यस्राष्टकेनोनं च कृत्वा तदूनकरणतद्बहिर्ज्याष्टकस्य धनुषां च मार्जनमन्तरा न संभवतीत्यर्थसिद्धमपि कर्तव्यं । अस्मिन्पक्षे अष्टास्त्रिकुण्डमित्यत्राष्टास्त्रीणि कुण्डं अष्टास्रकुण्डमेवमेव समासे विशेषः । अन्यद्यथाश्रुतमिति क्लेशाभावः । यद्वा बाह्यत्र्यस्राष्टकोनमिति । बाह्यं त्र्यस्राष्टकं यस्मिन्नाभ्यन्तरत्र्यस्राष्टके तद्बाह्यत्र्यस्राष्टकं । तद्गुणसंविज्ञानबहुव्रीहिणा बाह्यत्र्यस्राष्टकविशिष्टाभ्यन्तरत्र्यस्राष्टकमित्यर्थः । तेन ऊनं कार्यं । ईदृशार्थे गमकं च बाह्यपदमेव । अन्यथैकस्यैव त्र्यस्राष्टकोत्पत्तौ तस्य वैयर्थ्यं स्यात् । बाह्यतायाश्चाभ्यन्तरनिरूपितत्वात्सुव्यक्त एवायमर्थो लभ्यत इति दिक् ।

**सप्तास्र इति** । अस्य गोद्वाविति प्रकृतिवृत्ते सप्तास्रभुजः । अस्मिन्नेव वृत्ते त्रिभुजभुजस्यार्धं २६८ अष्टषष्ट्युत्तरद्विशततमभागेन युक्तं चेद्भवति । यथा—व्यासः २९ अस्य वर्गः ८४१ पादत्रयं ६३०।६ अस्य मूलं २५।१ अस्यार्धं १२।४।४ अस्याष्टषष्ट्युत्तरद्विशततमो भागः ०।०।३ अनेन युक्तो भुजः १२।५ अल्पान्तरत्वात्पूर्वोक्त एव । **पञ्चास्र इति** । पार्श्वाननं च ततिश्च पार्श्वाननतती द्विघ्ने च ते पार्श्वाननतती च द्विघ्नपार्श्वाननतती तयोर्यदन्तरं इदं चतुःशततमभागेन युक्तं पञ्चास्रे दोर्भवति । यथा—व्यासः ३१।१ अस्य वर्गः ९६८।६

अर्धं ४८४।३ अस्य मूलं २२ अयमस्मिन्वृत्तस्थचतुरस्रस्य भुजः। इदमेव पार्श्वा-ननमित्युच्यते लक्षणया सूत्रं। तद्द्विगुणं ४४ ततिर्नाम व्यासः सोपि द्विगुणितः ६२।२ अनयोरन्तरं १८।२ चतुःशततमो भागः ०।०।३ अनेन युक्तः १८।२।३ पूर्वोक्त एव जातः। ननु भुजवतां भुजमानमुक्त्वा अधुना सप्तास्रपञ्चास्रयोः पुनरप्युक्तत्वात्पुनरुक्तिदोष इति चेन्न। महाकार्यकरत्वात्। तथाहि। येन पुरुषेण यस्मिन्कस्मिन्वृत्ते त्र्यस्रभुजा ज्ञाताः तस्येच्छा अस्मिन्नेव वृत्ते सप्तास्र-भुजाः कियत्परिमाणका भवन्तीति चेत् अनेन प्रकारेण सप्तास्रज्ञानं भवति। एवं चतुरस्रज्ञानोत्तरं पञ्चास्रज्ञानमपि भवति। एवं सप्तास्रज्ञानोत्तरं त्र्यस्र-ज्ञानार्थं युक्तिः। एकोनसप्तत्युत्तरद्विशतेन सप्तास्रभुजो भक्तव्यः। यल्लब्धं भवति तेन न्यूनः कार्यः। उर्वरितो द्विघ्नश्चेत्त्र्यस्रभुजो भवति। यथा सप्तास्रभुजः १२।५।२६९ अनेन भक्तः ०।०।३ अनेन न्यूनः कृतः १२।४।४ अयं द्विघ्नः २६।११। पञ्चास्रभुजः १८।२।३।४०१ अनेन भक्तः लब्धं ०।०।३ अनेन न्यूनः १८।२ द्विघ्नव्यासो न्यूनः ४४ अस्यार्धं २२ चतुरस्रभुजः। एवं पञ्चास्रज्ञानो-त्तरं चतुरस्रज्ञानार्थं युक्तिः। पञ्चास्रभुजः एकाधिकचतुःशतेन भक्तव्यः लब्धेन न्यूनः कार्यः। उर्वरितेन द्विघ्नव्यासो न्यूनः कार्यः। तत्रोर्वरितं तदर्धं एव चतुरस्रभुजः। एवं तादृशत्र्यस्रचतुरस्रपञ्चास्रसप्तास्राणां फलं निष्काश्य वक्ष्य-माणायुतगुणफलाल्लब्धमूलेन व्यासो भवतीति रीत्या सप्तास्राङ्केन व्यासो निष्काशितश्चेत्त्र्यस्रस्य व्यासो भवति। त्र्यस्राङ्केन निष्काशितश्चेत् सप्तास्रस्य भवति। एवं चतुरस्राङ्केन पञ्चास्रस्य पञ्चास्राङ्केन चतुरस्रस्येति दिक् ॥ यथा कुण्डकोणे योनिर्न पतेत्तथा सर्वकुण्डानामाकारः कर्तव्य इति मनसि निधाय "कोट्यः पूर्वोत्तरांश्वो"रित्यादि "खाभ्रवेदांशयुक्त"मित्यन्तेन सार्धपद्यद्वयेन यदुक्तं तद्भुजवत्क्षेत्रेषु गुरुभूतं भवति। अतो लघुयुक्तिरुच्यते। तदर्थं श्लोकः—

"प्रागादित्रिषु याम्यस्थाद्बिन्दोरन्यत्र वारुणात्। भुजार्धचिह्नयोर्वृत्ते सूत्रं स्यात्तद्भुजः स्फुटः"। अस्यार्थः—प्रागादित्रिषु पूर्वाग्नेयदक्षिणकुण्डेषु आस्य-स्थानाद्दक्षिणदिक्तः अन्यत्र निर्ऋतिमारभ्येशानान्तेषु कुण्डेषु वारुणात्पश्चिम-दिक्तः। बिन्दोरित्युभयान्वयि। दक्षिणदिग्बिन्दोः पश्चिमदिग्बिन्दोश्च सका-शात् वृत्ते "वृत्तेऽब्जे वलयोऽधिभे"रिति श्लोकोक्ततत्तद्व्यासकृतमण्डले भुजार्ध-चिह्नयोः तत्तद्भुजार्धमानेन कृते चिह्ने तयोश्चिह्नयोः संबन्धि यदेकं सूत्रं तत्सू-त्रपरिमितः स्फुटः स्पष्टः भुजः स्यात्। भुजो भवतीत्यर्थः। यथा प्राच्यं

चतुरस्रं तस्य व्यासेन ३३।७।४ कृते वृत्ते चतुरस्रभुजः २४ अस्यार्धं १२ एत-त्स्थितसूत्रेण दक्षिणबिन्दोः सकाशात् उभयत्र चिह्ने कृते तयोश्चिह्नयोः संबन्धि यदेकसूत्रं २४ चतुर्विंशत्यङ्गुलं अयं चतुरस्रभुजः उक्तप्रकारेणैव कृतश्चेत्कुण्ड-कोणे योनिर्न स्यादिति लाघवं । एवं त्र्यस्रव्यासेन ४२।१ कृते वृत्ते उक्तभुजः ३६।४ अस्यार्धेन १८।२ पश्चिमबिन्दोः सकाशादुभयत्र चिह्ने कृते तयोश्चिह्नयोः संबन्धि एकं सूत्रं ३६।४ यवचतुष्टयसहितं षट्त्रिंशदङ्गुलं त्र्यस्रभुजः स्यात् । अनेनैव प्रकारेण सर्वेषु कुण्डेषु भुजाः संपादिताश्चेत् कुण्डकोणे योनिर्नैव स्यात् लाघवमपि स्यादिति तात्पर्यम् ॥ ५ ॥ ६ ॥

नौका—एवं सर्वकुण्डोपयोगिपरिभाषामुक्त्वा कुण्डोत्पत्तिप्रक्रिया-माह—संधेरित्यादिना । तत्रैकहस्तात्मके वृत्तकुण्डे पद्मकुण्डे च वृत्त-व्यासाङ्गुलमानं २७।०।५ प्रागुक्तमेव तद्द्विहस्ते ३८।२।३ चतुर्हस्ते ५४।१।२ षड्ढस्ते ६६।३ अष्टहस्ते ७६।४।६ तत्र वृत्तस्येतिकर्तव्यता नास्ति । इष्ट-व्यासार्धमितेन सूत्रेण कर्कटेन वा प्रागुदक्सूत्रसंधिस्थेन वृत्तमात्रं दद्यात् तद्वृ-त्तमेव कुण्डं । पद्मकुण्डस्य तदुत्तरावगाहत्वात् तत्पश्चाद्वदिष्यति । ततः क्रम-प्राप्तार्धचन्द्राभकुण्डोत्पत्तिं त्यक्त्वा सकलकर्मोपयोगित्वात्तावच्चतुरस्रस्येतिकर्त-व्यतामाह—संधेरिति । पार्श्वास्यमध्यात् अंसद्वयात् संधेरनुगतगुणयोः प्रागु-दक्संधिमभिव्याप्य कृतयोर्जघनावधिकयोः कर्णसूत्रयोः कोट्यश्चत्वारोऽन्ताः अब्ध्यस्रकोणाश्चतुरस्रकोणा भवन्ति । अनेन चतुरस्रोत्पत्तिर्जाता । तथाहि अत्रैकहस्ते वृत्तव्यासः ३३।७।४ द्विहस्ते ४८ चतुर्हस्ते ६७।७ षड्ढस्ते ८३।१२ अष्टहस्ते ८६ इष्टव्यासार्धपरिमितेन प्रागुदक्सन्धिस्थितेन सूत्रेण कर्कटेन वा वृत्तं दत्त्वा तस्य समा अष्टभागाः कर्तव्याः । ते च द्वावंसौ पार्श्वौ द्वे जघने मुखं पुच्छं च । तत्र समतासिध्यर्थं दक्षांसात्संधिभाग-व्याप्युत्तरजघनपर्यन्तं सूत्रं देयं । तथैवोत्तरांसाद्दक्षजघनपर्यन्तं द्वितीयं सूत्रं । ततस्तत्सूत्रद्वयान्तचतुष्टयात्परस्परान्तावधि सूत्रचतुष्टयं देयं । दक्षां-साद्दक्षजघनान्तंसूत्रं तस्मादुत्तरजघनान्तं तस्माच्च उत्तरांसपर्यन्तं तस्माच्च दक्षांसपर्यन्तं तेन समचतुरस्रं कुण्डं भवति ॥ अथार्धचन्द्राकारस्यो त्पत्तिमाह—तस्मादिति । अत्रैकहस्ते वृत्तव्यासः ३८।२।३ द्विहस्ते ५४।१।२ चतुर्हस्ते ७६।४।६ षड्ढस्ते ९४ अष्टहस्ते १०८।२।४ इष्टव्या-सार्धमितेन कर्कटेन प्राग्वद्वृत्तं दत्त्वा यद्यपि तद्वृत्तेऽर्धीकृते सत्यन्यूनाधि-

कमर्धचन्द्राभं कुण्डं भवति तथापि तन्मध्यसाधनार्थं प्रकारान्तरेण साध्यते। तस्मात्प्रागुदक्सूत्रसंधेः प्राक् प्राच्यां ज्याग्रिदेशात् उदक्सूत्ररूपज्याचतुर्थांशदेशात् तत्रस्थेन ज्याऽर्धमानेन कर्कटेन सूत्रेण वा वलयं कुरु वृत्तं निष्पादय। इह वृत्ते पश्चिमार्धमर्धेन्दुभं कुण्डं भवति। अत्र ज्यासूत्रमुदक्सूत्रसंनिधानेन ऋजु देयमिति॥ अथ क्रमप्राप्तस्य योनिकुण्डस्य त्र्यस्रपूर्वकत्वात्त्र्यस्रज्ञानार्थमादौ त्र्यस्रोत्पत्तिमाह–श्रोण्याविति। अत्रैकहस्ते वृत्तव्यासः ४२।१ द्विहस्ते ५९।१।२ चतुर्हस्ते ८४।२ षड्ढस्ते १०२।४ अष्टहस्ते ११८।२।४ इष्टव्यासार्धमितकर्कटेन प्राग्वद्वृत्तं दत्त्वा पुच्छसकाशाद्दलेन व्यासार्धेन कर्कटेन श्रोण्यौ कर्तव्यौ। तत्रोभयश्रोणिसूत्रं दत्त्वा ततो द्वयमुखगुणतः द्वयाच्छ्रोणिद्वयान्मुखपर्यन्तं यौ गुणौ सूत्रद्वयं तस्मात् तेनेत्यर्थः। वृत्ते वृत्तगर्भे त्र्यस्रि त्रिकोणं कुण्डं भवति॥ अथ योनिकुण्डोत्पत्तिमाह–भगाभ इति। भगाकारे योनिकुण्डे पुच्छश्रोणीगुणज्यं पुच्छाच्छ्रोणिपर्यन्तो यो गुणः स एव ज्या यस्य तादृशं वलययुगं अर्धवलययुगं अर्धवलययुग्मं अधिकं त्र्यस्रादधिकमित्यर्थः। तथाचात्रैकहस्ते वृत्तव्यासः ३०।२ द्विहस्ते ४२।७ चतुर्हस्ते ६०।४ षड्ढस्ते ७४।६ अष्टहस्ते ८५।६ इष्टव्यासार्धमितकर्कटेन प्राग्वद्वृत्तं दत्त्वा तत्र त्र्यस्रप्रक्रियया त्र्यस्रमुत्पाद्य पुच्छाच्छ्रोणिद्वयपर्यन्तं सूत्रद्वयं दत्त्वा तन्मध्ये एकसूत्रमध्यस्थेन तत्सूत्रार्धमितेन कर्कटेन पुच्छाज्जघनपर्यन्तं अर्धवृत्तं निष्पाद्य तथैव द्वितीयभागेऽपि वृत्तार्धान्तरं निष्पादयेत्। तेन योन्याकारं कुण्डं भवति। षड्भुजेत्वित्युत्तरश्लोकान्वयीति॥ ५॥

अथ पञ्चास्रसप्तास्रयोराभिचारिकानुष्ठानविषयत्वादादौ षडस्राष्टास्रोत्पत्तिमाह–षड्भुजे तु श्रोण्यंसाविति। षडस्रे कुण्डे तु पार्श्वतः उभयपार्श्वस्थानात् प्राक् पश्चाच्च अर्थात् व्यासार्धमितकर्कटेन श्रोण्यंसौ श्रोणिद्वयमंसद्वयं च कर्तव्यमित्यर्थः। तथाहि अत्रैकहस्ते वृत्तव्यासः २९।६ द्विहस्ते ४२।१ चतुर्हस्ते ५९।४ षड्ढस्ते ७३।२ अष्टहस्ते ८४।२ इष्टव्यासार्धमितेन कर्कटेन प्राग्वद्वृत्तं कृत्वा व्यासार्धमितेन कर्कटेनोभयपार्श्वस्थानात् श्रोणिद्वयमंसद्वयं च प्रकल्प्योभयश्रोणिसूत्रं उभयांससूत्रं उत्तरांसादुत्तरपार्श्वसूत्रं तत उत्तरश्रोणिसूत्रं एवं दक्षांसाद्दक्षपार्श्वसूत्रं ततो दक्षश्रोणिसूत्रमेवं सूत्रषट्कं दद्यात् तेन षड्भुजं कुण्डं भवति। यद्यप्ययं प्रकारो मुखात्पुच्छाच्च कर्तुं शक्यस्तथापि कुण्डकोणे योनिर्न कर्तव्येति निषेधपालनार्थं पार्श्वत एव कर्तव्यस्तेन योनि-

स्थाने कुण्डकोणो नायाति । इदमग्रेऽपि द्रष्टव्यं । अत्र व्यासार्धं ज्यामानमिति ॥ अथानेनैव प्रकारेण अष्टास्रमपि कर्तव्यं । तद्यथा । मुखात्पार्श्वात्पुच्छाद्वा वृत्तस्य षोडशांशं मर्यादीकृत्य तस्मादष्टौ भागान्समान् सचिह्नान् कृत्वा एकस्माच्चिह्नादव्यवहितान्यचिह्नपर्यन्तमेकं सूत्रं एवमष्टौ सूत्राणि दद्यात्तेनाष्टज्यमष्टास्रकुण्डं भवति । अयं प्रकारः षडस्रप्रकारेणोक्तरीत्याऽयं भिन्नत्वेनोक्त इति ॥

अथैतस्यैवाष्टास्रस्य प्रकारान्तरेण कल्पितव्यासान्तरमानपूर्वकोत्पत्तिप्रकारमाह–युगभुजेति । द्वियवयुतमुनिव्यङ्गुले वृत्ते यवद्वयाधिकसप्तत्रिंशदङ्गुलपरिमितव्यासार्धमितेन कर्कटेन प्राग्वत्कृतवृत्ते इत्यर्थः । युगभुजयुगलं चतुरस्रकुण्डद्वयं दिग्विदिक्कोणकं एकं दिक्कोणकं अपरं विदिक्कोणकं च कर्तव्यं तदा बाह्यत्र्यस्राष्टकोणं अष्टास्रिकुण्डं स्यात् । बाह्यानि च तानि त्र्यस्राणि च बाह्यत्र्यस्राणि तान्यष्टसु कोणेषु यस्य तत्तादृशं उत्पद्यत इति भावः । बाह्यत्र्यस्राष्टकोनमिति पाठे तु तेन हीनमिति स्पष्ट एवार्थः । तथाहि अत्रैकहस्ते द्वियवयुतमुनित्र्यङ्गुलमितो वृत्तव्यासः ३७।२ द्विकरे ५२।५।५ चतुःकरे ७४।४ षट्करे ९१।२ अष्टकरे १०५।५।० इष्टव्यासार्धमितेन कर्कटेन प्राग्वद्वृत्तं निर्माय तस्य वृत्तस्य चतुरस्रप्रकृतिवृत्तवदष्टौ भागाः सुसमाः कर्तव्याः । मध्ये चतुरस्रद्वयं एकं दिक्कोणमन्यद्विदिक्कोणं कृत्वा बाह्यत्र्यस्राष्टकमार्जनेनाष्टास्रं कुण्डं भवति । मूले "द्वियवयुतमुनित्र्यङ्गुले" इत्यत्र "त्रियवयुतखाब्धिव्यङ्गुले" इत्येव पाठ आधुनिकसकलपुस्तकेषु दृश्यते । टीकाकारेण रघुवीरदीक्षितेनापि तथैव यवत्रयाधिकचत्वारिंशदङ्गुलपरिमितो व्यास इत्यर्थः कृतः । द्विहस्तादावप्येतदनुसारेणैव व्यासवृद्धिर्लिखिता । परंतु तादृग्व्यासेन यत्कुण्डं भवति तत्रेष्टफलस्य मानाधिक्यं जायते । यवद्वयाधिकसप्तत्रिंशदङ्गुलमितव्यासेन तु अन्यूनाधिकेष्टफलकं कुण्डं भवति तस्मात् पुरा केनचित्पुस्तकेऽयमशुद्धः पाठो लिखितस्तत्पुस्तकं दृष्ट्वा रघुवीरेण टीका कृता । तदवसरे सत्यपि विचारसामर्थ्ये तत्पुस्तकपाठविश्वासादादर्तव्याच्च तादृशोर्थः कृतस्तेनैव हेतुना सकलेष्वपि पुस्तकेषु स एवाऽशुद्धः पाठोऽजायत । भट्टशंकरसुखजस्तु "द्वियवयुतमुनित्र्यङ्गुले" इत्येवास्तीति प्रतिभाति । अन्यथा तस्य ज्ञानाब्धेः कथमज्ञानं संभवति इत्यादि विद्वद्भिर्विचारणीयम् ॥

अथ पञ्चास्रसप्तास्रयोर्ज्यामानं यत्पूर्वमुक्तं तदेव सोपपत्तिकं दर्शयन् तयोरुत्पत्तिमाह–सप्तास्र इत्यर्धवृत्तेन त्रिदोर्दोर्दलमिति । अत्र त्रिदोः-

शब्देन त्रिभुजत्वात्त्र्यस्रमुच्यते। तस्य दोर्भुजस्तस्य दलमर्धं सप्तास्रप्रकृतिवृत्तगर्भोत्पादितत्र्यस्रभुजार्धमित्यर्थः। तथाचास्य प्रकृतिवृत्तव्यासो गोद्वावित्यनेनोक्तः २९। अस्य वर्गः ८४१ अस्यांघ्रित्रयं ६३० अयमत्रस्थत्र्यस्रदोर्वर्गः। अस्य मूलं २५।१ अत्रस्थस्य भुजोयं। अस्य दलं १२।४।४ इदमेव त्रिदोर्दोर्दलं। इदं च इभरसदृग्भागयुक् अष्टषष्ट्यधिकद्विशतांशेन यूकात्रयात्मकेन युक्तं १२।४।७।अल्पान्तरत्वादेकयूकाधिकं १२।५ इदमेवोक्तमत्रियवत्रिभूरित्यनेन तृतीयवृत्ते। तत्सप्तास्रे कुण्डे दोर्भुजो भवति। पञ्चास्रे द्विघ्नपार्श्वाननततिविवरमिति। पञ्चास्रस्य प्रकृतिवृत्तव्यासः क्ष्मारामे सयवे इत्युक्तः ३१।१ अस्य वर्गः ९६८।६ अस्यार्धं ४८४।३ अयमत्रस्थचतुरस्रदोर्वर्गः। अस्य मूलं २२ एतच्चतुरस्रस्य भुजः। अयमेव पार्श्वाननसंज्ञकः ततिर्वृत्तव्यासः ३१।१ एतदुभयं द्विघ्नं द्विगुणं कर्तव्यं। तच्च द्विघ्नपार्श्वाननसूत्रं ४४ द्विघ्नव्यासश्च ६२।२ अनयोर्विवरमन्तरं १८।२ एकस्य मानापेक्षयान्यस्य मानं यदधिकं तद्विवरमित्यर्थः। तच्चेदं १८।२।३ इदमेवोक्तमधिपादघ्नतय इत्यनेन प्राक् तत्पञ्चास्रे दोर्भवति। यद्यपीदं दोर्मानं चरमवृत्ते त्र्यस्राद्यष्टास्रान्तानां बाहुवर्गकथनावसरे उक्तं भवति। तथापि सप्तास्रपञ्चास्रयोरन्योपि दोर्मानानयनप्रकारोऽस्तीति दर्शयितुमत्राप्युक्तमतो न पुनरुक्तिदोषः। इत्थमनयोः सोपत्तिकं दोर्मानमुक्त्वा इत्यस्यापि प्रकारस्य षडस्रावसरे उक्तप्रायत्वाद्योनिस्थाने कुण्डकोणो न कर्तव्य इति सूचनार्थं वक्रतो ज्या इत्युक्तं। मुखत एव ज्यासूत्राणि देयानि न पुच्छादित इत्यर्थः। तथाहि अत्रैकहस्ते सप्तास्रे वृत्तव्यासः २९ द्विकरे ४१।०।२ चतुःकरे ५८ षट्करे ७१।०।५ अष्टहस्ते ८२।०।४ पञ्चास्रे त्वेकहस्ते वृत्तव्यासः ३१।१ द्विकरे ४४।०।१ चतुःकरे ६२।२ षट्करे ७६।२।३ अष्टहस्ते ८८।०।२ इष्टव्यासार्धमितेन कर्कटेन वृत्तं दत्वा मुखतः सप्तास्रवृत्तस्य सप्त भागान् पञ्चास्रवृत्तस्य पञ्चभागान् समान् सचिह्नान् कृत्वा सप्तास्रे सप्तसूत्राणि पञ्चास्रे पञ्चसूत्राणि च दद्यात्। तेन सप्तास्रपञ्चास्रकुण्डे उत्पन्ने भवत इति ॥ ६ ॥

सिताक्षरा—अथ कुण्डरचनाप्रकारं वृत्तद्वयेनाह–संधिः पूर्वोत्तरसूत्रसंपातदेशः कोष्ठमध्य इत्यर्थः। तमभिलक्ष्य पार्श्वास्यमध्यद्वयादारभ्य पार्श्वपुच्छमध्यपर्यन्तौ अनुततौ विस्तृतौ यौ गुणौ तयोः कोट्यः प्रान्ताः अष्टास्रकोणाश्चतुरस्रकोणा भवन्ति। अर्थाद्दक्षिणांसादारभ्य दक्षिणश्रोणिपर्यन्तं

तदारभ्योत्तरश्रोणिपर्यन्तं तदारभ्योत्तरांसपर्यन्तं तदारभ्य दक्षिणांसपर्यन्तं एवं भुजदानमपि सिद्धम् । एवमुक्तरीत्या मूलसूत्रं वर्धनीयम् ॥ अर्धचन्द्रे तस्मादिति प्रागुदक्सूत्रमध्यादारभ्य पुरतः ज्या चतुर्थांशदेशे कर्कटं स्थाप्य उक्तव्यासार्धेन वृत्तं कार्यम् । तन्मध्ये एका ज्यादेया । वृत्तस्य पूर्वप्रान्तो मार्जनीयः । अपरः स्थाप्यः । इदमेवार्धचन्द्रकुण्डम् ॥ त्र्यस्रे श्रोण्याविति उक्तव्यासार्धेन वृत्तं कार्यं । तेनैव व्यासार्धेन वृत्तरेखास्पर्शिन्यौ पुच्छश्रोण्यौ कल्पनीयौ तत्र मुखादारभ्य दक्षिणश्रोणिपर्यन्तं सूत्रं । तदारभ्योत्तरश्रोणिपर्यन्तं सूत्रं । तदारभ्य मुखान्तमिति सूत्रत्रयेण त्र्यस्रिकुण्डमुत्पद्यते । अर्थात्सर्वत्र ज्यासंख्याकबहिर्धनुषां मार्जनं ॥ योनौ तु उक्तव्यासेन वृत्ते कृते त्र्यस्रवत्कल्पेन मुखतः दक्षिणोत्तरश्रोणिपर्यन्तं गुणद्वयं । श्रोणिः कटिः तत्पर्यन्तमित्यर्थः । ततः पुच्छाद्दक्षिणश्रोणिपर्यन्तमेकं सूत्रं । तथा पुच्छादुत्तरश्रोणिपर्यन्तमेकं । तत्सूत्रार्धमितकर्कटेन तन्मध्याच्छ्रोणिपुच्छस्पर्शि वृत्तार्धं कार्यं । एवं स्वसारकं योनिकुण्डं भवति । इदमेवाधिकं त्र्यस्रादिति शेषः ॥ षड्भुजे त्विति स्वन्तत्वादुत्तरान्वयि ॥ ५ ॥

षड्भुजे पार्श्वद्वयात् व्यासार्धमानेन श्रोण्यंसौ कार्यौ । तेन योनिमुखपुच्छातिरिक्तानि षट्चिह्नानि भवन्ति । तत्रैकचिह्नादारभ्य तत्समीपस्थद्वितीयचिह्नपर्यन्तं यत्सूत्रं तदेव षडस्रे भुजः । एवं षड्भुजदानेन षडस्रं भवति ॥ अष्टास्रे युगेति । यवत्रयाधिकचत्वारिंशदङ्गुले वृत्ते दिग्विदिशोरन्तराले अष्टौ चिह्नानि कार्याणि तत्र समचतुरस्रद्वयं चिह्नसंलग्नकोणं कार्यं । तत्र यानि बाह्याष्टत्रिकोणानि भवन्ति तदेकत्रिकोणभूमिमध्यादारभ्य तत्समीपस्थद्वितीयत्रिकोणभूमिमध्यपर्यन्तमेको भुजो देयः । एवमष्टौ भुजाः कार्याः । एवं तत्र त्रिकोणाष्टकद्वयमुत्पन्नं भवति । तत्परिमार्ज्य मध्ये ज्याऽष्टकं रम्यं कुण्डमुत्पद्यते । अयमेव मूलाशय इति भाति । यथाश्रुतार्थकरणस्यादोषावहत्वात् । ननु युगभुजयुगलमित्यादि अष्टास्रिकुण्डमित्यन्तोक्तवाक्ये अयमर्थः कथं लभ्यत इति चेत् श्रीमत्तातचरणकृतकुण्डार्कपद्मिन्यां सुविस्तृतमुक्तं तत एवोह्यं विस्तरभियाऽत्र नालेखि । तेन द्वियवयुतमुनित्र्यङ्गुले इति । त्रियवयुतखसिंधवङ्गुले इति च पाठस्य कल्पितत्वादपपाठ इत्युपेक्ष्य इति दिक् ॥ अथवा उक्ताष्टास्रकुण्डस्य पूर्वोक्तसार्धाष्टाविंशत्यङ्गुलात्मकव्यासार्धेन वृत्तं कृत्वा तत्राष्टदिक्षु चिह्नितेषु सत्सूक्तत्रियूकोनैकादशाङ्गुलिभिः १०।७।५ दिग्विदिशोरन्तरालात्

परस्परसंलग्नदत्ताभिरष्टास्त्रं स्यात् । मूलकृत्प्रकारान्तरेणापीदमेव भवतीति सिद्धमिति शिवम् ॥ सप्तास्त्र इति । अस्य गोद्वाविति प्रकृतिवृत्ते सप्तास्त्रभुज उक्तः अत्र तु प्रकारान्तरेणोक्त इति । सप्तास्रे कर्तव्ये त्रिभुजस्यार्धं स्वाष्टषष्ट्युत्तरद्विशततमेन भागेन युक्तं चेत् भुजो भवति । यथा–व्यासः २९ अस्य वर्गः ८४१ पादत्रयं ६३०।६ अस्य मूलं २५।१ अयमेव गो द्वौ वृत्ते वक्ष्यमाणरीत्या त्रिभुजभुजः । अस्यार्धं १२।४।४ अस्याष्टषष्ट्युत्तरद्विशततमोंऽशः ०।०।३ अनेन युक्तं त्रिभुजभुजार्धं १२।४।७ स्वल्पान्तरत्वात्पूर्वोक्त एव १२।५ एतन्मितसप्तभिर्भुजैर्वक्रतः मुखमारभ्य परस्परसंलग्नैः सप्तास्त्रं भवतीत्यर्थः । पञ्चास्र इति । पञ्चास्रे पार्श्वाननं नाम लक्षणया पार्श्वादारभ्य मुखान्तं यत्सूत्रं । ततिर्नाम व्यासः । पार्श्वाननं च ततिश्चेति । द्विघ्ने च ते पार्श्वाननतती च तयोर्यद्विवरमन्तरं तत् खाभ्रवेदांशेन ४०० स्वचतुःशततमेन भागेन युक्तं चेत् भुजो भवतीत्यर्थः । यथा पञ्चास्त्रव्यासः ३१।१ अस्य वर्गः ९६८।६ अस्यार्धं ४८४अस्य मूलं २२ अयमस्मिन्वृत्तस्थचतुरस्त्रभुजः । अयमेव पार्श्वाननमित्युच्यते । द्विगुणः ४४ ततिः ३१।१ इयमपि द्विगुणा ६२।२ द्विगुणयोरन्तरं १८।२ अस्य चतुःशततमो भागः ०।०।३ अनेन युक्तं १८।२।३ जात उक्तो भुजः पञ्चास्त्रस्य । एतन्मितैः पञ्चभिर्भुजैर्मुखतः संलग्नैर्दत्तैः पञ्चास्त्रकुण्डं भवतीत्यर्थः ।

ननु भुजवतां भुजमानान्युक्त्वा अधुना सप्तास्त्रपञ्चास्त्रयोर्ज्यामानं पुनरुक्तत्वात् पुनरुक्तिदोष इति चेन्नेत्यादि श्रीमत्तातचरणैः कुण्डार्कपद्मिन्यामुक्तं ततोऽवगन्तव्यं । मम तूक्तरीत्या वक्ष्यमाण–"स्युर्वृत्तव्यासवर्गा" दितिरीत्याऽन्यगणितरीत्या त्रैराशिकेन च ज्यामानं "द्विघ्नोऽब्धिघ्न" इत्यादिरीत्या वक्ष्यमाण "वृत्तेऽब्धीष्वी"त्यादिरीत्या त्रैराशिकेन च व्यासमानं चैकीकृत्योभयोः स्थूलत्वं सूक्ष्मत्वं च विज्ञाय कुण्डं कार्यमिति मूलाशय इति प्रतिभाति । अन्यथा दोषश्रवणात् । तदुक्तं परशुरामविश्वकर्मभ्यां—"खातेऽधिके भवेद्रोगो हीने धेनुधनक्षयः । वक्रे कुण्डे च संपातो मरणं छिन्नमेखले ॥ मेखलारहिते शोकोऽभ्यधिके वित्तसंक्षयः । भार्याविनाशनं प्रोक्तं कुण्डं योन्या विनाकृतम् । कुण्डं यत्कण्ठरहितं सुतादीनां मृतिप्रद" मिति । अथवा श्रीमत्तातचरणकृतकुण्डार्कपद्मिन्यां त्र्यस्राद्यष्टास्रान्तकुण्डकरणप्रकारान्त-

रमुक्तं श्लोकेनैकेन। यथा—। अथवा कुण्डकोणे योनिर्न पतेत्तथा सर्वकुण्डानामाकारः कर्तव्य इति मनसि निधाय "कोव्यः पूर्वोत्तरांश्रो"रित्यादि "खाभ्रवेदांशयुक्त"मित्यन्तेन सार्धपद्यद्वयेन यदुक्तं तद्भुजवत्क्षेत्रेषु गुरु भवति अतो लघुयुक्तिरुच्यते । "प्राक्तस्त्रिपञ्चसप्तास्त्रविदिक्तोऽब्ध्यस्त्रिचोत्तरात् । षडस्त्रि दिग्विदिग्योगादष्टास्त्र्युक्तभुजैर्हि तत्" इति । भुजैः "वृत्तेऽब्जे वलयोऽधिभै" रितिश्लोकोक्तभुजैरित्यर्थः ॥ ६ ॥

सुप्रभा—एवं सर्वकुण्डोपयोगिनीं पूर्वभूमिकामुक्त्वा कुण्डकरणप्रक्रियामाह श्लोकत्रयेण—संधेरिति । अत्र सर्वत्र वृत्तकरणे इष्टव्यासार्धपरिमितं सूत्रं कर्कटको वा समुपादेय इत्यभिसंधाय वक्ष्यमाणेतिकर्तव्यता विधेयेति । तथा चात्र वृत्तकुण्डे कापीतिकर्तव्यता नास्ति । केवलमिष्टव्यासार्धपरिमितेन सूत्रेण कर्कटकेन वा प्रागुदक्सूत्रसंपातमभिलक्ष्य वृत्ते कृते वृत्तकुण्डं समुद्भवति । क्रमप्राप्तं पद्मकुण्डं त्वितिकर्तव्यताबाहुल्येनोत्कृष्य वक्ष्यति । तथा क्रमप्राप्तं अर्धचन्द्रं योनिकुण्डं च परित्यक्त्वा सर्वोपयोगित्वात्प्रथमं चतुरस्रमाह । पार्श्वास्यमध्यौ दक्षपार्श्वमुखयोर्मध्यं उत्तरपार्श्वमुखयोर्मध्यं च तौ दक्षोत्तरांसौ । संधेरिति द्वितीयार्थे षष्ठी । संधिं प्रागुदग्दण्डसंपातमित्यर्थः। अनु अनुलक्ष्यीकृत्य ततौ विस्तारितौ यौ गुणौ सूत्रे तयोः कोटयोऽग्राणि प्रान्तचिह्नानीत्यर्थः । अब्ध्यस्रस्य चतुरस्रकुण्डस्य कोणा अस्राणि भवन्ति । कोणानां प्रदर्शनेन भुजसूत्राण्यर्थाक्षिप्तानि प्राप्स्यन्तीति कण्ठतो नोक्तानि । संधेरित्युक्त्या कर्णसूत्रदानेन चतुरस्रकोणप्रदर्शनं तु समचतुरस्रतासिद्ध्यै । तेन विना तत्सिद्धेरभवादिति भावः । तथाहि इष्टार्धव्यासपरिमितेन कर्कटकेन वृत्तं कृत्वा तत्र प्रागुदक्सूत्रे दत्वा तयोर्मध्ये पूर्वोक्तप्रकारेण स्कन्धद्वयं जघनद्वयं च प्रसाध्य दक्षांसमारभ्य संधिमभिव्याप्योत्तरश्रोणिपर्यन्तमेकं सूत्रं। उत्तरांसमारभ्य संधिमभिव्याप्य दक्षश्रोणिपर्यन्तमेकं सूत्रं । एवं कर्णसूत्रद्वयं दत्वा तयोरग्रेषु दक्षांसाद्दक्षश्रोणिपर्यन्तमेकं सूत्रं। दक्षश्रोणेरुत्तरश्रोणिपर्यन्तं द्वितीयं । उत्तरश्रोणेरुत्तरांसपर्यन्तं तृतीयं । उत्तरांसाद्दक्षश्रोणिपर्यन्तं चतुर्थं सूत्रं दत्वा समचतुरस्रं चतुरस्रकुण्डं समुत्पादनीयमिति भावः ।

वृत्तकुण्डम्






चतुरस्रकुण्डम्






अथार्धचन्द्रमाह—तस्मादिति । तस्मादिष्टव्यासपरिमितकृतवृत्तप्रागुदग्दण्डसंधेः प्राक् । अत्र प्राक्शब्देनोत्तरा लक्षणीया । अर्धचन्द्रकुण्डस्योदङ्मुखत्वोक्तेस्तत्सिद्धये । या उदग्ज्या उदक्सूत्रं तस्यांघ्रिदेशाच्चतुर्थांशमारभ्य तत्र कर्कटकैकप्रान्तं निधाय । पुनः पूर्वोक्तेष्टव्यासपरिमितं द्वितीयं वलयं वृत्तं कुरु विलिखेति शिष्यं प्रत्युक्तिः । इह द्वितीयवृत्ते पश्चिमार्धं पूर्वोक्तन्यायेन पश्चिमशब्देन दक्षिणां लक्षयित्वा दक्षिणार्धं दक्षिणदिक्संस्थं वलयस्यार्धं अर्धेन्दोरर्धचन्द्रस्याभेवाकृतिर्यस्य तादृशमर्धचन्द्रं कुण्डं समुत्पादनीयमिति । यद्यपि प्रथमवृत्तस्योत्तरार्धं मार्जयित्वा दक्षिणार्धं अर्धचन्द्रं भवेत् तथापि प्रागुदक्सूत्रसंपातरूपो मध्यो व्यभिचरति ज्याप्रदेशमध्यभागे गच्छति तं व्यभिचारं वारयितुं द्वितीयवृत्तकरणोपदेशः । एवं कृते मध्यः स्वस्थाने एव ध्रुवो भवति ॥





अथ क्रमप्राप्तं योनिकुण्डं त्र्यस्रपूर्वकमिति पूर्वं त्र्यस्रमाह—श्रोण्याविति । पूर्वमिष्टव्यासार्ध—परिमितकर्कटेन वृत्तं कृत्वा तत्रास्यादिचिह्नाष्टकं संपाद्य पुच्छादलेन पुच्छमारभ्य दलेन व्यासार्धपरिमितेन कर्कटकेन श्रोण्यौ जघनद्वयं प्राकृतश्रोणिद्वयात्किञ्चिदग्रे श्रोणिद्वयं कार्यमित्यर्थः । द्वयस्य श्रोणिद्वयस्य परस्परं मुखस्य च गुणतः सूत्रप्रदानेन । सार्वविभक्तिकस्तसिल् । त्र्यस्रि

त्रीण्यस्राणि कोणा यस्य तादृशं त्र्यस्रकुण्डं समुत्पादनीयं । मुखादारभ्य दक्षिणश्रोणिपर्यन्तं एको भुजः । दक्षश्रोणेरुत्तरश्रोणिपर्यन्तं द्वितीयो भुजः । उत्तरश्रोणिमारभ्य मुखपर्यन्तं तृतीयो भुजो भवतीत्यर्थः । इति ॥






अथ योनिकुण्डमाह—वृत्त इति । वृत्ते इदं पदं सर्वत्रान्वेति साकाङ्क्षत्वात् । पूर्वमिष्टव्यासार्धपरिमितेन कर्कटकेन वृत्तं कृत्वा तत्र त्र्यस्रवत्पुच्छमारभ्येष्टव्यासार्धपरिमितकर्कटकेन दक्षोत्तरश्रोण्यौ प्रसाध्य ताभ्यां सकाशान्मुखपर्यन्तमुभयतः सूत्रप्रदानेन भुजद्वयं प्रसाध्य भगाभे भगस्य योनेराभेवाकृतिर्यस्य तादृशे योनिकुण्डे कर्तव्ये । अग्रिमां त्र्यस्रप्रक्रियां परित्यज्य पुच्छश्रोण्योः परस्परं यो गुणः स एव ज्या यस्य तादृशं दलवलयस्यार्धवलयस्य युगं द्वन्द्वं च अधिकं त्र्यस्रप्रक्रियातोऽधिकं कुर्यादिति । दक्षश्रोणेरारभ्य पुच्छपर्यन्तमेकं सूत्रं, पुच्छादारभ्योत्तरश्रोणिपर्यन्तं द्वितीयं सूत्रं दत्वा तयोः सूत्रयोर्मध्यं कल्पयित्वा तन्मध्यद्वयेन पुच्छश्रोणीगुणार्धपरिमितकर्कटकैकप्रान्तं निधाय द्वे अर्धवलये संपादयेदित्यर्थः । एवं कृत्वा






योनिकुण्डं समुत्पादनीयम् ॥

षड्भुजे तु इत्यस्यान्वयस्त्वग्रिमश्लोके अनुसंधेय इति पञ्चमश्लोकार्थः॥५॥

श्रोण्यंसाविति । तु पुनः षड्भुजे षडस्रे कुण्डे कर्तव्ये सति पार्श्वतो दक्षिणोत्तरपार्श्वाभ्यां सकाशात् । अर्धादित्यव्ययं । तन्मितकर्कटकेनेत्यर्थः । श्रोण्यंसौ श्रोणिद्वयं स्कन्धद्वयं च कार्यमिति । पूर्वमिष्टव्यासार्धपरिमितकर्कटकेन वृत्तं कृत्वा तत्र पुच्छमुखदक्षिणोत्तरपार्श्वानि च कृत्वा दक्षपार्श्वादर्धपरिमितकर्कटकेन दक्षोंऽसो दक्षा श्रोणी च कार्या । उत्तरपार्श्वादर्धपरिमित-

कर्कटकेनोत्तरांस उत्तरा श्रोणी च कार्या । दक्षांसमारभ्य दक्षपार्श्वपर्यन्तमेकं सूत्रं । दक्षपार्श्वादारभ्य दक्षश्रोणिपर्यन्तं द्वितीयं सूत्रं । दक्षश्रोणेरारभ्योत्तर-श्रोणिपर्यन्तं तृतीयं सूत्रं । उत्तरश्रोणेरारभ्योत्तरपार्श्वपर्यन्तं चतुर्थं सूत्रं । उत्तरपार्श्वादारभ्योत्तरांसपर्यन्तं पञ्चमं सूत्रं । उत्तरांसादारभ्य दक्षांसपर्यन्तं






षष्ठं सूत्रं दत्त्वा षडस्र-कुण्डमुत्पद्यते । यद्यपि पुच्छतः श्रोण्यंसद्वन्द्वसं-पादनेनापि षडस्रसिद्धिः संभाव्यते तथापि योनि-स्थाने कोणनिपातात्सा नेष्यते । "नार्पयेत्कुण्ड-कोणेषु योनिं तां तन्त्रवित्तमः," "योनिर्न कोणे न च योनिकुण्डे" इत्यादिना तन्निषेधश्रुतेः । एवमग्रेपि पञ्चास्र-सप्तास्र-पद्मकुण्डादिष्वपि बोध्यं इति ॥

अथ क्रमप्राप्तं पञ्चास्रं त्यक्त्वा षडस्रमुक्तं तथा सप्तास्रमपि त्यक्त्वाऽष्टास्र-कुण्डमाह—पञ्चास्र-सप्तास्रे आभिचारिकत्वादुत्कृष्य वक्ष्यति । युगभुजे इति । पूर्वमिष्टव्यासार्धपरिमितकर्कटकेन वृत्तं कृत्वा तत्र दिग्विदिक्कोणकं बाह्यत्र्यस्राष्टकोणमित्यस्मिन्पदे मूर्धन्यणकारघटितपाठं स्वीकुर्वन्ति । तादृश-पाठे दिग्विदिक्शब्देन लक्षणया दिग्विदिगन्तरालं समुपादेयं । ननु संभवति मुख्यार्थे लक्षणा नोचितेति चेत्सत्यं । परमाश्रीयमाणे मुख्यार्थे योनिस्थाने कोणनिपातो दुर्निवारः । तत्परिहारस्त्वावश्यकः । स च लक्षणां विना न संभवति अतः सा स्वीकर्तव्यैवेति । दिशां प्रागादिदिशां विदिशामाग्नेय्यादीनां






चान्तराले कोणा अष्ट-कोणा यस्य तादृशं । युगभुजस्य चतुर्भुजस्य युगुलं द्वन्द्वं यत्रास्ति तादृशं । बाह्यत्र्यस्राष्ट-कोणं यानि बाह्यानि त्र्य-स्राणि त्रिकोणानि तत्सं-बन्धि यदष्टानां कोणानां समाहारोऽष्टकोणं तदष्टकोणात्मकमष्टास्रं भवती-

त्यर्थः । दिग्विदिगन्तरालेषु संपन्नत्र्यस्राष्टकमध्यकोणेषु एकस्मात्त्र्यस्रमध्यकोणादारभ्याव्यवहितकोणपर्यन्तं क्रमेणाष्टानां सूत्राणां प्रदाने कृतेऽष्टास्रकुण्डं समुद्भवति इति ॥ बाह्यत्र्यस्राष्टकोनमितिदन्त्यनकारघटितपाठे तु "वृत्तेऽब्जे" इत्यत्रोक्तगोद्वावपदले इत्यस्य वृत्तव्यासस्य वृत्तं न कार्यं किंतु त्रियवयुतं त्रियवाधिकं । नगत्र्यङ्गुले सप्तत्रिंशदङ्गुलात्मकव्यासं वृत्तं कुर्यात् इति विशेषः । तादृशवृत्तगर्भे दिग्विदिक्कोणकं दिक्षु प्रागादिचतुर्दिक्षु विदिक्षु आग्नेय्यादिचतसृषु च कोणा यस्य तादृशं । अस्मिन्पक्षे न लक्षणाप्रसङ्गो मुख्यार्थसंभवात् । युगभुजस्य चतुर्भुजस्य युगुलं द्वन्द्वं । चतुरस्रकुण्डद्वयमित्यर्थः । बाह्यानां त्र्यस्राणामष्टकेनोनं वर्जितं सत् अष्टास्रि अष्टावस्राणि कोणा यस्येत्यन्वर्थसंज्ञं कुण्डं अष्टास्रकुण्डमित्यर्थः । स्याद्भवेदिति ॥ यत्तु कैश्चित् "मुनित्र्यङ्गुले" इत्यत्र "खसिंध्वङ्गुले" इति पठ्यते तन्न साधु दोषावहत्वादिति प्रायः सर्वैरपि टीकाकृद्भिः सोपपत्तिकं प्रादर्शीत्यन्यत्र विस्तरः । तथाचाष्टास्रे वृत्तव्यासान्तरं एकहस्ते ३।७।२ द्विहस्ते ५।२।५।५ चतुर्हस्ते ७।४।४ षड्ढस्ते ९।१।२ अष्टहस्ते १०।५।५ अङ्गुलात्मको भवति । अष्टास्रकुण्डं साधयितुं व्यासद्वयकथनद्वारा प्रकारद्वयं प्रतिपादितं ग्रन्थकृता शिष्यमतिविवृद्ध्यर्थमिति भावः ॥

सप्तास्रमाह–सप्तास्रे कुण्डे कर्तव्ये सति उक्त "गोद्वा"विति व्यासार्धेन सार्धचतुर्दशाङ्गुलात्मकेन १४।४ कर्कटकेनैकोनत्रिंशदङ्गुल २९ परिमितं वृत्तं संपाद्य तत्रैकं त्रिदोर्नाम त्र्यस्रं समुत्पादनीयं । तस्य दोर्भुजस्य दलमर्धं इभरसद्वग्भागयुक् । इभा अष्टौ । रसाः षट् । अङ्कानां वामतो गतिरिति न्यायेन अष्टषष्ट्यधिकद्विशततमांशेन २६८ युग्युक्तं सत् सप्तास्रस्य भुजमानं भवति । तत्परिमितं कर्कटकं बध्वा तेन वक्रतो मुखतः सप्तचिह्नानि दत्त्वा ज्याः कर्तव्याः । एवं कृते सप्तास्रकुण्डं समुद्भवति । तथाहि–अस्य सप्तास्रस्य प्रकृतिवृत्तव्यासो "गोद्वा"वित्युक्तः २९ एकोनत्रिंशदङ्गुलात्मकः । अस्य वर्गः ८४१ चरणत्रितयं ६३०।६ अयमेवास्मिन्वृत्ते संपादितत्र्यस्रभुजवर्गः । अस्य मूलं २५।१।० अयमेवात्रत्यत्रिभुजभुजः । अस्यार्धं १२।४।४ अस्याष्टषष्ट्युत्तरद्विशततमोंशः ०।०।२ अनेन युक्तं त्रिभुजभुजार्धं १२।४।७ अल्पान्तरत्वात्पूर्वोक्तं "अत्रियवत्रिभूः" १२।५ इत्येव संपद्यते । तन्मितैर्मुखतः संपादितैः सप्तभिर्भुजैः सप्तास्रं भवतीत्यर्थः । पूर्वं व्यासार्धेन २९ एकोनत्रिंशाङ्गुलात्मकं वृत्तं

दत्त्वा । तस्य ज्या चतुर्थांशदेशादेकतरतो वृत्तावच्छेदिकां तिर्यग्रेखां दद्यात् । सैव सप्तास्रभुजात्मिका भवति । तन्मितं कर्कटं बध्वा मुखतस्तेन कर्कटकेन सप्त चिह्नानि कृत्वा तेषु परस्परं संलग्नसप्तभुजदानेन सप्तास्रं प्राग्वदेव सिध्यतीति सुगमोपायः ॥






एवं पञ्चास्रे कुण्डे कर्तव्ये द्विघ्नपार्श्वाननततिविवरं। पार्श्वाननं च ततिश्च पार्श्वाननतती द्विघ्ने द्विगुणिते पार्श्वाननतती च द्विघ्नपार्श्वाननतती तयोर्विवरं नाम यदन्तरं तत् खाभ्रवेदांश ४०० युक्तं सत् पञ्चास्रे भुजो भवति। एतन्मितेन कर्कटकेन मुखतः पञ्च चिह्नानि कृत्वा तेषु पञ्चभुजदानेन पञ्चास्रं कुण्डं भवति। तथाहि–अत्र पार्श्वाननं नाम लक्षणया पार्श्वादारभ्य मुखपर्यन्तं सूत्रमित्यर्थः। ततिर्नाम प्रकृतिवृत्तव्यासः। विवरं नामानयोरन्तरमित्यर्थः। खाभ्रांशो नाम चतुःशततमोंशः। पञ्चास्रस्य प्रकृतिवृत्तव्यासः ३१।१ अस्य वर्गः ९६८।६ अस्यार्धं ४८४।३ अस्य मूलं २२ अयमत्रस्थवृत्तचतुरस्रभुजः। अस्यैव पार्श्वाननसंज्ञया व्यवहारः। स द्विगुणः ४४ ततिः प्रकृतिवृत्तव्यासः ३१।१ सापि द्विगुणा ६२।२ द्विगुणयोरनयोरन्तरं। एकस्य मानापेक्षयाऽन्यस्य यदधिकं मानं तदित्यर्थः। १८।२ अस्य चतुःशततमोंशः ०।०।३ अनेन युक्तं १८।२।३ जातं पञ्चास्रभुजमानं। इदमेव "क्ष्मारामे सयवेऽधिपादघ्नतयो" १८।२।३ इत्यनेन प्रागुक्तं। पूर्वं व्यासार्धेन यवाधिकैकत्रिंशदङ्गुलात्मकं ३१।१ वृत्तं दत्त्वा तद्व्यासं पञ्चधा विभजेत्। ततो व्यासप्रांताभ्यां वृत्तस्योत्तरप्रदेशे वृत्ताद्बहिर्मत्स्यद्वयं कार्यं। मत्स्यद्वयावच्छेदकबिन्दुं व्यासद्वितीयविभागबिन्दुं चाभिलक्ष्य वृत्तस्य दक्षप्रदेशावच्छेदिकां तिर्यग्रेखां दद्यात्। अनन्तरं व्यासाग्रं दक्षिणागततिर्यग्रेखाग्रं चानुलक्ष्य एकां रेखां दद्यात्। सैव पञ्चास्रभुजात्मिका भवति। तन्मितं कर्कटं बध्वा मुखतस्तेन कर्कटकेन पञ्चचिह्नानि कृत्वा तेषु परस्परं संलग्नपञ्चभुजदानेन पञ्चास्रं प्राग्वदेव सिध्यतीति सुगमोपायः ॥






यद्यपि पुच्छादितो भुजसाधनेनापि सप्तास्रपञ्चास्रयोः कुण्डयोः सिद्धिर्भवेत् तथापि योनिस्थाने कोणनिपातो माभूदिति वक्रतो ज्या इत्युक्तं। योनिस्थाने कोणनिषेधस्तु प्राक्षडस्रावसरे निरुक्त एव विज्ञेयः इति॥६॥

वृत्तव्यासे नवांशे द्विचतुरिभलवैः कर्णिकाकेसरान्तः
पत्रक्ष्मामण्डलानि स्युरवधिवलयं स्यात्सतत्वांशपङ्क्त्या।
त्र्यस्राण्यष्टौ बहिस्तच्छ्रुतिदलगुणकौ द्विघ्नमौर्वीभ्रमेण
चापावन्तर्बहिर्ज्याविति कुरु मतिमन्नष्टपत्राब्जकुण्डम् ॥ ७ ॥

मरीचिका—अथ पद्मकुण्डमाह—वृत्तव्यासं नवधा विभज्य द्वाभ्यां भागाभ्यामंशतः कर्णिकावृत्तं कार्यं। ततो बहिश्चतुर्भिर्भागैः केसरवृत्तं। ततोपि बहिरष्टभिर्भागैः अन्तःपत्रक्ष्माख्यं पत्रमध्यभूमिवलयं कर्तव्यं। तस्माद्बहिः पत्रविभागः। तस्मिन्नष्टदले वृत्तेऽष्टधा पूर्ववद्विभक्ते तत्राष्टौ चिह्नानि कर्तव्यानि। ततोपि बहिर्दशभिरंशैरागन्तुकेनैकेन सहितैः स्वकीयपञ्चविंशत्यंशोपेतैः १।०।५ पत्राग्रावधि वृत्तं किंचिदधिकैकत्रिंशदङ्गुलो व्यासो भवति। ततोऽष्टांशस्य वृत्तस्य मुखतोंऽसतश्च द्वौ कर्णौ चरमवलयान्ते संगतौ कृत्वा एकं त्र्यस्रमुत्पादयेत्। ततोंऽसमुखाभ्यां द्वितीयं। अंसपार्श्वाभ्यां तृतीयं। पार्श्वजघनाभ्यां चतुर्थं। जघनपुच्छाभ्यां पञ्चमं। पुनः पुच्छदक्षिणजघनाभ्यां षष्ठं। जघनदक्षिणपार्श्वाभ्यां सप्तमं। पार्श्वांसाभ्यामष्टमं। एवमष्टौ त्र्यस्राणि बहिः कृत्वा प्रतित्र्यस्रबाहौ द्वे द्वे अन्तर्बहिर्ज्ये धनुषी कर्तव्ये। ततश्चाश्वत्थपत्राकाराणि दलानामुत्तरार्धानि भवन्ति। तथाहि—कर्णं द्वेधा विभज्य तावत्सूत्रं द्विगुणितं कृत्वा तस्यान्तौ कोट्यौ निधाय मध्ये गर्भभागे आकृष्यान्यतरां कोटिं द्वितीयकोटिपर्यन्तां भ्रामयेत्। तदिदमन्तर्ज्यं धनुः तस्यैव सूत्रस्यैकपाशं पत्रान्ते प्रमुच्य द्वितीयं यथावस्थितमेव कृत्वा मध्यमसूत्रं बहिराकृष्य तस्यैकतमं द्वितीयान्तपर्यन्तं भ्रामयेत्। तद्बहिर्ज्यं धनुर्भवति। एवं

द्वितीयकर्णेऽपि बाह्यं धनुर्बहिर्ज्यमान्तर्धनुरन्तर्ज्यं च कृत्वा चतुर्भिर्धनुर्भिरेकं दलं साधयेत् । एवमष्टावपि दलानि कृत्वा पद्मकुण्डं कार्यम् ॥ ७ ॥

दीधितिः—पद्मकुण्डमाह–वृत्तव्यास इति । वृत्तव्यासं नवधा विभज्य द्वाभ्यां भागाभ्यामन्तःकर्णिकावृत्तं कर्तव्यं । ततो बहिश्चतुर्भिर्भागैः केसरवृत्तं । ततोपि बहिरष्टभिर्भागैरन्तःपत्रक्ष्माख्यं पत्रमध्यभूमिवलयं कर्तव्यं । यस्मात् बहिः पत्रविभागः तस्मिन्नष्टदलवृत्ते अष्टधा पूर्ववद्विभक्ते तत्रतत्राष्टौ चिह्नानि कर्तव्यानि । ततोपि बहिर्दशभिरंशैः स्वकीयपञ्चविंशत्यंशोपेतैः पत्राग्रावधिवृत्तं किंचिदधिकैकत्रिंशद्व्यासं ३१।१।५ भवति । ततोऽष्टांशस्य वृत्तस्य मुखतोंऽसतश्च द्वौ कर्णौ चरमवलयान्ते संगतौ कृत्वा एकं त्र्यस्रमुत्पादयेत् । ततोंऽसमुखाभ्यां द्वितीयं । अंसपार्श्वाभ्यां तृतीयं । पार्श्वजघनाभ्यां चतुर्थं । जघनपुच्छाभ्यां पञ्चमं । पुनः पुच्छदक्षिणजघनाभ्यां षष्ठं । जघनदक्षिणपार्श्वाभ्यां सप्तमं । पार्श्वांसाभ्यामष्टमं । एवमष्टौ त्र्यस्राणि बहिःकृत्वा प्रतित्र्यस्रबाहुद्वन्द्वेऽन्तर्बहिर्ज्ये धनुषी कर्तव्ये । ततश्चाश्वत्थपत्राकाराणि दलानामुत्तरार्धानि भवन्ति । तथाहि–कर्णं द्वेधा विभज्य तावत्सूत्रं द्विगुणं कृत्वा तस्यान्तौ कोट्योर्निधाय मध्यगर्भभागे आकृष्यान्यतरां कोटिं द्वितीयकोटिपर्यन्तां भ्रामयेत् । तदिदमन्तर्ज्यं धनुस्तस्यैव सूत्रस्य एकं पाशं पत्रान्ते प्रमुच्य द्वितीयं यथावस्थितमेव कृत्वा मध्यसूत्रं बहिराकृष्य तस्यैकमन्तं द्वितीयान्तपर्यन्तं भ्रामयेत् । तत् बहिर्ज्यं धनुर्भवति । एवं द्वितीयकर्णेपि बाह्यं धनुर्बहिर्ज्यं आन्तरमन्तर्ज्यं कृत्वा चतुर्भिर्धनुर्भिरेकं दलं साधयेत् । सूत्रेण धनुःकरणे द्विघ्नमौर्वीभ्रमेणेत्युक्तं । कर्कटकग्रहणे तु मौर्वीतुल्य एव कर्कटको ग्राह्यः । एवमष्टावपि दलानि कृत्वा पद्मकुण्डं कार्यम् ॥ ७ ॥

पद्मिनी—अथ पद्मकुण्डमाह–अत्र वृत्तव्यासः २७।०।६ इमं नवधा कृत्वा नवमांशस्तु ३।०।०।५ एतत्परिमितकर्कटेन प्रथमं कर्णिकावृत्तं कार्यं । तदेतादृशं द्वाभ्यां भागाभ्यां सिद्धं जातं । एवं चतुर्भिर्भागैः केसरवृत्तं । एवमष्टभिर्भागैरन्तःपत्रक्ष्मावृत्तं । पत्रस्यान्तःक्ष्मा नाम पत्रमध्यभूमिरित्यर्थः । अवधिवलयं पत्राग्रावधिवृत्तं उक्तनवमांशः दशभिर्गुणितव्यः गुणितस्य यः पञ्चविंशत्यंशः तेन युक्तो गुणितः कार्यः । तेन यद्वृत्तं तदेवावधिवलयमित्युच्यते । तत्तु लिक्षाद्वययूकात्रययवद्वयसहितैकत्रिंशदङ्गुलं भवति । ३१।२।३।२

एतान्यवधिवलयान्तानि वलयानि कृत्वा अन्तःक्ष्मावृत्तस्याष्टौ भागाः प्राचीतः कार्याः। एवमवधिवृत्तस्य दिग्विदिगन्तरालेऽष्टौ चिह्नानि कार्याणि। तत्रान्तःपत्रक्ष्मावृत्तस्य प्राचीगतचिह्नमारभ्यावधिवलयस्य प्राच्याग्नेयमध्यचिह्नपर्यन्तमेकं सूत्रं देयम्। एवमाग्नेयगतचिह्नमारभ्यावधिवलयोक्तचिह्नपर्यन्तं द्वितीयसूत्रं देयं। एवं कृते एकं त्र्यस्रमुत्पन्नं भवति। एवमाग्नेयदक्षिणचिह्नाभ्यां द्वितीयं। दक्षिणनिर्ऋतिचिह्नाभ्यां तृतीयं। निर्ऋतिपश्चिमचिह्नाभ्यां चतुर्थं। पश्चिमवायव्यचिह्नाभ्यां पञ्चमं। वायव्योत्तरचिह्नाभ्यां षष्ठं। उत्तरेशानचिह्नाभ्यां सप्तमं। ईशानपूर्वचिह्नाभ्यामष्टमं। एवमष्टत्रिकोणानि बहिरूपाद्येति केचित्। कुण्डकोणे योनिनिषेधात्। शास्त्रोक्तमार्गेत इत्युक्तत्वाच्च। तदुक्तं कोटिहोमपद्धतौ–अत्र चतुर्दलपक्षे प्रागादिदिक्ष्वग्राणि। अष्टदलपक्षे दिक्षु विदिक्षु चेति केचित्। "चतुर्दिक्षु चतुःपत्रं पद्माभं कुण्डमीरितम्। अथवाष्टदलं पद्मं कुर्याच्छास्त्रोक्तमार्गेतः" इति सिद्धान्तशेखरात्। सांप्रदायिकास्त्वाहुः–अस्मिन्पक्षे दलोपरि योनिः स्यात् तच्चायुक्तं। "नार्पयेत्कुण्डकोणेषु योनिं तां तन्त्रवित्तमः" इति शारदातिलके निषेधात्। तस्माच्चतुर्दिक्ष्विति विदिक्ष्वित्यर्थः। अष्टदलपक्षे दिग्विदिगन्तरालेष्वष्टस्वष्टौ दलानीत्यर्थः। यद्यप्यस्मिन्पक्षे दलद्वयसंधिरूपः कोणो दिक्षु भवति तथापि बाह्यकोण एव निषिद्धो नतु मध्यस्थः। तस्य दलसंधिरूपत्वेन कोणत्वाभावात्। अतएव शास्त्रोक्तमार्गेत इत्युक्तमिति। अन्ये तु चतुर्दिक्ष्विति प्रत्यक्षविधिसत्त्वात् दलाग्रे योनिनिषेधस्याभावात् विधिस्पृष्टे निषेधानवकाशात् बीजं विना लक्षणया चतुर्दिक्ष्विति विदिक्परत्वेन व्याख्यानस्य मानाभावात् शास्त्रोक्तमार्गेत इत्यस्य चतुर्दिक्ष्विति प्रत्यक्षशास्त्रेण दिक्परत्वमेव वक्तुं शक्यत्वाच्च। अन्तःक्ष्मावृत्तस्य दिग्विदिगन्तरालकाष्टौभागान्कृत्वाऽवधिवलयस्य प्राचीत एवाष्टौ कार्याः। तथाच प्रागादिदिगग्राणि पत्राणि संभवन्ति। तत्र पश्चिमदलाग्रे एव योनिः कर्तव्येति सिद्धम्।

एतदुक्तं कुण्डकल्पलतायाम्–"चतुर्दिग्गताग्राणि चत्वारि अष्टदिग्गताग्राण्यष्टौ वा दलानि रचयेत्। तदुक्तं सिद्धान्तशेखरे–"चतुर्दिक्षु चतुःपत्रं॰ मार्गेत इति। यत्तु कश्चित्सांप्रदायिकत्वाभिमानी दलाग्रे कोणत्वबुद्ध्यानार्पये॰ दिति" शारदावाक्यावष्टम्भेन चतुर्दिक्ष्विति विदिक्परत्वेन व्याख्यायाष्टदलं

पद्मपत्राणि दिगन्तरालेष्वष्टौ भवन्तीत्युक्त्वा दलद्वयसंधिरूपः कोणो दिक्षु भवतीति स्वयमेव पूर्वपक्षयित्वा बाह्यकोणस्यैव निषेधो न मध्यमस्य दलद्वयसंधिरूपत्वेन कोणत्वाभावादिति समाधानमुक्तवान् तदज्ञानविजृम्भितं । दलाग्राणां कोणत्वे पद्मस्यैवाष्टास्रत्वापत्तेः पृथगष्टास्राभिधानं व्यर्थं स्यात् । वचनाभावे दलाग्रस्यानिषिद्धत्वं दलसंधेश्चान्तस्थत्वं कोणाभाववत्त्वं वदता स्वस्य परमसांप्रदायिकत्वमाविष्कृतमिति । तत्र क्ष्मावृत्तादग्रवृत्तपर्यन्तं तत्सूत्रस्यैवं त्रिकोणस्य श्रुतिरित्युच्यते तच्छ्रुतेर्यद्दलं अर्धं तत्परिमितसूत्रं द्विगुणं कृत्वा उभयतः पाशौ कृत्वा श्रुत्यर्धपरिमितदेशे एकं शङ्कुं निखाय श्रुतिप्रान्तद्वये शङ्कुद्वयं निखाय तत्र मध्यावधि वृत्तप्रान्तशङ्कुद्वये सूत्रपाशौ प्रतिमुच्य सूत्रस्य मध्यचिह्नं त्रिकोणाद्बहिराकृष्य यत्र मध्यचिह्नं लग्नं भवति तत्रैव तद्धृत्वा एकं पाशं सशङ्कुं गृहीत्वा तद्देशमारभ्यापरशङ्कुपर्यन्तं भ्रामणेन एकं धनुर्बहिर्ज्याकमुत्पन्नं भवति । एवं मध्यक्ष्मावृत्तप्रान्तशङ्कुद्वये पाशौ प्रतिमुच्य मध्यचिह्नं त्रिकोणमध्यभागे आकृष्य यत्र लग्नं भवति तत्रैव धृत्वा पूर्ववदेकं पाशं सशङ्कुं गृहीत्वाऽपरशङ्कुपर्यन्तं भ्रामणेनान्तर्ज्याकं धनुरुत्पद्यते । एवं प्रतिश्रुतौ द्वे द्वे धनुषी कर्तव्ये । तेनाश्वत्थपत्राकाराणि दलान्युत्पन्नानि भवन्ति । एवं कृतेऽष्टपत्राब्जकुण्डं भवति ।

मतिमन्निति संबुद्ध्यन्तपदेनोक्तप्रकारेणैव कर्तव्यमिति विधिर्नास्ति किंतु युक्त्यन्तरेण साधनान्तरेण च यथाऽऽकारः संपद्यते तथा कार्यमिति सूचयति । तदर्थं युक्तिरुच्यते—"सूत्रस्याधो विलीयन्ते यूकालिक्षादयः शतमि"ति न्यायेनाल्पान्तरस्यादोषावहत्वात् यवत्रयसहितएकत्रिंशदङ्गुलकमवधिवलयं कृत्वा तस्मिन् चतुरस्रद्वयं दिग्विदिगन्तरालकोणकं कार्यं । तेनाष्टौ त्र्यस्राण्युत्पद्यन्ते । प्रतित्र्यस्रं बाह्वर्धपरिमितं कर्कटं कृत्वा तस्यैकप्रान्तावधिवृत्तगतत्रिकोणबाहुप्रान्ते धृत्वाऽपरप्रान्तेन त्रिकोणाद्बहिर्वृत्तार्धं कृत्वा स प्रान्तो बाहुमध्यचिह्ने कृत्वाऽपरप्रान्तेन कृतवृत्तार्धोपरि द्वितीयवृत्तार्धं कृत्वा तेन मत्स्योत्पत्तिर्भवति । तादृशमत्स्योपरि कर्कटैकप्रान्तं कृत्वाऽपरप्रान्तेनावधिवलयप्रान्तादारभ्य बाहुमध्यचिह्नपर्यन्तं धनुः कृत्वा तद्बहिर्ज्याकं धनुर्भवति । एवमेकं कर्कटैकप्रान्तं बाहुद्वितीयप्रान्ते कृत्वा एकं बाहुमध्यचिह्ने कृत्वोक्तरीत्या त्रिकोणमध्ये मत्स्योत्पत्तिं कृत्वा तादृशमत्स्ये कर्कटैकप्रान्तं कृत्वाऽप-

स्रप्रान्तेनान्तर्ज्याकं धनुरुत्पादयेत्। एवं प्रतिबाहौ द्वे द्वे धनुषी कर्तव्ये। तेन पूर्वोक्तमेवाब्जकुण्डं भवति। नचैवं लाघवेन सिध्यति चेत् किमर्थं गौरवयुक्तिर्लिखितेति वाच्यम्। शुल्बप्रकरणे सर्वत्र सूत्रस्यैव दृष्टत्वात्कर्कटस्याभावाच्च। ननु अवधिवलयेनैव सर्वं सिद्धं चेत् तस्यैव व्यासः कुतो नोक्त इति चेन्न। शताङ्गुलपरिमितव्यासे वृत्ते वृत्तफलस्य पद्मफलस्य चैक्यात् लाघवाच्च। तथाहि–यद्ययमेव व्यास उच्येत तर्हि-अस्यापि इयन्तो भागाः कार्याः। तत्र द्वाभ्यां कर्णिका। एवं केसरादिसर्वमप्यवश्यतया वक्तव्यत्वाल्लाघवं किमपि नास्ति। न च अस्तु तर्हि समानत्वमिति वाच्यम्। व्यासोत्पत्तौ सर्वव्यासकथनावसरे च पृथगङ्कोक्त्यादिगौरवात्। वस्तुतस्तु नामसदृशाकारस्य क्षेत्रफलस्य च सर्वत्रापेक्षा नतु यस्माद्ग्रन्थाच्चतुरस्रादिकं कृतं तस्मादेव पद्मादि कर्तव्यमिति नियमः। अथवा यस्मात्पद्मादि कृतं तस्मादेव चतुरस्रादिकार्यमित्यपि, किंतु नामाकारसदृशस्य क्षेत्रफलस्य च नियमादेकस्मादेकमपरस्मादेकं कृतमपि दोषो नास्तीति सिद्धम्। अतएव कुण्डसिद्ध्यादेरष्टास्रादिकं कुण्डार्कादेः पद्मादिकं याज्ञिकाः कुर्वन्ति। न च कुण्डार्कपद्मस्याश्वत्थदलाकारता संपन्ना भवतीति कथं नामसदृशाकारो भवतीति वाच्यम्। एतादृशः पत्राग्राकारः पद्मपत्रविशेषे सत्त्वादिति संक्षेपः। मण्डलस्याष्टांशकरणे लाघवयुक्तिमाह—"प्राचीतोऽर्धेन सूत्रेण षड्धा मण्डलमाभजेत्। द्वितीयस्य तृतीयस्य भ्रमात्कार्यौ तु मत्स्यकौ॥ ताभ्यां समानसूत्रेण दक्षिणोदक्स्फुटा भवेत्। चतुर्थं पश्चिमादिक्स्यादेवं स्याद्दिक्चतुष्टयम्। अन्योन्यदिक्सूत्रेण साध्यं विदिक्चतुष्टयम्। एवं षोडशभागादिकरणं तु यथायथम्" इति॥ ७॥

नौका—अथ पद्मकुण्डोत्पत्तिमाह–वृत्तव्यास इति। वृत्तेन। अत्रैकहस्तादिवृत्तव्यासाद्वृत्तकुण्डव्यासेन तुल्याः पूर्वमेवोक्ताः। इष्टव्यासार्धमितेन कर्कटेन वृत्तं निष्पाद्य तद्वृत्तव्यासे नवांशे नवधा विभक्ते सति द्विचतुरिभलवैः क्रमात् कर्णिकाकेसरान्तःपत्रक्ष्मामण्डलानि स्युरित्यन्वयः। अन्तर्द्वाभ्यां लवाभ्यां भागाभ्यामित्यर्थः। कर्णिकामण्डलं ततो बहिः कर्णिकाकेसरभागयुतैरष्टभिर्भागैः अन्तःपत्रक्ष्मामण्डलं तत् सतत्त्वांशपङ्क्त्या स्यात् तत्त्वांशसहितया पङ्क्त्या सतत्त्वांशपङ्क्त्या। अत्र पङ्क्तिशब्देन कर्णिकाकेसरान्तःपत्रक्ष्माभागसहिता दशभागा उच्यन्ते। तत्र प्रकृतिवृत्तान्तःस्था नव वृत्ताद्बहिरेक

आगन्तुकः एवं दश । तत्त्वशब्देन पञ्चविंशतिः । तथाचान्तःपत्रक्ष्मावृत्ताद्बहिः स्वपञ्चविंशतितमांशोपेतपङ्क्तिलक्ष्य पूर्वोक्तभागदशकमानेन चरमवलयं स्यादित्यर्थः । तस्य व्यासः लिक्षापञ्चकयूकाद्वययवद्वयाधिकैकत्रिंशदङ्गुलात्मको भवति ३१।२।२।५। व्यस्राण्यष्टौ अष्टौ व्यस्राणि यत्रोत्तरार्धस्वरूपाणि बहिः, अन्तःपत्रक्ष्मावृत्ताद्बहिः । नत्वन्तश्चरमवृत्ताभ्यन्तरे कर्तव्यानीति शेषः । तथाचान्तःपत्रक्ष्मामण्डलं मुखपुच्छपार्श्वेषु अन्यतमतोऽष्टधा विभज्याष्टौ चिह्नानि कृत्वाऽव्यवहितचिह्नद्वयात् कर्णसूत्रं तस्य दलमर्धं तदेव गुणौ ज्ये ययोस्तादृशौ चापौ धनुषी द्विघ्नमौर्वीभ्रमेण मौर्वीरूपकर्णार्धद्विगुणितसूत्रभ्रमेणान्तर्बहिर्ज्यौ एकमभ्यन्तरस्थमन्तर्ज्यं अन्यद्बहिस्थं बहिर्ज्यं च इत्यनेन प्रकारेणाष्टपत्राब्जं कुण्डं हे मतिमन् कुरु । तथाहि—पत्रार्धाष्टकोत्पत्तिपर्यन्ता क्रिया स्पष्टाऽस्ति । चापक्रिया तु कर्णं द्वेधा विभज्य कर्णार्धमानद्विगुणसूत्रस्यान्तौ अभ्यन्तरकर्णार्धान्तयोर्दृढं धृत्वा तत्सूत्रमध्यं पत्रगर्भे दृढमाकृष्य तत्र धृत्वा तत्सूत्रस्यैकमन्तं द्वितीयान्तपर्यन्तं भ्रामयेत् तदन्तर्ज्यं धनुः । एवं द्वितीयकर्णार्धे सूत्रमध्यं पत्राद्बहिराकृष्य प्राग्वद्भ्रामयेत् तद्बहिर्ज्यं धनुः । एवं द्वितीयकर्णेऽपि धनुर्द्वयं कर्तव्यं । ततश्च प्रतिपत्रं धनुश्चतुष्कं जायते सूत्रापेक्षया कर्कटेन कृतिः सुकरा । तत्र हि पत्रकर्णं द्वेधा विभज्यादौ अन्तःकर्णार्धे तन्मितं कर्कटं कृत्वा तस्यैकाग्रं कर्णार्धान्तौ प्रति तुल्यं यथा भवति तथान्याग्रं पत्रगर्भे संस्थाप्य तदितराग्रं तत्कर्णार्धस्यैकान्ताद्द्वितीयान्तपर्यन्तं भ्रामयेत् । तदन्तर्ज्यं धनुः । तथैवोत्तरकर्णार्धे तत्परिमितकर्कटस्यैकाग्रं तत्कर्णार्धान्तौ प्रति तुल्यं यथा स्यात्तथान्याग्रं पत्राद्बहिः संस्थाप्य तदितराग्रं प्राग्वदेकान्ताद्द्वितीयान्तपर्यन्तं भ्रामयेत् तद्बहिर्ज्यं धनुः । एवं धनुर्द्वयं द्वितीयकर्णेपि कृत्वा एकं दलं साधयेत् । एवमन्यान्यपि साध्यानि तेनाश्वत्थदलसदृशानि पत्राणामुत्तरार्धानि भवन्ति ॥ ७ ॥

मिताक्षरा—अथ वृत्तेनैकेन पद्मकुण्डमाह—वृत्तव्यास इति । वृत्तव्यासे नवांशे सति द्वाभ्यां नवमांशाभ्यां कर्णिकावृत्तं । चतुर्भिर्नवमांशैः केसरवृत्तं । अष्टभिर्नवमांशैरन्तःपत्रक्ष्मावृत्तं । पत्रस्यान्तःक्ष्मानाम पत्रमध्यभूमिरित्यर्थः । अवधिवलयं पत्राग्रावधिवृत्तं सतत्त्वांशपङ्क्त्या कार्यं । कोऽर्थः । उक्तनवमांशः व्यासे योजितव्यः । युक्तस्य तत्त्वांशः तस्मिन्नेव युक्तः कार्यः । तेनावधिवृत्तं कार्यं । अथवा—उक्तनवांशः दशभिर्गुणितव्यः । गुणितस्य यः

पञ्चविंशत्यंशः तेन युक्तो गुणितः कार्यः । तेनार्धेन यद्वृत्तं तदेवावधिवलयमित्युच्यते । तत्तु लिक्षाद्वययूकात्रययवद्वयसहित एकत्रिंशदङ्गुलं ३१।२।३।२ भवति । यथोदाहरणं—व्यासः २७।६ अस्य नवमांशः ३।०।०।५ व्यासे युक्तः ३०।०।६।२ अस्य तत्त्वांशः १।१।५ पुनस्तस्मिन्नेव युक्तः ३१।२।३।२। अथवा—नवांशः ३।०।०।५ दशगुणः ३०।०।६।२ स्वीयतत्त्वांशेन युक्तः ३१। २।३।२ जातोऽयमवधिवृत्तव्यासः । अत्र तृतीयवृत्तं षण्णवमांशात्मकं नोक्तं तस्योपयोगाभावेपि प्रमाणात्कर्तव्यमेव । तदुक्तं सिद्धान्तशेखरे—"चतुरस्रेऽष्टधा भक्ते कुर्याद्वृत्तचतुष्टयम् । कर्णिका केसरे वृत्ते तृतीये पञ्चसंचयः ॥ दलाग्राणि चतुर्थेस्युर्वृत्तान्येवं प्रकल्पयेत् । कोष्ठयुग्मस्य मध्येपि भ्रमयन्त्रं निधाय च । भ्रमणात्संधिमारभ्य पञ्चाग्रं बाह्यतो भवे"दिति ॥ कामिकेपि—"चतुरस्रेऽष्टधा भक्ते कर्णिका स्याद्विभागतः । तद्बहिस्त्वेकभागेन केसराणि प्रकल्पयेत् ॥ तृतीये दलमध्यानि चतुर्थे दलकोटयः । चतुरस्राद्बहिः कुर्याद्दलाग्राण्यपि यत्नत" इति । एतानि अवधिवलयान्तानि वलयानि कृत्वा अन्तःपत्रक्ष्मावृत्तस्याष्टौ भागाः प्राचीतः कार्याः । एवमवधिवृत्तस्य दिग्विदिगन्तरालेऽष्टौ चिह्नानि कार्याणि । तत्रान्तःपत्रक्ष्मावृत्तस्य प्राचीगतचिह्नमारभ्यावधिवलयस्य प्राच्याग्नेयमध्यचिह्नपर्यन्तमेकं सूत्रं देयं । एवमाग्नेयगतचिह्नमारभ्यावधिवलयचिह्नपर्यन्तं द्वितीयसूत्रं । एवं कृते त्र्यस्रमुत्पन्नं भवति । एवमाग्नेयदक्षिणचिह्नाभ्यां द्वितीयं । दक्षिणनिर्ऋतिचिह्नाभ्यां तृतीयं । निर्ऋतिपश्चिमचिह्नाभ्यां चतुर्थं । पश्चिमवायव्यचिह्नाभ्यां पञ्चमं । वायव्योत्तरचिह्नाभ्यां षष्ठं । उत्तरेशानचिह्नाभ्यां सप्तमं । ईशानपूर्वचिह्नाभ्यामष्टममिति । एवमष्टत्रिकोणानि बहिरुत्पद्यन्ते । तत्र क्ष्मावृत्तादग्रसूत्रपर्यन्तं यत्सूत्रं तस्यैव त्रिकोणस्य श्रुतिरित्युच्यते । तच्छ्रुतेर्यद्दलं अर्धं तत्परिमितसूत्रं द्विगुणं कृत्वा उभयतः पाशौ कृत्वा श्रुत्यर्धपरिमितदेशे एकं शङ्कुं निखाय श्रुतिप्रान्तद्वये शङ्कुं निखाय तत्र मध्यवृत्तावधि वृत्तप्रान्तशङ्कुद्वये पाशौ प्रतिमुच्य सूत्रस्य मध्यचिह्नं त्रिकोणाद्बहिराकृष्य मध्यचिह्नं लग्नं भवति तत्रैव तद्धृत्वा एकं पाशं सशङ्कुं गृहीत्वा तद्देशमारभ्यापरशङ्कुपर्यन्तं भ्रामणेन एकं धनुर्बहिर्ज्याकं भवति । एवं मध्यक्ष्मावृत्तप्रान्तशङ्कुद्वये पाशौ प्रतिमुच्य मध्यचिह्नत्रिकोणमध्यभागे आकृष्य यत्र लग्नं भवति तत्रैव धृत्वा पूर्ववदेकं पाशं सशङ्कुं गृही-

त्वाऽपरशङ्कुभ्रामणेन बहिर्ज्यांकं धनुरुत्पद्यते । एवं प्रतिश्रुतौ द्वे द्वे धनुषी कर्तव्ये । तेनाष्टपत्राब्जं कुण्डं भवतीति । मतिमन्निति संबुद्ध्यन्तपदेन उक्तप्रकारेणैव कर्तव्यमिति विधिर्नास्ति किंतु युक्त्यन्तरेण साधनान्तरेण च यथाऽऽकारः संपद्यते तथा कार्यमिति सूचयति । तदर्थं श्रीमत्तातचरणैः कुण्डार्कपद्मिन्यां युक्त्यन्तरमुक्तं तद्यथा—उक्तावधिवलयव्यासेन वृत्तं कृत्वा तस्मिन् चतुरस्रद्वयं दिग्विदिगन्तरालकोणकं कार्यं । तेनाष्टौ त्र्यस्राण्युत्पद्यन्ते । प्रतित्र्यस्रं बाहूर्ध्वपरिमितं कर्कटं कृत्वा तस्यैकप्रान्तमवधिवृत्तगतत्रिकोणबाहुप्रान्ते धृत्वाऽपरप्रान्तेन त्रिकोणाद्बहिर्वृत्तार्धं कृत्वा स प्रान्तो बाहुमध्यचिह्ने धृत्वाऽपरप्रान्तेन कृतवृत्तार्धोपरि द्वितीयवृत्तार्धं कृत्वा तेन मत्स्योत्पत्तिर्भवति । तादृशमत्स्योपरि कर्कटैकप्रान्तं कृत्वाऽपरप्रान्तेनावधिवलयप्रान्तादारभ्य बाहुमध्यचिह्नपर्यन्तं धनुः कृत्वा तद्बहिर्ज्यांकं धनुर्भवति । एवमेकं कर्कटैकप्रान्तं बाहुद्वितीयप्रान्ते कृत्वा एकं बाहुमध्यचिह्ने कृत्वा उक्तरीत्या त्रिकोणमध्ये मत्स्योत्पत्तिं कृत्वा तादृशमत्स्ये कर्कटकप्रान्तं कृत्वाऽपरप्रान्तेनान्तर्ज्यांकं धनुरुत्पादयेत् । एवं प्रतिबाहौ द्वे द्वे धनुषी कर्तव्ये । तेन पूर्वोक्तमेवाब्जं कुण्डं भवतीति । अत्रापि सुविस्तृतमुक्तं पितृचरणैः कुण्डार्कपद्मिन्यां तत्ततोवगन्तव्यं । नचात्र पद्मपत्राकारः कथं संपद्यत इति शङ्क्यं । एतादृशः पद्मपत्राकारः पद्मविशेषे सत्त्वादिति कुण्डार्कपद्मिन्यामुक्तत्वादिति ॥ ७ ॥

सुप्रभा—एवं नवविधकुण्डकरणप्रक्रियामुक्त्वाऽवशिष्टस्य पद्मकुण्डस्य प्रक्रियामाहैकेन श्लोकेन-वृत्तव्यास इति । "वृत्तेऽब्जे वलयोऽधिभै"-रित्यादिनोक्ते २७।०।५ वृत्तव्यासे नवांशा विभागा यस्य तादृशे कृते सति । नवधा विभक्ते सतीत्यर्थः । स च नवमांशः ३।०।५ एवंप्रमाणका नव नवमांशा भवन्ति । द्विचतुरिभलवैः कर्णिकाकेसरान्तःपत्रक्ष्मामण्डलानि । लवमण्डलशब्दौ "द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यते" इति न्यायात्प्रत्येकमन्वितः । तत्रायमर्थः । क्रमेण पूर्वपूर्वाद्बहिर्द्वाभ्यां नवमांशाभ्यां कर्णिकावृत्त-चतुर्भिर्नवमांशैः केसरवृत्त-अष्टभिर्नवमांशैः अन्तःपत्रक्ष्मामण्डलं । पत्राणां मध्यभूमिप्रदर्शकं वलयमित्यर्थः । स्युः । ततोपि बहिः तत्त्वांशेन स्वकीयपञ्चविंशतितमांशेन सह वर्तमानया पङ्क्त्या प्रकृतत्वात्प्रागुक्तनवमांशदशकेन स्वीयपञ्चविंशतितमांशोपेतैर्नवमांशात्मकैर्दशभिर्भागैरित्यर्थः । अव-

धिवलयं पत्राग्राणां मर्यादाप्रदर्शकं वृत्तं स्यात्। यथा—व्यासः २७।०।५ अस्य नवमांशः ३।०।०।५ व्यासे मिलितः ३०।०।०।५ अस्य पञ्चविंशतितमोऽशः १।१।५ पुनस्तस्मिन्नेव संमिलितः ३१।२।३।२ जातोऽयमवधिवृत्तव्यासः। बहिरन्तःक्ष्मावृत्ताद्बहिः नत्ववधिवृत्तात्। अन्यथा क्षेत्रफलाधिक्याद्यनेकदोषप्रसक्तिः स्यात्। अष्टौ अष्टसंख्याकानि त्र्यस्राणि त्रिकोणानि संपाद्यानीति शेषः। तद्यथा—अन्तःपत्रक्ष्मावृत्तस्य दिक्षु विदिक्षु पुच्छमुखपार्श्वेष्वन्यतमतोऽष्टौ समान्विभागान्कृत्वा तेषु चिह्नानि कुर्यात्। एवमवधिवृत्तस्यापि दिग्विदिगन्तराले मुखपुच्छपार्श्वानि कल्पयित्वा तेष्वन्यतमतोऽष्टौ समान्विभागान्कृत्वा तेषु चिह्नानि कुर्यात्। तत्रावधिवृत्तस्थमुखचिह्नादारभ्य पत्रक्ष्मावृत्तस्थोत्तरांसपर्यन्तमेकं सूत्रं। अपरं पत्रक्ष्मावृत्तमुखचिह्नपर्यन्तं सूत्रं। एवमेकं त्र्यस्रं। अवधिवृत्तस्थदक्षांसचिह्नादारभ्य पत्रक्ष्मावृत्तमुखपर्यन्तमेकं सूत्रं। अपरं पत्रक्ष्मावृत्तदक्षांसचिह्नपर्यन्तं सूत्रं। एवं द्वितीयं त्र्यस्रं। अवधिवृत्तदक्षपार्श्वादारभ्य पत्रक्ष्मादक्षांसपर्यन्तमेकं सूत्रं। अपरं दक्षपार्श्वपर्यन्तं सूत्रं। एवं तृतीयं त्र्यस्रं। अवधिवृत्तस्थदक्षश्रोणेरारभ्य पत्रक्ष्मावृत्तदक्षपार्श्वपर्यन्तमेकं सूत्रं। अपरं पत्रक्ष्मावृत्तदक्षश्रोणिपर्यन्तं सूत्रं। एवं चतुर्थं त्र्यस्रं। अवधिवृत्तस्थपुच्छादारभ्य पत्रक्ष्मावृत्तदक्षश्रोणिपर्यन्तमेकं सूत्रं। अपरं पत्रक्ष्मावृत्तपुच्छपर्यन्तं सूत्रं। एवं पञ्चमं त्र्यस्रं। अवधिवृत्तस्थोत्तरश्रोणेरारभ्य पत्रक्ष्मावृत्तपुच्छपर्यन्तमेकं सूत्रं। अपरं पत्रक्ष्मावृत्तोत्तरांसपर्यन्तं सूत्रं। एवं षष्ठं त्र्यस्रं। अवधिवृत्तस्थोत्तरपार्श्वादारभ्य पत्रक्ष्मावृत्तोत्तरश्रोणिपर्यन्तमेकं सूत्रं। अपरं पत्रक्ष्मावृत्तोत्तरपार्श्वपर्यन्तं सूत्रं। एवं सप्तमं त्र्यस्रं। अवधिवृत्तस्थोत्तरांसादारभ्य पत्रक्ष्मावृत्तोत्तरपार्श्वपर्यन्तमेकं सूत्रं। अपरं पत्रक्ष्मावृत्तोत्तरांसपर्यन्तं सूत्रं। एवमष्टमं त्र्यस्रं। एवमष्टौ त्र्यस्राणि। अथवा अवधिवृत्ते दिग्विदिगन्तराले कल्पितमुखपार्श्वपुच्छपार्श्वमुखैरेकं चतुरस्रं। अपरं दक्षांसदक्षश्रोणिवामश्रोण्युत्तरांसदक्षांसैश्चतुरस्रं कृत्वा अष्टौ त्र्यस्राणि समुत्पादयेदिति। हे मतिमन्निति संबुद्ध्या सूचितः सुगमोपायः।

नन्वियं त्र्यस्राष्टकसाधनप्रक्रिया दिग्विदिक्तोपि सिध्येत् तत्पुनः किमिति दिग्विदिगन्तराले चिह्नप्रकल्पनादिप्रक्रियागौरवं। किंच तत्र तत्र मूलग्रन्थे दलानि दिक्षु विदिक्ष्वेवोक्तानि। तथाहि—"चतुर्दिक्षु चतुःपत्रं पद्माभं कुण्ड-

मीरितम् । अथवाऽष्टदलं पद्मं कुर्याच्छास्त्रोक्तमार्गतः ।” इति सिद्धान्तशेखरे । एतदनुसृत्यैव कुण्डकल्पलतायां “चतुर्दिग्गताग्राणि चत्वारि अष्टदिग्गताग्राण्यष्टौ वा दलानि रचयेत्” इति । इति चेत्सत्यं । परं त्वेवं कृते दलाग्रे योनिर्निपतेत् । तच्च न युक्तं । “नार्पयेत्कुण्डकोणेषु योनिं तां तन्त्रवित्तमः” इति शारदातिलके तन्निषेधात् । अतो दिक्ष्वित्यत्र लक्षणया चतुर्दिक्षु इत्यर्थो निष्पादनीयः । तेन दिग्विदिगन्तरालेऽष्टसु चिह्नेष्वष्टौ दलानि भवेयुः । नचास्मिन्पक्षे दलाग्ररूपः कोणनिपातो निवारितो भवति तथापि दलद्वयसंधिरूपः कोणो दिक्षु निपतत्येवेति वाच्यं । बाह्यकोणस्यैव निषिद्धत्वात् न तु मध्यगतस्य तस्य दलद्वयसंधिरूपत्वेन कोणत्वानभ्युपगमात् “कुर्याच्छास्त्रोक्तमार्गतः” इत्युक्तत्वादिति प्रागुक्तः पक्ष एव श्रेयानिति सांप्रदायिकाः प्रवदन्ति । अन्ये तु पद्मिनीकारादयो नेमं पक्षमाद्रियन्ते । यतस्तेऽमुं पक्षं खण्डितवन्तः । तथाहि कुण्डार्कपद्मिन्यां—अन्ये तु “चतुर्दिक्षु” इति प्रत्यक्षविधिसत्त्वाद्दलाग्रे योनिनिषेधस्याभावात् विधिस्पृष्टे निषेधानवकाशाद्बीजं विना लक्षणया चतुर्दिक्ष्विति विदिक्परत्वेन व्याख्यानस्य मानाभावात् शास्त्रोक्तमार्गत इत्यस्य चतुर्दिक्ष्विति प्रत्यक्षशास्त्रेण दिक्परत्वमेव वक्तुं शक्यत्वाच्च इत्यादि । यत्तु कश्चित्सांप्रदायिकाभिमानी दलाग्रे कोणत्वबुद्ध्या “नार्पयेदि”ति शारदावाक्यावष्टम्भेन चतुर्दिक्ष्विति विदिक्परत्वेन व्याख्यायाष्टदलपद्मपत्राणि दिगन्तरालेष्वष्टौ भवन्तीत्युक्त्वा दलद्वयसंधिरूपः कोणो दिक्षु भवतीति स्वयमेव पूर्वपक्षयित्वा बाह्यकोणस्यैव निषेधो न मध्यस्थस्य । तस्य दलद्वयसंधिरूपत्वेन कोणत्वाभावादिति समाधानमुक्तवान् तदज्ञानविजृम्भितं । दलाग्राणां कोणत्वे पद्मस्यैवाष्टास्रत्वापत्तेः पृथगष्टास्राभिधानं व्यर्थं स्यात् । वचनाभावे दलाग्रस्य निषिद्धत्वं दलसंधेश्चान्तस्थत्वं कोणाभाववत्त्वं च वदता स्वस्य परमसांप्रदायिकत्वमाविष्कृतमित्यनेन खण्डनं कृतं । वस्तुतस्तु नेदं खण्डनं युक्तियुक्तमुत्पश्यामः । नापि सांप्रदायिकमते बाह्यकोणत्वाङ्गीकारेण स्वपक्षसमर्थनं युक्तं । कथमित्युच्यते । तत्र प्रथमं खण्डनमालोचयामः । दिक्षु दलकरणे दलोपरि योनिनिपातस्यावश्यंभावित्वात्तया योन्या प्रत्यग्भवदलस्य तिरोधानात् । “अथवाऽष्टदलं पद्मं कुर्याच्छास्त्रोक्तमार्गतः” इत्युक्ताष्टदलपद्मस्य

संभवरूपतात्पर्यानुपपत्तिः स्यात् । यतः सप्तदलमेव पद्मं निष्पद्येत । उक्तलक्षणाबीजस्य सद्भावाच्चतुर्दिक्ष्वित्यस्य विदिक्परत्वेन व्याख्यानस्य सप्रमाणत्वात् प्रत्यक्षश्रुतविधेरत्रापि चारितार्थ्यात् "शास्त्रोक्तमार्गतः" इत्यस्य सामान्यांशस्य "अष्टदलं पद्मं" इति विशेषपरत्वमेवोचितं । यद्यपि दलाग्रे योनिनिषेधकं प्रत्यक्षं वचनं नास्ति तथापि "अथवाऽष्टदलं पद्मं", "मतिमन्नष्टपत्राब्जकुण्डं" इत्यस्य वैयर्थ्यान्यथानुपपत्त्या सोऽत्र कल्प्यते । किंचान्यत्र "अष्टदलं पद्मं" "अष्टपत्राब्जं कुण्डं" इत्यस्यैव "कुर्यात्" इति विधिसंस्पर्शित्वं नतु "चतुर्दिक्षु" इत्यस्य । एतदधिकरणस्य साक्षात्क्रियायामेवान्वयाद्विधौ च साध्यसाधनेतिकर्तव्यतानामेवान्वयनियमान्नात्र निषेधस्यानवकाशत्वप्रसंग इति संक्षेपः । तथा पद्मकुण्डस्य सर्वत्र मूलतो गृहीत्वाऽवसानपर्यन्तं वृत्तप्रक्रियासाध्यत्वात्कोणवत्त्वशङ्कैव न संभवति । किंच लोके शास्त्रे च पद्मपत्राग्रे वा परस्परं संलग्नपद्मपत्रद्वये स्थापिते तत्संधौ वा कोणत्वव्यवहारादर्शनात् । सारांशस्तु पद्मपत्राणामग्रेषु वा तत्संधिषु कोणत्वबुद्धिर्भ्रान्तिरेव । तेनात्र कुण्डे "नार्पयेत्कुण्डकोणेषु योनिं तां तन्त्रवित्तमः" इति निषेधस्यानुप्रवेशलेशोपि नास्ति तस्यान्यत्र षडस्राष्टास्रादौ चारितार्थ्यादिति संक्षेपः । इत्यलं चिरंतनानां सदुक्तिसमालोचनेन ।

प्रकृतमनुसरामः । तच्छ्रुतिदलगुणकौ तस्य त्र्यस्रस्य श्रुतेः कर्णरूपसूत्रस्य यद्दलेऽर्धे तद्रूपौ गुणकौ सूत्रे द्विघ्नाया द्विगुणिताया रज्वा भ्रमेण अन्तर्मध्ये ज्या यस्य तादृशे । बहिर्भागे ज्या गुणो यस्य तादृशे अन्तर्बहिर्ज्यौ चापौ धनुषी कर्तव्ये । अयमर्थः–त्र्यस्रस्य कर्णसूत्रं द्वेधा विभज्य श्रुतिप्रान्तद्वये श्रुत्यर्धदेशे च शङ्कुत्रयं निखाय श्रुत्यर्धपरिमितसूत्रं सपाशं द्विगुणं कृत्वा एकं पाशं श्रुत्यर्धदेशस्थशङ्कौ प्रतिमुच्यापरमेकस्मिन्च्छ्रुतिप्रान्तस्थशङ्कौ प्रतिमुच्य सूत्रस्य मध्यचिह्नं त्रिकोणाद्बहिराकृष्य यत्र मध्यचिह्नं संलग्नं भवेत्तत्रैव तद्धृत्वा एकं पाशं सशङ्कुं गृहीत्वा तद्देशमारभ्यापरशङ्कुपर्यन्तभ्रामणेनैकं धनुर्बहिर्ज्याकं समुत्पद्यते । एवं भ्रामितप्रान्तशङ्कुमधस्तनप्रान्तभागे स्थापयित्वा सूत्रमध्यचिह्नं त्र्यस्रमध्ये आकृष्य तत्रैव धृत्वा स्थापितशङ्कुं सपाशं गृहीत्वाऽपरशङ्कुपर्यन्तभ्रामणेनैकं धनुरन्तर्ज्याकं समुत्पद्यते । एवं प्रतिश्रुतौ

द्वे द्वे धनुषी कर्तव्ये । तेनाश्वत्थदलाकाराण्यष्टौ दलानि भवन्ति । एवं कृतेऽष्टपत्राब्जं कुण्डं भवति । मतिमन्निति संबुद्ध्यन्तपदप्रयोगेणैवं सूच्यते युक्त्यन्तरमपि समाश्रयणीयम् । तदर्थं युक्तिरुच्यते । त्र्यस्रस्य श्रुतिसूत्रं द्वेधा विभज्य प्रान्तद्वये विभागद्वयसंधिदेशे च चिह्नत्रयं कुर्यात् । श्रुत्यर्धपरिमितं कर्कटकं बध्वा श्रुतेरूर्ध्वप्रान्ते तस्यैकं प्रान्तं निधायापरप्रान्तेन त्रिकोणाद्बहिर्वलयार्धं कुर्यात् । एवं श्रुत्यर्धदेशे कर्कटकस्यैकं प्रान्तं निधायापरप्रान्तेन पूर्ववत्त्रिकोणाद्बहिः पूर्ववलयार्धोपरि द्वितीयं वलयार्धं कुर्यात् । एवं कृते मत्स्योत्पत्तिर्जायते । तस्मिन्मत्स्ये कर्कटकैकप्रान्तं निधायापरप्रान्तेन श्रुत्यूर्ध्वप्रान्तमारभ्य श्रुत्यर्धदेशचिह्नपर्यन्तं भ्रामयेत् । तेन बहिर्ज्याकमेकं धनुः संपद्यते । एवमेकं कर्कटकप्रान्तं श्रुत्यधस्तनप्रान्ते निधायापरप्रान्तेन त्रिकोणमध्ये वलयार्धं कुर्यात् । एवं श्रुत्यर्धदेशे कर्कटकस्यैकं प्रान्तं निधायापरप्रान्तेन पूर्ववत्त्रिकोणमध्ये पूर्ववलयार्धोपरि द्वितीयं वलयार्धं कुर्यात् । एवं कृते मत्स्योत्पत्तिर्जायते । तस्मिन्मत्स्ये कर्कटकैकप्रान्तं निधायापरप्रान्तेन श्रुत्यधस्तनप्रान्तमारभ्य श्रुत्यर्धदेशपर्यन्तं भ्रामयेत् । तेनैकमन्तर्ज्याकं धनुः समुत्पद्यते । एवं प्रतिश्रुतौ द्वे द्वे धनुषी कर्तव्ये । एवं करणेनापि पूर्वोक्तमेव पद्मकुण्डं भवति ॥ अथास्य पद्मकुण्डस्य कण्ठमेखलादिकरणप्रकारस्तदर्थं मामकीनः श्लोकः "उपांत्यं चांतिमं व्यासं कण्ठादेर्द्विघ्नमानतः । संवर्ध्य मध्याद्द्वे वृत्ते ताभ्यां प्राग्वद्दलानि तु" इति । अस्यार्थः । उपांत्यो व्यास अन्तःपत्रक्ष्मावृत्तव्यासः । अन्तिमोव्यासः पत्राग्रावधिवृत्तव्यासः । कण्ठादेरित्यत्रादिना मेखलानां ग्रहणं । एतत्सर्वं तत्तन्मानं प्रत्येकं द्विघ्नं द्विगुणितं कृत्वेत्यर्थः । प्रत्येकं द्विगुणितेन तत्तन्मानेन उपांत्यमन्तिमं च व्यासं मध्यात्कुण्डमध्यात्संवर्ध्य उपान्त्यादन्तिमाच्च व्यासात्पुरतो द्वे द्वे वृत्ते कुर्यादित्यर्थः । ताभ्यां उपान्त्यान्तिमवृत्तव्यासाभ्यां प्राग्वत्पद्मकुण्डदलवत्कण्ठस्य मेखलानां च दलानि कुर्यादिति शेषः । नालप्रमाणं कुण्डरत्नावल्यां बोध्यं । कण्ठमेखलादलानां क्षेत्रफलं पद्मिन्यां बोध्यम् । विस्तरभिया नात्र संगृह्यते । अन्या अपि युक्तयो येषां येषां यदि सूच्येरंस्ता अपि योजनीया इति दिक् ॥ ७ ॥






**वेदास्रं योनिरर्धं वलयमनलदोर्वृत्तमङ्गास्रमब्जं**
**वस्वस्रं चेन्द्रदिक्तः प्रथमचरमयोरन्तराले युगास्रम् ।**
**वृत्तान्याद्यानि वा स्युर्नव विदिशकृते पञ्च वा स्युर्यदि स्या-**
**देकं कुण्डं प्रतीच्यां पुरहरदिशि वा तानि वेद्याः पदान्ते ॥८॥**

मरीचिका—अथैषां कुण्डानां स्थानान्याह—वेद्याः पादमात्राद्देशाद्बहिर्मेखला यथा पतन्ति तथा कुण्डानि कार्याणि । तत्र प्राच्यां चतुरस्रं । आग्नेय्यां योनिकुण्डं । दक्षिणतोऽर्धचन्द्राभं । नैर्ऋत्यां त्र्यस्रं । प्रतीच्यां वृत्तं । वायव्यां षडस्रं । उदीच्यां पद्माकारं । ईशान्यामष्टास्रं । चतुरस्राष्टास्रयोरन्तराले नवमं चतुरस्रमेव । एतानि नव कुण्डानि वृत्तान्येव चतुरस्राण्येव वा कर्तव्यानि । यदा तु पञ्चैव कुण्डानि क्रियन्ते तदा विदिशकृते कोणकुण्डानि न कर्तव्यानीत्यर्थः । यदात्वेकमेव क्रियते तदा प्रतीच्यामेव । ईशान्यां वा कार्यं । रामवाजपेय्यां तु सर्वेषां कामसंयोग उक्तः । "चतुरस्रेऽखिलसिद्धिर्योनौ पुत्राः शुभं दलेन्द्वाभे । त्र्यस्त्रिण्यरिक्षयो वृत्ते शांतिः षट्कोणके मृतिच्छेदः । पद्मे वृष्टिररोगोऽष्टकोणके कुण्डयुग्ममन्यच्च । अभिचारकर्मभूतोत्सादे हयपञ्चकोणमुद्दिष्टं" इति ॥

दीधितिः—अथैषां कुण्डानां क्रमेण स्थानानि नवकुण्डीपक्षं पञ्चकुण्डीपक्षमेककुण्डीपक्षं तत्स्थानानि चाह–वेदास्रं योनिरर्धमिति । प्राच्यां चतुरस्रं । आग्नेय्यां योनिकुण्डं । दक्षिणेऽर्धचन्द्राभं । नैर्ऋत्यां त्र्यस्रं । प्रतीच्यां वृत्तं । वायव्यां षडस्रं । उदीच्यां पद्माकारं । ईशान्यामष्टास्रं । चतुर-

स्राष्टास्रयोरन्तराले नवमं चतुरस्रमेव। एतानि नवान्यपि कुण्डानि वृत्तान्येव वा चतुरस्राण्येव वा कर्तव्यानि। यदा तु पञ्चैव कुण्डानि क्रियन्ते तदा विदिशऋते कोणकुण्डानि न कर्तव्यानीत्यर्थः। यदात्वेकमेव क्रियते तदा प्रतीच्यां ईशान्यां वा कुर्यात्। रामवाजपेय्यां तु सर्वेषां कामसंयोग उक्तः–"चतुरस्रेऽसिद्धिर्योनौ पुत्राः शुभं फलेऽन्द्धाभे। त्र्यस्रिण्यनरि च वृत्ते शान्तिः षट्कोणके मृतिच्छेदः। पद्मे वृष्टिररोगोऽष्टकोणके कुण्डयुग्ममन्यच्च। अभिचारकर्मभूतोत्सादे हयपञ्चकोणमुद्दिष्ट"मिति। शारदातिलके–"अष्टास्वाशासु रम्याणि कुण्डान्येतान्यनुक्रमात्। चतुरस्रं योनिरर्धचन्द्रं त्र्यस्रं च वर्तुलम्। षडस्रं पङ्कजाकारमष्टास्रं तानि नामतः। आचार्यकुण्डं मध्ये स्याद्गौरीपतिमहेन्द्रयो"रिति। नारदीये–"यत्रोपदिश्यते कुण्डचतुष्कं तत्र कर्मणि। वेदास्रमर्धचन्द्रं च वृत्तं पद्मनिभं तथा। कुर्यात्कुण्डानि चत्वारि प्राच्यादिषु विचक्षणः। पञ्चमं कारयेत्कुण्डमीशदिग्गोचरं द्विजे"ति। अत्र पञ्चमं कुण्डमीशानदिशि यदुक्तं तदाचार्यकुण्डं। अयं नारदोक्तः पक्षो मूलकारस्य नाभिप्रेतः "विदिशऋते पञ्च वा स्यु"रिति वचनात् शारदातिलकोक्तः पक्षो मूलकारेण गृहीतः। सोमशंभौ—"एकं वा शिवकाष्ठायां प्रतीच्यां कारयेद्बुध" इति। आचार्यैः पक्षान्तरमप्युक्तं यथा–"अथवा दिशि कुण्डमुत्तरस्यां प्रविदध्याच्चतुरस्रमेकमेवे"ति। अत्र प्रतीच्यामेकं कुण्डं यदि स्यादित्याद्युक्तं तत्र दशसहस्रादौ हवने द्वादशहस्तपर्यन्तमण्डपो नोपयुज्यते तत्रैशानदिशि आचार्योक्तोत्तरस्यां वा कुण्डं कार्यम्। एककुण्डपक्षो नवग्रहाधिकारे वसिष्ठसंहितायामप्युक्तः–"मध्यभागे मण्डपस्य कारयेच्चतुरस्रक"मिति तद्धोमप्रधाने कर्मणि नान्यत्र। तदुक्तं कुण्डदर्पणे–"होमप्रधानके कुण्डं चतुःस्तम्भान्तरे खनेत्। अन्यत्र मध्ये वेदिः स्या"दिति। अर्थादस्मिन्पक्षे वेदिः पूर्वस्यां ईशान्यां वा कार्या। शारदातिलके–"विप्राणां चतुरस्रं स्याद्राज्ञां वर्तुलमिष्यते। वैश्यानामर्धचन्द्राभं शूद्राणां त्र्यस्रमीरितम्। चतुरस्रं तु सर्वेषां केचिदिच्छन्ति तान्त्रिकाः"। पञ्चरात्रे–"सर्वाणि तानि वृत्तानि चतुरस्राणि वा सदा"। सनत्कुमारः–"स्त्रीणां कुण्डानि विप्रेन्द्र योन्याकाराणि कारये"-दिति। प्रतिष्ठाकर्मादौ ग्रहयज्ञोऽप्युक्तः। तदर्थं मात्स्ये–"मण्डपेशानभागे तु ग्रहवेदी करोन्मिता" इति वचनोक्ता ईशानभागे ग्रहवेदिरपि कार्या। साच त्रिवप्रा वितस्त्युच्छ्राया–"त्रिवप्रं चतुरस्रं च वितस्त्युच्छ्रायसंमितम्।

द्विरङ्गुलोच्छ्रितो वप्रः प्रथमः समुदाहृतः । अङ्गुल्युच्छ्रायसंयुक्तं वप्रद्वयमथोपरि । द्व्यङ्गुलस्तत्र विस्तारः सर्वेषां कथितो बुधै''रिति तत्रैवोक्तेः सप्रासादप्रतिष्ठाकर्मणि निर्ऋतिवरुणमध्ये हस्तमात्रां वास्तुवेदिं तत्प्रतीच्यां स्थण्डिलं च कुर्यात् प्रासादो वा । तानि वेद्याः पदान्ते इति । तानि सर्वाणि कुण्डानि समेखलानि पदान्तरे यथा भवन्ति तथा कर्तव्यानि । पदं तु पञ्चदशाङ्गुलमिति सर्वैरुक्तं । कैश्चित् त्रयोदशाङ्गुलमुक्तं । कात्यायनस्तु द्वादशाङ्गुलं पदमित्याह । ग्रन्थान्तरे—''कुण्डवेद्यन्तरं चैव सपादकरसंमित''मिति । वसिष्ठसंहितायां तु—''वेदीपादान्तरं त्यक्त्वा कुण्डानि नव पञ्च च'' इति । ''दशपादो विंशतिशताङ्गुलः पुरुषो द्वादशाङ्गुलं पदमिति कात्यायनवचने पादपर्यायः पदमिति दर्शनाद्वेदीचतुर्थांशः पदान्ते इति पदादपि लभ्यते तत्पक्षे वेद्या इति षष्ठ्यन्तपदमनुसंधेयं इत्युक्तानि पक्षान्तराणि तानि मण्डपानुसारेण ग्राह्याणि ॥ ८ ॥

पद्मिनी—अथ कुण्डनिवेशनस्थानान्याह—प्राचीतोऽष्टदिक्षु क्रमेण चतुरस्रं । योनिकुण्डं । अर्धचन्द्रं । त्र्यस्रं । वर्तुलं । षडस्रं । पद्मं । अष्टास्रं । अष्टास्रचतुरस्रयोरन्तराले एकं चतुरस्रं तदेव मुख्याचार्यकुण्डं । इमानि सर्वाणि कुण्डानि वृत्तानि वा कर्तव्यानि यद्वा चतुरस्राणि कर्तव्यानि । इति नवकुण्डपक्षे । विदिशश्रुते । पञ्च वा स्युः । आग्नेयनिर्ऋतिवायवीशानकोणकुण्डरहिते पञ्चसंख्याकानि । कुण्डानि स्वस्वदेशे एव कार्याणि । यद्येकमेव स्यात्तदा प्रतीच्यामुत्तरस्यां वेति देशविकल्पः । तच्च वृत्तं चतुरस्रं वा भवति । तदुक्तं क्रियासारे—''उत्तरस्यां भवेत्कुण्डं वृत्तं वा चतुरस्रक''मिति । एतानि वेदेः सकाशाद्वेदिचतुर्थांशपरिमितदेशमन्तरालमुक्त्वा तदन्तरालान्ते यथा मेखला भवन्ति तथा सर्वाणि कुण्डानि कार्याणीति । एतेषां फलानि नित्याषोडशिकार्णवतन्त्रे—''योनिकुण्डे भवेद्वाग्मी भगे चाकृतिरुत्तमा । वर्तुले तु भवेल्लक्ष्मीरर्धचन्द्रे त्रयं भवेत् । नवत्रिकोणकुण्डे तु खेचरत्वं प्रजायते । चतुरस्रे भवेच्छान्तिर्लक्ष्मीः पुष्टिररोगता । पद्माभे सर्वसंपत्तिरचिरादेव जायते । अष्टकोणे तु सुभगे समीहितफलं लभे''दिति ॥ शौनकपरिशिष्टे तु—पद्मकुण्डमपि सर्वकामनायामुक्तं—''सर्वकर्मसु विज्ञेयं कुण्डं पद्मनिभं तु यत् । चतुरस्रं

---

१ अयं पाठो न युक्तः किं तु ''तथा चाकृतिरुत्तमा'' इत्येव पाठः सम्यक् । २ अयमपि पाठो न युक्तः । नवास्रकुण्डस्याभावात् । किंतु ''षडस्रत्र्यस्र'' इत्येव पाठः साधुः ।

च सर्वत्र समं स्याद्विजयावहं" । "सर्वशान्तिकरं कुण्डं पद्माकारं विशेषत" इति कोटिहोमपद्धतौ ॥ ८ ॥

नौका—तदेवं दशविधकुण्डोत्पत्तिप्रकारमुक्त्वेमानि कुण्डानि कुत्र कुत्र कर्तव्यानीत्यपेक्षायां तद्विशेषस्थानान्याह–वेदास्रमिति वृत्तेन। वेद्याः वक्ष्यमाणमण्डपस्थवेद्याः पदान्ते पदमात्राद्देशाद्बहिः इन्द्रदिक्तः प्राक्प्रभृति प्रादक्षिण्येनेशानदिगन्तास्वष्टसु दिक्षु क्रमात्तानि वेदास्रादीन्यष्टकुण्डानि स्युः । प्राच्यां वेदास्रं चतुरस्रं । आग्नेय्यां योनिकुण्डं । दक्षिणस्यामर्धचन्द्राभं । नैर्ऋत्यां त्र्यस्रं । प्रतीच्यां वृत्तं । वायव्यां षडस्रं । उदीच्यां पद्माभं । ईशान्यामष्टास्रं चेत्यर्थः । प्रथमचरमयोश्चतुरस्राष्टास्रयोरन्तराले मध्यभागे युगास्रं चतुरस्रमेवाचार्यकुण्डं स्यात् । वेत्यथवा इमानि नवकुण्डानि वृत्तान्येव अथवा चतुरस्राण्येव वा स्युः । कर्तव्यानीति भावः । अयं नवकुण्डपक्षः । पञ्चकुण्डपक्षे तु विदिशऋते पञ्च वा स्युः विदिक्स्थकुण्डानि वर्जयित्वा साचार्यकुण्डदिक्स्थकुण्डानि पञ्चैव स्युः । यद्येकं कुण्डं एककुण्डपक्षस्तदा तदेकं कुण्डं प्रतीच्यां पुरहरदिशीशान्यां वा स्यात् । एषु नवकुण्डेषु प्राच्यादीनि त्रीणि उदङ्मुखानि तत्र दक्षिणस्था योनिः । नैर्ऋत्यादिपञ्चकुण्डानि प्राङ्मुखानि । तत्र प्रतीच्यां योनिः । नवममाचार्यकुण्डं तु प्राचीस्थचतुरस्रकुण्डवदेव । तथाच रामवाजपेयिनः–"प्रागादि कुण्डत्रयमुत्तराग्रं याम्यस्थयोनीतरपञ्चकुण्डी । प्रागग्रिका पश्चिमयोनिरत्र प्राक्कुण्डवत्स्यान्नवमं तु कुण्डम्" इति । अथवा–"प्राक्प्रोक्ते मण्डपे विद्वान्वेदिकाया बहिस्त्रिधा । क्षेत्रं विभज्य मध्यांशे पूर्वादिपरिकल्पयेत् । अष्टास्वाशासु कुण्डानि रम्याकाराण्यनुक्रमा"दिति शारदातिलकोक्तेरेकान्वयसकलकुण्डमध्यसाधनार्थं नवखण्डात्मकमण्डपमध्यखण्डस्य वेदिकाया बहिरष्टदिग्गताष्टखण्डमध्यांशपरिकल्पितपूर्वाद्यष्टदिक्कृतकुण्डमध्यचिह्नेषु तत्तद्व्यासवृत्तानि मानपुरःसराणि कुण्डानि कुर्यात् ॥ ८ ॥

मिताक्षरा—अथ कुण्डनिवेशनस्थानानि वृत्तेनाह-वेदास्रमिति । प्राचीतोऽष्टदिक्षु क्रमेण चतुरस्रं १ योनिकुण्डं २ अर्धचन्द्रं ३ त्र्यस्रं ४ वर्तुलं ५ षडस्रं ६ पद्मं ७ अष्टास्रं ८ अष्टास्रचतुरस्रयोरन्तराले मध्ये एकं चतुरस्रं तदेव मुख्याचार्यकुण्डं ९ । इमानि सर्वाणि कुण्डानि वृत्तानि कर्तव्यानि यद्वा चतुरस्राणि वा कार्याणि । इति नवकुण्डीपक्षः । विदिशऋते

पञ्च वा स्युः अग्निनिर्ऋतिवायवीशानकोणकुण्डरहितानि योनित्र्यस्रषडस्राष्टा-स्रिवर्ज्यानीति पञ्चकुण्डीपक्षः । यद्येकमेव कुण्डं स्यात्तदा प्रतीच्यामुत्तरस्यां वेति देशविकल्पः । तच्च वृत्तं वा चतुरस्रं वा भवतीत्यर्थः । तदुक्तं शारदा-तिलके–"अष्टास्वाशासु रम्याणि कुण्डान्येतान्यनुक्रमात् । चतुरस्रं योनिर-र्धचन्द्रं त्र्यस्रं च वर्तुलम् । षडस्रं पङ्कजाकारमष्टास्रं तानि नामतः । आचा-र्यकुण्डं मध्ये स्याद्गौरीपतिमहेन्द्रयोरिति । नारदीये–"यत्रोपदिश्यते कुण्ड-चतुष्कं तत्र कर्मणि । वेदास्रमर्धचन्द्रं च वृत्तं पद्मनिभं तथा । कुर्यात्कुण्डानि चत्वारि प्राच्यादिषु विचक्षणः । पञ्चमं कारयेत्कुण्डमीशदिग्गोचरं बुध" इति । सोमशंभौ–"एकं वा शिवकाष्ठायां प्रतीच्यां कारयेद्बुध" इति । "वेदीपादा-न्तरं त्यक्त्वा कुण्डानि नव पञ्च वे"ति । नारदीये–"कुण्डवेद्यन्तरं चैव सपा-दकरसंमित"मिति च । वर्णभेदेन कामनाभेदेन चापि कुण्डान्युक्तानि तानि वचनान्यत्र विस्तरभिया न लिखितानि अतोऽन्यतोवगन्तव्यानि ॥ ८ ॥

सुप्रभा—एवं दशविधकुण्डोत्पत्तिप्रक्रियामुक्त्वेदानीं नव कुण्डीपक्षं पञ्च-कुण्डीपक्षमेककुण्डीपक्षं पक्षत्रयेऽप्येषां कुण्डानां निवेशस्थानाद्याह— वेदास्रमिति । इन्द्रदिक्तः प्राचीं दिशमारभ्येशानदिक्पर्यन्तं क्रमेणाष्टासु दिक्षु चतुरस्राद्यष्टौ कुण्डानि नवममीशानप्राचीदिगन्तराले कर्तव्यमित्यर्थः । तद्यथा–प्राच्यां वेदास्रं नाम चतुरस्रं । आग्नेय्यां योनिकुण्डं । दक्षिणस्याम-र्धचन्द्रं । नैर्ऋत्यां वलयमनलदोर्नाम त्र्यस्रं । प्रतीच्यां वृत्तं । वायव्यां अङ्गास्रं षडस्रं । उदीच्यामब्जं पद्मं । ऐशान्यां वस्वस्रमष्टास्रं । प्रथमचरमयोश्चतुरस्राष्टा-स्रयोरन्तराले युगास्रं पुनश्चतुरस्रमेवेत्यर्थः । इमानि सर्वाणि कुण्डानि वृत्तानि वा आद्यानि चतुरस्राणि वा कर्तव्यानि स्युः इति तुल्यो विकल्पः । अत्र नवमं यत्कुण्डं तदाचार्यकुण्डमित्युच्यते । अयमुत्तमो नवकुण्डीपक्षः । विदिशऋते पञ्च वा स्युः वा अथवा नवकुण्डीपक्षं कर्तुमशक्तावनुकल्पोऽयं । विदिक्शब्देन तत्तत्कुण्डानि गृह्यन्ते । योनित्र्यस्रषडस्राष्टास्रकुण्डेभ्य ऋते पञ्च चतुरस्रमर्धचन्द्रवृत्तपद्मचतुरस्राणीति दिक्कुण्डानि स्युः । विदिक्कुण्डानि वर्ज-यित्वा आचार्यकुण्डसहितदिक्कुण्डान्येव कर्तव्यानीत्यर्थः । अत्र पक्षे आचार्य-कुण्डमीशानदिशि कर्तव्यमित्याह नारदः–"यत्रोपदिश्यते कुण्डचतुष्कं तत्र कर्मणि । वेदास्रमर्धचन्द्रं च वृत्तं पद्मनिभं तथा । कुर्यात्कुण्डानि चत्वारि प्राच्यादिषु विचक्षणः । पञ्चमं कारयेत्कुण्डमीशदिग्गोचरं द्विजे"ति । परमयं

नारदोक्तः पक्षो मूलकारानभिप्रेतः। यतस्तैः—"आचार्यकुण्डं मध्ये स्याद्गौरीपतिमहेन्द्रयो"रिति शारदातिलकोक्त्यनुसारेण "विदिशऋते पञ्च वा स्यु"रिति स्फुटं प्रत्यपादीति। अत्रापि पक्षे पञ्चापि कुण्डानि वृत्तानि वा चतुरस्राणि वा कर्तव्यानि। अयं मध्यमः पञ्चकुण्डीपक्षः। यदि एकं कुण्डं स्यात्। मध्यमपञ्चकुण्डीकरणाशक्त्येत्यर्थः। यद्येककुण्डीपक्षस्तदा तदेकं कुण्डं प्रतीच्यां पश्चिमदिशि वा पुरहरदिशि ऐशान्यां दिशि वा कर्तव्यं। अन्यैस्त्वपरं स्थानद्वयमुक्तं। तद्यथा क्रियासारे—"अथवा दिशि कुण्डमुत्तरस्यां प्रविदध्याच्चतुरस्रमेकमेवे"ति। वसिष्ठसंहितायां—"मध्यभागे मण्डपस्य कारयेच्चतुरस्रक"मिति। अत्रापि एककुण्डीपक्षे नवानां कुण्डानां मध्ये यत्किंचिदपि कुण्डं वृत्तं वा चतुरस्रं वा कार्यमिति। अयं कनिष्ठ एककुण्डीपक्षः। एतच्च पक्षत्रयं शक्त्यपेक्षयाऽनुष्ठेयं। रामवाजपेय्यां सर्वेषां कामसंयोग उक्तः—"चतुरस्रेऽखिलसिद्धिर्योनौ पुत्राः शुभं फलमिन्द्वाभे। त्र्यस्रिण्यरिच वृत्ते शान्तिः षट्कोणके मृतिच्छेदः। पद्मे वृष्टिररोगोष्टकोणके कुण्डयुग्ममन्यच्च। अभिचारकर्मभूतोत्सादे हयपञ्चकोणमुद्दिष्ट"मिति। शौनकपरिशिष्टे तु—पद्मकुण्डस्य सर्वकामनासंयोग उक्तः—"सर्वकर्मसु विज्ञेयं कुण्डं पद्मनिभं तु यत्। चतुरस्रं च सर्वत्र समं स्याद्विजयावहम्। सर्वशान्तिकरं पद्माकारं विशेषत"इति कोटिहोमपद्धतौ। तथा शारदातिलके सर्वेषां विप्रादिवर्णपरत्वं प्रतिपादितं—"विप्राणां चतुरस्रं स्याद्राज्ञां वर्तुलमिष्यते। वैश्यानामर्धचन्द्राभं शूद्राणां त्र्यस्रमीरितम्। चतुरस्रं तु सर्वेषां केचिदिच्छन्ति तान्त्रिकाः"इति। सनत्कुमारस्तु—"स्त्रीणां कुण्डानि विप्रेन्द्र योन्याकाराणि कारये"दिति। तानीमानि सर्वाणि कुण्डानि समेखलानि वेदितः पदान्तरं त्यक्त्वा कर्तव्यानि। सर्वेषां मते पदं पञ्चदशाङ्गुलं मतं। केषांचन मते पदं त्रयोदशाङ्गुलं मतम्। कात्यायनमते तु पदं द्वादशाङ्गुलं मतं "दशपादो विंशतिशताङ्गुलः पुरुषो द्वादशाङ्गुलं पद"मिति कात्यायनवचनात्। नारदीये तु सपादहस्तमात्रमन्तरमुक्तं। "कुण्डवेद्यन्तरं चैव सपादकरसंमित"मिति। अथवा पदशब्देन "पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु"इति कोषाद्वेदीचतुर्थांशो ग्राह्यः। अस्मिन्पक्षे वेद्या इति पदं षष्ठ्यन्तं वेदितव्यमिति। अथवा सर्वेषां कुण्डानामेकसूत्रगतमध्यसाधनार्थं मण्डपस्य दिग्विदिक्स्थखण्डमध्यतः कुण्डान्यारचयेत्। तदुक्तं शारदातिलके

"प्राक्प्रोक्ते मण्डपे विद्वान्वेदिकाया बहिस्त्रिधा । क्षेत्रं विभज्य मध्यांशे पूर्वादि परिकल्पयेत् । अष्टास्वाशासु कुण्डानि रम्याकाराण्यनुक्रमेत्" इति । अत्र नवकुण्डीपक्षे प्राच्यादीनि त्रीणि कुण्डान्युदङ्मुखानि । तत्र दक्षिणस्यां योनिः । नैर्ऋत्यादीनि पञ्चकुण्डानि प्राङ्मुखानि तत्र प्रतीच्यां योनिः । आचार्यकुण्डं तु प्राचीगतचतुरस्रवदेव । एवं पञ्चकुण्डीपक्षेऽपि समुन्नेयं । तदुक्तं रामवाजपेय्यां–"प्रागादिकुण्डत्रयमुत्तराग्रं याम्यस्थयोनीतरपञ्चकुण्डी । प्रागग्निका पश्चिमयोनिरत्र प्राक्कुण्डवत्स्यान्नवमं तु कुण्डम्" इति । यत्तु कैश्चित् पूर्वं १८३९ अङ्काग्निवसुभूमिते शाके कुण्डविमर्शनामकमेकमत्यल्पं प्रबन्धसंदर्भं निर्माय जपाङ्गहवनेषु गायत्रीपुरश्चरणादौ एकमेव कुण्डं विदध्यादिति निर्णीतं तत्तेषामेतद्विषयाज्ञानमोहविलसितम् । यतस्ते स्वपक्षसमर्थनाय कुण्डरत्नावलीश्लोकं तट्टीकां च मूलत्वेनोपवर्णयन्ति । तथाहि–"एकं कुण्डं शुभदं मध्ये शान्तौ जपाङ्गहवनेषु । आरभ्यैकादशिनीं लघुमहदतिरुद्रहवनविधा"विति । अत्रत्याटीका–"अथैककुण्डविधानमार्याछन्दसाह । एकमेव कुण्डं शान्तौ शान्तिकर्मणि । जपाङ्गहवनेषु । जपाङ्गमित्युपलक्षणं । वेदपारायणाङ्गहवन–नवशतसहस्रचण्ड्यादिहवनेषु । तथैकादशिनीमारभ्य लघुरुद्रमहारुद्रातिरुद्रहवनेषु । मध्ये मण्डपमध्ये कार्यं । तदेव शुभदमित्यर्थः । ग्रहशान्तिमुपक्रम्य वसिष्ठः–"कुण्डं तन्मध्यभागे तु कारयेच्चतुरस्रक"मिति । तथाच मण्डपे च मध्यभागे कुण्डं कुर्यादिति रुद्रपद्धत्यां भट्टनारायणचरणा इति । एवं च वसिष्ठमहर्षिवचसाऽभियुक्त श्रीभट्टनारायणानुमत्या च कुण्डरत्नावलीप्रबन्धकृता जपाङ्गहवने एकमेव कुण्डं स्पष्टतरमभिहितं इति कुण्डविमर्शग्रन्थस्थप्रधानतमोंशः । स न प्रमाणपदवीमारोहति । कुण्डरत्नावल्यामेवास्माच्छ्लोकात्पूर्वतने श्लोके "यदैककुण्डपक्षोस्ति तदा" इत्युपक्रमेणेदं सूचयते–यत्पूर्वं सर्वकर्मसाधारणोपयुक्तानां नवपञ्चैककुण्डीपक्षाणां मध्ये नवपञ्चकुण्डीपक्षावुक्तौ । इदानीं क्रमप्राप्त एककुण्डीपक्ष उच्यते इति । तत्र वसिष्ठसंहितायां "मध्यभागे मंडपस्य कारयेच्चतुरस्रकमि"ति । एतन्मूलकमेव कुण्डदर्पणे–'होमप्रधानके कुण्डे चतुःस्र-

कुंडस्थानानि.

| | | |
|---|---|---|
| अष्टास्रं | चतुरस्रं (चतुरस्रं) | योनिः |
| पद्मं | वेदिः | अर्धचंद्रं |
| षडस्रं | वृत्तं | त्र्यस्रं |

म्भान्तरे खनेत् । अन्यत्र मध्ये वेदिः स्याच्चतुःस्तम्भान्तरायता" इति । एतत्समानमेव कुण्डरत्नावलीश्लोकः—"एकं कुण्डं शुभदं" इति । तेन वसिष्ठवाक्यैकवाक्यतयोपक्रमानुराधेन यदा एककुण्डीपक्षाश्रयणेनैककुण्डकरणं तदा तत्कुण्डं जपाङ्गहवने मध्ये शुभदं भवेत् । मध्ये कार्यमित्यर्थः । नत्वन्यस्यामुदीच्यामीशान्यां प्रतीच्यां वा दिशि कार्यमिति भावः । देवप्रतिष्ठादौ यस्यां कस्यां दिशि स्थाने शुभदं भवेत् । अत्रेदमाकूतं—शुभदमित्यस्य मध्ये शुभदमित्यन्वयः । नतु एकं कुण्डं शुभदमिति यथाश्रुतोऽन्वयः । तदेव मध्ये मण्डपमध्ये कार्यम् तदेव शुभदमित्यर्थः । इत्यनया टीकया दर्शितः । कुण्डकरणस्थानविधाने तात्पर्यमेषां वचनानां नतु कुण्डविधाने । अन्यथा रुद्रकल्पद्रुम—रुद्रदर्पण—रुद्रपद्धति—कमलाकर—सम्राजभट्टकृतशतचंड्यादिपद्धति—गायत्रीपुरश्चरणादिपद्धतिषु प्रतिपादितनवपंचकुंडीविधानानर्थक्यापत्तेः । तथाच—निर्णयसिंधुटीकायां आश्विने नवरात्रनिरूपणे शतचण्डीप्रकरणे—"सर्वग्रन्थमतेन षोडशमहादानेषु रुद्रे तथा वापीकूपतडागपूजनविधौ स्यान्मण्डपोक्तो विधिः । वेदास्त्रादिसमस्तकुण्डसहितो देवप्रतिष्ठाविधौ आरामोत्सवलक्षहोमविधिषु प्रोक्तश्च चण्डीद्वये" इत्याद्यपि न संगच्छेत । अत एव श्रीकाश्यां विद्यमानानां कुण्डरत्नावलीतट्टीकाकाराणां रामचन्द्रदीक्षितजडे इत्येतेषां तनूद्भवानां पण्डित बाबुदीक्षितजडे इत्येतेषां दृष्टिपथं नीतोऽयं विषयः । तैस्तु सविवेचनपुरःसरं विषयमवधार्य "एकं कुण्डं शुभदं" इत्यस्य टीका "अथैककुण्डविधान"मित्यत्र "अथ कर्मपरत्वेनैककुण्डस्य मध्ये विधानं", "एकमेव कुण्डं" इत्यत्र "एकं चेत्कुंडं" इति विपरिणामं कृत्वा द्वितीयावृत्तौ मुद्रापिता । इत्यनेनापि किं सिद्धं भवतीति निर्मत्सरा गुणैकपक्षपातिनः सुधियो विभावयन्त्वित्यलं उपेक्ष्यविषयावगाहनेनेति ॥ ८ ॥

खातं कुण्डाभमानं जिनलवगलतः स्युर्बहिर्मेखलास्ता
नन्दाङ्गत्र्युच्चवेदत्रिकरविततयोऽशोच्चनाभिर्द्विपुष्टा ।
खाभा नाब्जेऽब्जभा वा वसु[१]रविलवकण्ठ्यासदैर्घ्या तु योनिः
पश्चान्नालाग्रगा नो भग उपरिभुवाऽग्रेण कुण्डं विशन्ती ॥९॥

---

१ क्वचित् 'वसुनवलवक' इति पाठो दृश्यते ।

**मरीचिका**—अथ सर्वकुण्डसाधारणखातादिकमाह—अत्र कुण्डशब्देन मेखलासंनिवेशः खातेन सहोच्यते । तत्र चतुरस्रादौ कुण्डे चतुरस्राद्याकारमेव खातं कर्तव्यं । तस्य च मानं कुण्डाद्यमेखलया सह कुण्डप्रमाणं । तथाहि चतुर्विंशत्यङ्गुले नवाङ्गुलाऽद्या मेखला । सापि खातात्परितः चतुर्विंशत्यंशादङ्गुलाद्बहिर्भवति । तत्राद्या मेखला नवाङ्गुलोच्चा चतुरङ्गुलविस्तारा । ततो बहिर्द्वितीया मेखला षडङ्गुलोच्चा त्र्यङ्गुलविस्तारा । तस्याः परितस्तृतीया त्र्यङ्गुलोच्चा द्व्यङ्गुलविस्तारा । नाभिस्तु—यावान्कुण्डस्य व्यासः चतुरस्रभुज इत्यर्थः । तस्य चतुर्विंशतिभागस्यैकेनांशेनोच्चा द्विपुष्टा । अतरा(?)द्वयपरिमितचतुरस्राकारा । साच यादृशः कुण्डस्याकारस्तादृशाकारैव कर्तव्येत्यपि केचित् । पद्मकुण्डे तु नाभिर्नास्ति तत्र तत्स्थाने कर्णिकाया एव सत्वात् । सर्वेषु कुण्डेषु पद्माकारैव वा । योनिस्त्वष्टाभिश्चतुर्विंशांशैर्विस्तृता नवभिर्दीर्घा लम्बा । तस्या आकारः पूर्ववत्कर्तव्यः । तस्या योनेः पश्चान्नालं सच्छिद्रं कर्तव्यं । नो भगे योनिकुण्डे योनिर्न कार्येत्यर्थः । उपरिभुवाऽग्रेण कुण्डं विशन्ती मेखलोपरि एकेन भागेनोच्चा । साप्यग्रे प्रवणा पश्चात्प्रागप्रभारा च युक्त्या कर्तव्या । अत्र सर्वत्र मानं कुण्डवृद्ध्यै नाभिकण्ठमेखलायोनिनालेषु वर्धनीयं । तत्र वृद्धिप्रकारो "द्विघ्नोऽब्धिघ्न" इत्यत्र श्लोकार्धेन स्मर्तव्यः ॥९॥

**दीधितिः**—अथ सर्वकुण्डसाधारणं खातादिकमाह-**खातं कुण्डाभमानमिति** । कुण्डवत् आभा आकृतिः मानं प्रमाणं च यस्य एतादृशं कुण्डखननं कर्तव्यम् । कुण्डशब्देन मेखलासंनिवेशः खातेन सहोच्यते । तत्र चतुरस्रादौ कुण्डे चतुरस्राद्याकारमेव खातं कर्तव्यं । तस्य च मानं कुण्डाद्यमेखलया सह कुण्डप्रमाणं । कुण्डप्रमाणं च चतुरस्रवृत्तादौ एकहस्तमाने चतुर्विंशत्यङ्गुलात्मकमेव । कण्ठादिष्वपि एवमेव मानमुन्नेयं । **सिद्धान्तशेखरे**—"खातं कुण्डप्रमाणं स्यादूर्ध्वमेखलया सहे"ति । **प्रतिष्ठासारसंग्रहे**—"पञ्चत्रिमेखलोच्छ्रायं ज्ञात्वा शेषमधः खनेत्" । अथ कुण्डाभमानमिति खातस्य विशेषणं । तेन यावान्कुण्डस्य विस्तारः तावत्खननमेव कर्तव्यं आकारस्तु कुण्डसदृश एव । एवं सति वनफलं सम्यगुत्पद्यते । **शारदातिलके**—"यावान्कुण्डस्य विस्तारः खननं तावदीरित"मिति । **प्रयोगसारे**—"चतुरस्रं चतुःकोष्ठं सूत्रैः कृत्वा यथापुरा । हस्तमात्रेण तन्मध्ये तावन्निम्नायतं खनेत्" । **गणेशविमर्शिन्याम्**—"चतुर्विंशाङ्गु-

ह्लायामं तावत्खातसमन्वित''मिति। पक्षद्वैधे "स्मृतिद्वैधे तु विषयः कल्पनीयः पृथक्पृथगि''ति वचनात् होमाल्पत्वबहुत्वे पूर्वोत्तरपक्षावाश्रयणीयौ। होमद्रव्यस्य लघुत्वस्थूलत्वविषयौ वा। औचित्यादर्थात्परिमाणमिति कात्यायनोक्तेः॥ अथ मेखलामाह—जिनलवगलतः स्युर्बहिर्मेखला इति। जिनलवः क्षेत्रचतुर्विंशतितमो भागः तं खाताद्बहिस्त्यक्त्वा मेखलाः कर्तव्या इत्यर्थः। क्षेत्रद्वादशांशतुल्यः कण्ठ इति क्वचिदुक्तं। सोमशंभौ—"बहिरेकाङ्गुलः कण्ठो द्व्यङ्गुलः क्वचिदागमे। चतुर्विंशतिमो भागः कुण्डानामङ्गुलं स्मृत''मिति। ता नन्दाङ्गत्र्युच्चवेदत्रिकरविततयः। ताः मेखलाः नन्दाङ्गत्र्युच्चाः नन्दाः नवाङ्गुलोच्चा आद्या मेखला। अङ्गानि षट्। द्वितीया षडङ्गुलोच्चा। तृतीया त्र्यङ्गुलोच्चा। वेदत्रिकरविततयः। आद्या चतुरङ्गुलविस्तृता। द्वितीया त्र्यङ्गुला। तृतीया द्व्यङ्गुला। विततिर्विस्तारः। लक्षणसंग्रहे—"नाभिकुण्डसमायुक्तं श्रेष्ठं कुण्डं त्रिमेखलम्। कुण्डं द्विमेखलं मध्यं नीचं स्यादेकमेखल''मिति। अन्यच्च—"मुख्या तु पञ्चमा प्रोक्ता मध्यमास्तिस्र एव च। द्वे स्यातां मध्यमे पक्षे एका सात्वधमा मते''ति। सोमशंभौ तु विशेषः—"त्रिमेखलं द्विजे कुण्डं क्षत्रियस्य द्विमेखलम्। मेखलैका तु वैश्यस्ये''ति। क्रियासारे—"चतुस्त्रिद्व्यङ्गुलव्यासो मेखलात्रितयस्य तु''। औच्चविषये तत्रैव—"प्रधानमेखलोत्सेधमुक्तमत्र नवाङ्गुलम्। तद्बाह्ये मेखलोत्सेधं षडङ्गुलमिति स्मृतम्। तद्बाह्यमेखलोत्सेधमङ्गुलत्रितयं क्रमात्'' इति। पञ्चमेखलापक्षः सिद्धान्तशेखरे—"षड्बाणाब्धिवह्निनेत्रमिताः स्युः पञ्च मेखलाः''। उच्चतोक्ता अन्यत्र—"तुङ्गादिमाङ्गुलवतस्तदिषूलवोनतुङ्गाः परा'' इति। पिङ्गलामते—"एका षडङ्गुलोत्सेधविस्तारा मेखला मते''ति। नाभिमाह—अंशोच्चनाभिर्द्विपुष्टेति। नाभिः एकांशेन उच्चा द्विपुष्टा द्वाभ्यामंशाभ्यां विस्तृता। स्वाभा स्वस्य कुण्डस्य आभेव आभा आकृतिर्यस्याः। अब्जभा वा पद्माकारा वा। शारदातिलके—"कुण्डानां कल्पयेदन्तर्नाभिमम्बुजसंनिभम्। तत्तत्कुडानुरूपं वा मानमस्य निगद्यते''। पद्माकारकरणं तत्रैव—"पद्मक्षेत्रस्य संत्यज्य द्वादशांशं बहिः सुधीः। तन्मध्ये विलिखेद्वृत्तैस्त्रिभिः समविभागतः। आद्यं स्यात्कर्णिकास्थानं केसराणां द्वितीयकम्। तृतीयं तत्र पत्राणां त्यक्त्वांशेन दलाग्रक''मिति। नाब्जे अब्जे पद्मकुण्डे नाभिर्न कार्या "पद्मे नाभिं विवर्जये''

दिति शारदातिलकवचनात् । योनिमाह—वसुरविलवकव्यासदैर्घ्या तु योनिरिति । तुर्विशेषे । वसवः अष्टौ व्यासः रवयो द्वादश दैर्घ्यं यस्याः सा । लवाः पारिभाषिका भागाः । पश्चान्नाला पश्चाद्भागे नालं सच्छिद्रं कर्तव्यं । अग्रगा अग्रेण एकेन भागेन मेखलाभ्यन्तरे खातपर्यन्तं गच्छतीत्यग्रगा । नो भगे योनिकुण्डे योनिर्नास्तीत्यर्थः । उपरिभुवा मेखलोपरि एकेन भागेन उच्चा अग्रेण कुण्डं विशन्ती योनौ पतितमाज्यादि स्वयमेवाग्रेण कुण्डं यथा प्रविशति तथा कर्तव्या । अत्र बहुषु पुस्तकेषु "वसुनवलवकव्यासदैर्घ्या" इति पाठो दृश्यते स उपेक्ष्यः । यतस्तदुपपत्तिवचने—"कुम्भौ तु योन्याः परमेखलायाः परौ द्विभागौ नवभागकास्तु । स्युर्मेखलास्त्वग्रत एक इत्थं कुण्डार्धदीर्घा विपुला त्रिभागा" इत्युक्तोपपत्तिः कथमन्यथा घटेत । अथ च मूलवचनान्यपि त्रैलोक्यसारे—"दीर्घा सूर्याङ्गुला योनिरुर्यंशेन विस्तरेण तु । एकाङ्गुलोच्छ्रिता सा तु प्रविष्टाऽभ्यन्तरे तथा । कुम्भद्वयार्धसंयुक्ता चाश्वत्थदलवन्मता । अङ्गुष्ठमेखलायुक्ता मध्ये त्वाज्यधृतिस्तथे"ति । पञ्चरात्रे अर्काङ्गुलोच्छ्रितां योनिं विदध्यात्तावदायताम्" । द्वादशाङ्गुलदीर्घामित्यर्थः । इत्यादीनि मूलवचनानि कथं संगच्छेरन् । तस्मादुक्तं सम्यक् । एतच्छ्लोकोक्तानां शेषभूतानि वचांसि विश्वकर्मा—"खातेऽधिके भवेद्रोगो हीने धेनुधनक्षयः । वक्रतुण्डे तु संतापो मरणं छिन्नमेखले । मेखलारहिते शोकोऽभ्यधिके वित्तसंक्षयः । भार्याविनाशनं प्रोक्तं कुण्डं योन्या विनाकृतम् । अपत्यध्वंसनं प्रोक्तं कुण्डं यत्कण्ठवर्जितं" इति । अन्यत्रापि—"मानाधिके भवेन्मृत्युर्मानहीने दरिद्रते"ति ॥ ८ ॥

पद्मिनी—कुण्डसिद्ध्यर्थं कुण्डाङ्गान्याह—खातमिति । खातं कुण्डाभमानं कार्यं । आभं च मानं च आभमाने कुण्डवदाभमाने यस्य तत्तथोक्तं । चतुरस्रे कुण्डे चतुरस्राकारं वृत्ते वृत्ताकारमित्यादि । मानमपि हस्तमात्रकुण्डे हस्तमात्रमित्यादि । हस्तोऽप्यत्र चतुरस्रस्य चतुर्विंशत्यङ्गुलपरिमितः । एवमग्रे कण्ठमेखलायोन्यादिषु चतुरस्रस्यैवायामविस्तारौ ग्राह्यौ । योन्यादिषु तयोर्नानात्वात् तत्राद्यमेखलया सह कुण्डमानम् । यद्वा भूमितोऽधो हस्तमात्रं । अत्राद्यपक्षे संमतिः—"खातं कुण्डप्रमाणं स्यादूर्ध्वमेखलया सहे"ति सिद्धान्तशेखरे । द्वितीयपक्षे संमतिः आदिसारस्वते—"चतुरस्रं चतुष्कोणं सूत्रैः कृत्वा यथा पुरा । हस्तमात्रेण तन्मध्ये तावन्निम्नायतं खनेदि"ति ।

कादिमते—"प्रोक्तानां सर्वकुण्डानामरत्निः खातमानक"मिति । आगमान्तरेपि—"यावन्मानः कुण्डविस्तार उक्तस्तावत्खातस्यापि मानं प्रदिष्ट"मिति । अत्र बहल्पहोमानुसारेण व्यवस्था । तदुक्तं कुण्डकल्पद्रुमकारेण—"सर्वेषु कुण्डेषु चतुर्भुजेषु विस्तारतुल्यं खननं वदन्ति । यद्वाथया मेखलया सहोक्तं तदल्पहोमे परिचिन्तनीय"मिति । चतुर्विंशांशपरिमितकण्ठाद्बहिर्मेखला भवन्ति । तत्राद्या मेखला नवाङ्गुलोच्चा चतुरङ्गुलविस्तारा । तस्माद्बहिर्द्वितीया षडङ्गुलोच्चा त्र्यङ्गुलविस्तारा । ततोऽपि बहिस्तृतीया त्र्यङ्गुलोच्चा द्व्यङ्गुलविस्तारा । नाभिस्त्वेकेनांशेनोच्चा द्वाभ्यां पुष्टा विस्तारेत्यर्थः । तस्या आकारस्तु स्वस्वकुण्डवत् । पद्मकुण्डे न कर्तव्या तत्र कर्णिकायाः सत्त्वात् । सर्वेषु कुण्डेषु पद्मरहितेषु पद्माकारा वा कर्तव्या । अयं च नाभिशब्दः पुंलिङ्गे स्त्रियां च । "आतपे क्षत्रिये नाभिः प्रायशोऽपि द्वयोरपि" इति कोशदर्शनात् । इति । कल्पलतायां । योनिस्तु अष्टभिश्चतुर्विंशांशैर्विस्तारा नवभिर्दीर्घा । परस्परवधेन यत्फलमुत्पद्यते तत्फलका योनिः कार्येत्यर्थः । तस्या आकारः पूर्ववत्कर्तव्यः । ननु वसुनवलवकव्यासदैर्घ्येत्युक्त्या कथं तत्फलका योनिः कार्येति लब्धमिति चेन्न । षण्णवत्यङ्गुलफलकादौ सर्वत्र तथा दृष्टत्वात् । "दीर्घा सूर्याङ्गुला योनिस्त्र्यंशोना विस्तरेण तु" इत्यादिवाक्येभ्योऽष्टाङ्गुलविस्तारो न गृहीतः किंतु षण्णवत्यङ्गुलक्षेत्रफलं यथाऽऽयाति तथैव विस्तारदीर्घतायाः सर्वैरपि स्वीकृतत्वाच्च । न चात्र द्विसप्तत्यङ्गुलफलकयोनिकरणे प्रमाणाभाव इति वाच्यम् । मदनरत्ने कृष्णचतुर्दशीशान्तौ गर्गः—"योनिं षडङ्गुलां तिर्यग्द्वादशाङ्गुलदैर्घ्यकाम् । अश्वत्थदलसंकाशां किंचिदुन्नमिताननां"मिति । वृद्धवसिष्ठः—"योनिश्च पश्चिमे भागे प्राङ्मुखी मध्यसंस्थिता । षडङ्गुलैश्च विस्तीर्णा चायता द्वादशाङ्गुलै"रिति । कुण्डकल्पद्रुमटीकाकारेण प्रमाणस्योक्तत्वात् ।

तस्याः साधनं तूच्यते । फलं द्विसप्तत्यङ्गुलपरिमितं ७२ इदमयुतगुणितं ७२०००० अयं सार्धत्रिनवकररसैर्भक्तव्यः ६२९३।४ भक्ते लब्धं ११४ अस्य मूलं १०।५ अयमेव योनेर्व्यासः । अस्मिन्व्यासे योनिकुण्डवत्क्षेत्रं कृतं चेत्तादृशफलका योनिर्भवति । अनेनैवाभिप्रायेण रघुवीरटीकाकारेण तस्या आकारः पूर्ववत्कर्तव्य इत्युक्तं । अन्यथा पूर्ववत्करणं कयापि रीत्या न संभवति । फलनिष्कासनं तु योनिकुण्डवदित्यलम् ॥ यद्वाऽस्यार्थः—वसु-

नव च ते लवकाश्च वसुनवलवकाः वसुनवलवकानां व्यासो वसुनवलवकव्यासः वसुनवलवकव्यास एव दैर्घ्यं यस्याः सा वसुनवलवकव्यासदैर्घ्या अष्टनवति ९८ क्षेत्रफलस्य यो व्यासः स एव दैर्घ्यं यस्याः सेत्यर्थः । अनेन व्यासेन योनिकुण्डवत् योनिकरणे विस्तारस्यार्थसिद्धत्वेन विस्तारो नोक्तः । व्यासानयनं त्वेवं—फलं दशसहस्रगुणितं ९८०००० भाजकसवर्णार्थमष्टगुणितं ७८०००० अयं भाज्यः । सार्धत्रिनवकररसाः ६२९३।४ भाजकोऽपि सवर्णितः ५०३४८ अनेन भक्ते लब्धं १५५ अस्य मूलं १२।३।५।५ अनेन व्यासेन योनिकुण्डवद्योनिः कार्येति तात्पर्यार्थः । ननु यथा षण्णवतिफलका योनिः कार्येति बहुभिरुक्तं तद्वत् अष्टनवतिफलका कार्येति क्वापि नोक्तं तत्कथं तत्फलका कार्येत्युक्तमिति चेन्न । योनेर्विस्तारस्यानेकविधत्वेन कुण्डक्षेत्रफलस्य यथावश्यकता तथा योनेः फलस्यावश्यकत्वाभावात् किंतु योनिकुण्डवद्योनिकरणार्थमेतस्या युक्तेरुक्तत्वात् । योनेरनेकविधत्वं कोटिहोमपद्धत्यादावुक्तम्—"वितस्तिमात्रा योनिः स्यात्षट्सप्ताङ्गुलविस्तृते"ति । मेखलामध्यतो योनिः कुण्डार्धा त्र्यंशविस्तृता" इति त्रिविधा । "षट्चतुर्घ्यङ्गुलायामविस्तारोन्नतिशालिनी"ति शारदावाक्यव्याख्या। कुण्डकल्पलतायाम्—षट्चतुर्घ्यङ्गुलत्वमायामादिषु प्रत्येकं संबध्यते । तेन द्वादशाङ्गुलदीर्घा तावद्विस्तृता तावदुन्नतेति । एवं षण्णवतिफलका योनिकरणे तु मूलोक्तविस्ताराद्भिन्नत्वं स्पष्टं । अतो विस्तारानुसारेण फलमपि भिन्नं । तत्र कस्मिन्कुण्डे का वा योनिः कार्येति व्यवस्थाया अभावात् सर्वेषु कुण्डेषु सर्वासां योनीनां प्राप्त्या योनेः फलस्यानावश्यकत्वं । न च बहुषु ग्रन्थेषु द्वादशाङ्गुलदैर्घ्यमुक्तं अत्र तु किंचिन्न्यूनचतुर्यवाधिक्यं तस्य किं प्रमाणमस्तीति वाच्यं । एतस्यापि प्रमाणस्योक्तप्रायत्वात् । तथाहि । वृत्तार्धव्यग्रं चैकांशरूपमितो भिन्नं बोध्यमिति कोटिहोमपद्धतावुक्तं । इतो द्वादशाङ्गुलप्रमाणादित्यर्थः ॥

कुण्डोद्योते तु द्वौ कुम्भौ भागद्वयेन दीर्घौ मेखलानां नवभागाः अग्रतः प्रविष्ट एको भागः एवं द्वादशभागैर्दीर्घा कार्येति । "एकैकाङ्गुलतो योनिं कुण्डेष्वन्येषु वर्धयेत् । यावद्यक्रमेणैव योन्यग्रमपि वर्धये"दिति वाक्येन योनिदैर्घ्यादग्रं भिन्नमिति स्पष्टतया सिद्धम् । अग्रमानमपि विकल्पेनोक्तं—"त्रिभागां मध्यतो योनिमायामे द्वादशाङ्गुलाम् । द्वादशांशोच्छ्रितां कुर्या-

त्किंचित्कुण्डनिवेशिनी''मिति प्रयोगसारस्थवाक्ये कल्पलताकारेण किंचित्पदमेकाङ्गुलपरमिति व्याख्यातं। सिंहसिद्धान्तकारेण यथाश्रुतमेव स्वीकृतं तद्यथा-मेखलाकथनानन्तरं सर्वबाह्यस्थमेखलाया बहिश्चतुरङ्गुलायामविस्तारोत्सेधं चतुरस्रपीठं मृदा कृत्वा तदुपरिनिहितमूलद्वादशाङ्गुलदीर्घोत्तरोत्तरहीनपरिणाहमध्यमेखलासंलग्नसरन्ध्रनालयुतां मध्ये सगर्तामुपरितनमेखलोपरिगतामष्टाङ्गुलमानविस्तारमूलां तत्प्रदेशादुभयपार्श्वतः क्रमेण संकुचितामेकाङ्गुलविस्ताराग्रां द्वादशाङ्गुलयामामेकाङ्गुलोत्सेधमेखलायुक्तामश्वत्थपत्राकारां मूलात्किंचित्क्रमान्न्यूनामीषत्कुण्डप्रविष्टाग्रां योनिं कुर्यादिति सिंहसिद्धान्तनामकतन्त्रशास्त्रग्रन्थे। तथाचास्माभिः किंचित्पदस्याङ्गुलप्रकरणादङ्गुलादल्पत्वं यवानामेव प्रमाणं स्वीकृत्येदमुक्तमिति सर्वं समञ्जसम्॥

कैश्चिदष्टाङ्गुलविस्तारः नवाङ्गुलायाम इत्येवार्थः कृतः। तथाच—कण्ठप्रान्तात्पश्चिमे षडङ्गुले देशे केन्द्रं मत्वा वृत्ते कृते द्वादशाङ्गुलं व्यासवृत्तं भवति तस्मिन्वृत्ते योनिकुण्डवत्पश्चाद्वृत्तार्धद्वयं कार्यम्। वृत्तार्धद्वयस्य पूर्वान्ताभ्यां कण्ठप्रागन्तात्प्राक् उपरि भूम्यामर्धाङ्गुलवर्धितयोन्यग्रपर्यन्तं सूत्रद्वयं देयं। पश्चान्नालं सच्छिद्रं। पश्चिमतो योन्युपरि कुम्भाकारं गोलद्वयं निधेयं। मध्यं कूर्मपृष्ठोन्नतं। योन्युपरि सर्वत एकाङ्गुला मेखला प्राक्प्रवणार्थं पश्चात्किंचिदुच्चा एवं योनिः कार्येति दिक्। "पूर्वाग्नियाम्यकुण्डानां योनिः स्यादुत्तरानना। पूर्वानना तु शेषाणामीशान्येऽन्यतरा तयो"रिति क्रियासारे। तस्याः पश्चान्नालं सच्छिद्रं कार्यं। अग्रगा अग्रेण गच्छतीत्यग्रगा अधोभागादुपरिभागो यथा सूक्ष्मो भवति तथा कर्तव्येत्यर्थः। प्राक्प्रवणा च। अग्रशब्दस्योभयनिष्ठत्वात्। नो भगे योनिकुण्डे योनिर्न कार्या। एकेनांशेन मेखलोपरि उच्चा एकेनाग्रभागेन कुण्डमध्ये प्रवेशयितव्या॥ ९॥

नौका-इदानीं सर्वकुण्डसाधारणं खातादिकमाह—खातमिति। खातं खननं कुण्डाभमानं कुण्डस्याभा आकारः मानं चैकहस्तादिरूपं तद्वदेव खातं कर्तव्यं। चतुरस्रस्य चतुरस्रात्मकं अन्येषां तत्तदाकारं एकहस्तादिप्रमाणकं अभितो निम्नं ग्रन्थान्तरोक्तत्वादाद्यमेखलया सह तत्प्रमाणकं निम्नं वा कर्तव्यं। जिनलवगलतः कुण्डस्य चतुर्विंशतितमोंऽशः कण्ठः तस्माद्बहिः

बाह्यप्रदेशे मेखलाः स्युः तिस्रो मेखलाः कर्तव्या इत्यर्थः । कियत्प्रमाणका मेखला इत्याह—ता इति । ता मेखलाः नन्दाङ्ग्युग्चवेदत्रिकरवितत्यः क्रमान्नवषड्त्र्यंशोच्चाः सत्यः चतुस्त्रिद्व्यंशविस्तृताः । तथाच कुण्डचतुर्विंशांशमध्ये आद्याऽन्तर्मेखला नवांशोच्चा चतुरंशविस्तारा । द्वितीया मध्यमेखला षडंशोच्चा त्र्यंशविस्तारा । तृतीयाऽन्त्यमेखला त्र्यंशोच्चा द्व्यंशविस्तारा । ग्रन्थान्तरोक्तत्वात् द्वितीया पञ्चांशोच्चा तृतीया द्व्यंशोच्चा वा कर्तव्या । अंशोच्चनाभिः अंशेन एकेनांशेन चतुर्विंशतितमांशेनेत्यर्थः । उच्चा अंशोच्चा सा चासौ नाभिश्चांशोच्चनाभिः । सा च द्विपुष्टा द्व्यंशविस्तारा ग्रन्थान्तरोक्तत्वात् द्व्यंशेनोच्चा चतुरंशेन विस्तारा वा कर्तव्या । सा च स्वाभा स्वसदृशाकारा तत्तत्कुण्डाकारेत्यर्थः । अब्जभा वा सर्वकुण्डेषु पद्माकारा वा । नाब्जे अब्जे पद्मकुण्डे तु नाभिर्न कर्तव्या तत्र कर्णिकायाः सत्त्वात् तत्कुण्डस्य पद्माकारत्वाच्च । कर्णिका तु स्वविस्तारसमोच्चा खातभूमितः कर्तव्या । योनिस्तु वसुनवलवकव्यासदैर्घ्या कुण्डचतुर्विंशतिभागानां मध्ये नवभागैर्दीर्घा लम्बा । ग्रन्थान्तरोक्तत्वात् कुण्डार्धपरिमिता वा कर्तव्या । उत्पत्तिप्रकारस्तु—यदा वसुनवलवकव्यासदैर्घ्या तदा दैर्घ्यपरिमितव्यासार्धमितकर्कटेन प्राग्वत्कण्ठप्रदेशव्यापि वृत्तं दत्वा योनिकुण्डोत्पत्तिवत्कुण्डपश्चिमायां मध्यभागे भूमित एव कर्तव्या । सार्धव्यासात्तत्प्रमाणका भवति । यदा तु कुण्डार्धपरिमिता लम्बा तदा तु कुण्डार्धपरिमितं दीर्घं कुण्डतृतीयांशमितविस्तृतं दीर्घचतुरस्रं कृत्वा तस्य पञ्च विभागान् प्रकल्प्यांशत्रयं प्राक् त्यक्त्वा तत्र दक्षिणोदक्सूत्रं दत्वा तत्संधिस्थेन कर्णसूत्रार्धमितकर्कटेन पुच्छाद्दक्षिणोत्तरयोर्वृत्तार्धद्वयं निष्पाद्य दक्षिणोदग्गततद्वृत्तार्धद्वयान्तात् मुखपर्यन्तं कर्णसूत्रद्वयं दद्यात् । तेन तत्प्रमाणका योनिर्भवति । सा च पश्चान्नाला पश्चाद्भूमितः उच्चताप्रमाणकं नालं छिद्रं यस्याः सा तादृशी । सा चाग्रगा प्राङ्मुखी प्राक्सूक्ष्मविस्तारा प्रत्यक्स्थूलविस्तारेत्यर्थः । सा चोपरिभुवा उपर्यूर्ध्वं भुवैकेन चतुर्विंशतितमांशेनोच्चा मेखला यस्याः सा तादृशी । अग्रेण कुण्डं विशन्ती अग्रभागेन कुण्डप्रवेशकर्त्री प्राङ्निम्ना प्रत्यगुन्नता पिण्डद्वययुता च नयनरमणीया कर्तव्या । नो भगे योनिकुण्डे योनिर्न कर्तव्या तस्यैव योनिस्वरूपत्वादिति ॥ ९ ॥

मिताक्षरा—अथ कुण्डत्वसिद्ध्यर्थं कुण्डाङ्गान्याह वृत्तेन—खातमिति । खातं गर्तं कुण्डाभमानं । आभं च मानं चाभमाने कुण्डवदाभमाने

यस्य तत्तथोक्तं। चतुरस्रे कुण्डे चतुरस्राकारं वर्तुले वर्तुलाकारमित्यादि। मानमपि हस्तमात्रकुण्डे हस्तमात्रमित्यादि। हस्तोऽप्यत्र चतुरस्रस्य चतुर्विंशत्यङ्गुलपरिमितः। एवमग्रे कण्ठमेखलायोन्यादिषु चतुरस्रस्यैवायामविस्तारौ ग्राह्यौ। योन्यादिषु तयोर्नानात्वात्। तत्राद्यमेखलया सह कुण्डाभमानं पञ्चदशाङ्गुलं भवति। यद्वा भूमितो हस्तमात्रमिति। तदुक्तं सिद्धान्तशेखरे—"खातं कुण्डाभमानं स्यादूर्ध्वमेखलया सहे"ति। सारस्वते—"हस्तमात्रेण तन्मध्ये तावन्निम्नायतं खनेदि"ति। "यावान्कुण्डस्य विस्तारः खननं तावदीरित"मिति च। शारदातिलके च—अत्र बहल्पहोमानुसारेण व्यवस्थेति ज्ञेयं। जिनलवगलतः स्युर्बहिर्मेखलास्ता नन्दाङ्गत्र्युच्चवेदत्रिकरविततय इति। चतुर्विंशांशपरिमितकण्ठाद्बहिर्मेखला भवन्ति। तत्राद्या मेखला नवाङ्गुलोच्चा चतुरङ्गुलविस्तारा। तस्माद्बहिर्द्वितीया षडङ्गुलोच्चा त्र्यङ्गुलविस्तारा। ततो बहिस्तृतीया त्र्यङ्गुलोच्चा द्व्यङ्गुलविस्तारेत्यर्थः। तदुक्तं कालोत्तरे—"खाताद्बाह्येऽङ्गुलः कण्ठोः द्व्यङ्गुलः क्वचिदागम" इति। मेखलोत्सेध उक्तो रामवाजपेयिभिः—"नवर्तुरामा ९।६।३ ङ्गुलतुङ्गता मते"ति। विस्तार उक्तः क्रियासारे—"चतुस्त्रिद्व्यङ्गुल ४।३।२ व्यासो मेखलात्रितयस्य" त्विति। अंशोच्चनाभिर्द्विपुष्टेति। नाभिस्त्वेकांशेनोच्चा द्वाभ्यामंशाभ्यां पुष्टा विस्तृतेत्यर्थः। स्वाभा नाब्जेऽब्जभावेति। तस्या आकारः स्वस्वकुण्डवत्। सा नाभिः पद्मकुण्डे न कर्तव्या तत्र कर्णिकायाः सत्वात्। सर्वेषु कुण्डेषु पद्मरहितेषु सा नाभिः पद्माकारा वा कर्तव्येत्यर्थः। तदुक्तं शारदातिलके—"कुण्डानां कल्पयेदन्तर्नाभिमम्बुजसंनिभाम्। तत्तत्कुण्डानुरूपां वा मानमस्य निगद्यत" इति। योनिकुण्डे योनिं अब्जकुण्डे नाभिं च वर्जयेदि"ति च तत्रैव। अत्र नाभिशब्दः स्त्रीलिङ्गी। आतपे क्षत्रिये नाभिः प्राण्यङ्गेपि द्वयोरपी"ति कोशदर्शनात्। "द्वयोः प्राणिप्रतीके स्यादि"ति नाभिपर्याये मेदिनीकोशाच्चेति। वसुनवलवकव्यासदैर्घ्यां तु योनिरिति। योनिस्तु अष्टभिरङ्गुलैर्विस्तृता नवभिर्दीर्घा। परस्परवधेन यत्फलमुत्पद्यते तत्फलका योनिः कार्येत्यर्थः। तदुक्तं विश्वकर्मणा—"परस्परवधे जातं तत्र क्षेत्रफलं बुधाः। आनयेत्तत्फलं क्षेत्रे विभागं परिकल्पयेदि"त्यादिना। तस्या आकारः पूर्ववत्कर्तव्य इति। ननु "वसुनवलवकव्यासदैर्घ्ये"त्युक्त्या कथं तत्फलका योनिः कार्येति लब्धमिति चेन्न। षण्णवत्यङ्गुलफलकादौ सर्वत्र तथा दृष्टत्वात्।

तच्चात्र द्विसप्तत्यङ्गुलफलकयोनिकरणे प्रमाणाभाव इति वाच्यम्। मदनरत्ने कृष्णचतुर्दशीशान्तौ गर्गः—"योनिं षडङ्गुलां तिर्यग्द्वादशाङ्गुलदैर्घ्यकाम्। अश्वत्थदलसंकाशां किंचिदुन्नमिताननां" मिति। वृद्धवसिष्ठः—"योनिश्च पश्चिमे भागे प्राङ्मुखी मध्यसंस्थिता। षडङ्गुलैश्च विस्तीर्णा चायता द्वादशाङ्गुले"रिति। वस्तुतस्त्वियं योनिः षडङ्गुलैकमेखलापक्षे बोध्या। नवाङ्गुलमेखलापक्षे तु मेखलामध्य एव तस्याः संनिवेशाद्योग्येत्यन्यत्र विस्तरः।

तस्याः साधनं तूच्यते—फलं द्विसप्तत्यङ्गुल ७२ परिमितं। इदमयुतगुणं ७२०००० अयं सार्धत्रिनवकररसैः ६२९३।४ भक्तव्यः। भक्ते लब्धं ११४ अस्य मूलं १०।५ अयमेव योनेर्व्यासः। अस्मिन्व्यासे योनिकुण्डवत्क्षेत्रं कृतं चेत्तादृशफलका योनिर्भवति। अनेनैवाभिप्रायेण रघुवीरदीक्षितटीकाकारैस्तस्या आकारः पूर्ववत्कर्तव्य इत्युक्तं। अन्यथा पूर्ववत्करणं कयापि रीत्या न संभवति। फलनिष्कासनं तु योनिकुण्डवदित्यलम्। पश्चान्नालाग्रगा नो भग उपरिभुवाग्रेण कुण्डं विशन्तीति। तस्याः पश्चान्नालं सच्छिद्रं कार्यं। अग्रेण गच्छतीत्यग्रगा। अधोभागादुपरिभागो यथा सूक्ष्मो भवति तथा कर्तव्येत्यर्थः। प्राक्प्रवणा च। अग्रशब्दस्योभयनिष्ठत्वात्। भगे योनिकुण्डे योनिर्न कार्या। एकांशेन मेखलोपर्युच्चापि वा। "शोभनां मध्यतः किंचिन्निम्नामुन्मूलितां शनैः। अग्रेण कुण्डाभिमुखीं किंचिदुत्कृष्टमेखला"मिति। त्रैलोक्यसारे "कुम्भद्वयसमायुक्ता वाऽश्वत्थदलवन्मते"ति। कुम्भद्वयं वृत्तार्धद्वयं। प्रयोगसारे—"कुर्यात्पश्चिमतो नालमायामे चतुरङ्गुलं। त्रिद्व्येकाङ्गुलविस्तारं क्रमान्नालाग्रमिष्यत"इति। "पूर्वाग्नियाम्यकुण्डानां योनिः स्यादुत्तरानना। पूर्वानना तु शेषाणामीशान्येऽन्यतरा तयो"रिति क्रियासारे। अत्राग्नेयकुण्डग्रहणं तच्चतुरस्रवृत्तान्यतराभिप्रायेण ग्रहपीठाकारकुण्डाभिप्रायेण वेति ज्ञेयं योनिकुण्डे योनिनिषेधादित्युक्तं कुण्डकल्पद्रुमटीकायां। उक्तं च शारदातिलकेपि—"योनिकुण्डे योनिमब्जकुण्डे नाभिं च वर्जयेदि"ति। न कुर्यात्कुण्डकोणेषु योनिं तां तन्त्रवित्तम।" इत्यपि तत्रैवेति। अत्र बाह्यकोणे योनिनिषेधो नत्वन्तःकोण इति भूयसा विस्तृत्योक्तमिति शिवम्॥९॥

सुप्रभा—इदानीं सर्वकुण्डसाधारणं खाताद्यङ्गजातमाह—खातमिति। खातं खननं। गर्तकरणमिति यावत्। कुण्डस्याभं रूपं। आकार

इत्यर्थः। यद्यपि सर्वत्र "आभा" इत्याबंत एव शब्दो दृश्यते आकृत्यर्थे प्रयुक्तः। केवलमत्रैव "आभं" इत्यजन्तो दृश्यते। तथापि नायं व्याकरणतोऽसाधुः। "आतश्चोपसर्गे" इति कः। "यथा निभं" तद्वत्। मानं प्रमाणं च तद्वदाकारो मानं यस्य तादृशं कर्तव्यं। यथा चतुरस्रे चतुरस्राकारः। वृत्ते वृत्ताकारः पद्मे पद्माकार इत्यादिराकारः। तथा—एकहस्ते एकहस्तमात्रं द्विहस्ते द्विहस्तमात्रं इत्यादिमानं। अत्र पक्षद्वयं—समेखलः खातो विमेखलश्चेति। तत्र समेखलः खातः कुण्डाद्यमेखलया सहितः कुण्डप्रमाणकः। तदुक्तं सिद्धान्तशेखरे—"खातं कुण्डप्रमाणं स्यादूर्ध्वमेखलया सह" इति। प्रतिष्ठासारसंग्रहे—"पञ्चत्रिमेखलोच्छ्रायं ज्ञात्वा शेषमधः खनेत्" इति। विमेखलखातः मेखलां वर्जयित्वा कुण्डप्रमाणकः। तदुक्तं शारदातिलके—"यावान्कुण्डस्य विस्तारः खननं तावदीरित" मिति। प्रयोगसारे—"चतुरस्रं चतुःकोष्ठं सूत्रैः कृत्वा यथा पुरा। हस्तमात्रेण तन्मध्ये तावन्निम्नायतं खनेत्" इति। अत्र मूलकर्तुः द्वितीयः पक्षएवाभिप्रेत इति जिनलवगलत इत्यादिरचनाकौशल्यादनुमीयते। कण्ठमाह—जिनलवगलतः कुण्डस्य जिनलवश्चतुर्विंशतितमोंऽशो गलः कण्ठः। क्वचिद्द्वादशांशतुल्यः कण्ठ उक्तः। तदुक्तं सोमशंभौ—"बहिरेकाङ्गुलः कण्ठो द्व्यङ्गुलः क्वचिदागमे। चतुर्विंशतिमो भागः कुण्डानामङ्गुलं स्मृत" मिति। उक्तं कण्ठं खाताद्बहिस्त्यक्त्वा मेखलाः स्युः कर्तव्या इत्यर्थः। मेखला आह—ता मेखलाः नन्दाङ्गत्र्युच्चाः। प्रथमा मेखला नवाङ्गुलोच्चा द्वितीया षडङ्गुलोच्चा तृतीया त्र्यङ्गुलोच्चा कर्तव्या। वेदत्रिकरविततयः। प्रथमा चतुरङ्गुलविस्तारा द्वितीया त्र्यङ्गुलविस्तारा तृतीया द्व्यङ्गुलविस्तारा कर्तव्या। ग्रन्थान्तरे तु पञ्चत्रिद्व्येकमेखलापक्षा उक्ताः। तथाच लक्षणसंग्रहे—"मुख्या तु पञ्चमा प्रोक्ता मध्यमास्तिस्र एव च। द्वे स्यातां मध्यमे पक्षे एका सात्वधमा मता" इति। "नाभिकुण्डसमायुक्तं कुण्डं श्रेष्ठं त्रिमेखलं। कुण्डं द्विमेखलं मध्यं नीचं स्यादेकमेखलमि" ति। सोमशंभौ तु—एषां पक्षाणां वर्णपरत्वमुक्तं "त्रिमेखलं द्विजे कुण्डं क्षत्रियस्य द्विमेखलम्। मेखलैका तु वैश्यस्ये" त्यादि। पञ्चमेखलापक्षे औच्च्यासौ सिद्धान्तशेखरे—"षड्बाणाब्धिवह्निनेत्रमिताः स्युः पञ्च मेखलाः। तुङ्गादिमाङ्गुलवतस्तादिषुलवोनतुङ्गाः पराः" इति। द्विमेखलापक्षे तन्त्रान्तरे—"षष्ठांशेनाष्टमांशेन मेखलाद्वितयं विदुः" इति। एकमेखलापक्षे पिङ्गलामते—"एका षडङ्गुलोत्सेधविस्तारा मेखला

मता" इति । मेखलात्रयपक्षेऽपि तुङ्गविस्तारविषये ग्रन्थान्तरे मतान्तराणि सन्ति तानि कुण्डरत्नावल्यां संगृहीतानि—"तस्माद्रन्ध्र ९ रसा ६ ग्नि ३ भागविमितं स्यान्मेखलानामिहाप्यौच्चं वाप्यथ गो ९ शरा ५ क्षि २ विमितं वेदा ४ ग्नि ३ नेत्रै २ स्ततिः । तिस्रस्तास्त्वथवार्क १२ नाग ८ जलनिध्यं ४ शैः क्रमादुच्छ्रिता वेदैः ४ स्युः किल विस्तृताश्च सुसमाः कुण्डानुरूपा अमूः" इति । नाभिमाह—अंशोच्चनाभिर्द्विपुष्टा । सा नाभिरेकाङ्गुलेनोच्चा द्वाभ्यामङ्गुलाभ्यां विस्तृता कर्तव्या । तथा स्वाभा स्वस्य कुण्डस्यामेवाभा आकृतिर्यस्यास्तादृशी कर्तव्या । यथा चतुरस्रे चतुरस्रा वृत्ते वृत्तरूपा त्र्यस्रे त्र्यस्राकारा इत्यर्थः । अब्जभा वा अथवा नवविधकुण्डे सर्वत्र पद्माकारा कार्या। नाब्जे पद्मकुण्डे तु नाभिरेव न कार्या तन्निषेधात् । तदुक्तं शारदातिलके—"पद्मे नाभिं विवर्जयेत्" इति । पद्मे नाभिस्थाने कर्णिकाकेसराणां सत्त्वाच्चेति । तत्तत्कुण्डाकारकरणं पद्माकारकरणं चोक्तं शारदातिलके—"कुण्डानां कल्पयेदन्तर्नाभिमम्बुजसंनिभं । तत्तत्कुण्डानुरूपं वा मानमस्य निगद्यते । पद्मक्षेत्रस्य संत्यज्य द्वादशांशं बहिः सुधीः । तन्मध्ये विलिखेद्वृत्तैस्त्रिभिः समविभागतः । आद्यं स्यात्कर्णिकास्थानं केसराणां द्वितीयकं । तृतीयं तत्र पत्राणां त्यक्त्वांशेन दलाग्रक"मिति । योनिमाह—वसुरविलवकव्यासदैर्घ्या तु योनिः । वसवोऽष्टौ रवयो द्वादश लवका अङ्गुलानि । अष्टभिरङ्गुलैर्विस्तृता द्वादशभिरङ्गुलैर्दीर्घा योनिकुण्डप्रक्रिययैव पूर्ववत्कार्या । तदुक्तं—"कुम्भौ तु योन्याः परमेखलायाः परौ तु भागौ नवभागकास्तु । स्युर्मेखलास्त्वग्रत एक इत्थं कुण्डार्धदीर्घा विपुला त्रिभागा" इति । तुर्विशेषार्थकः । पश्चाद्भागे नालो यस्यास्तादृशी । तस्याः पश्चिमे भागे एकाङ्गुलपरिणाहः सच्छिद्रो नालः कर्तव्य इत्यर्थः । अग्रेण एकाङ्गुलेन मेखलाकण्ठतोप्यग्रे खातमभिगच्छति तादृशी कर्तव्या । पुनः कीदृशी । उपरिमेखला उपरिभुवा एकाङ्गुलेनोच्चा विज्ञेया । अग्रेणाग्रभागेन कुण्डं विशन्ती हवनसमये योनौ क्षरितमाज्यादिहविर्यथा विनाप्रयत्नं कुण्डमध्ये पतेत्तादृशी कर्तव्या । पश्चाद्द्वादशाङ्गुलोच्छ्राया पुरस्तादेकाङ्गुलोच्छ्राया मध्ये त्र्यङ्गुलेन प्राक्प्रवणा कार्येत्यर्थः । अत्र क्वचिदङ्गविशेषा नोक्तास्तथापि ते "अनुक्तमन्यतो ग्राह्य"मिति न्यायेन कर्तव्याः । तेच योनेरुपरि समन्ततोङ्गुलमात्रैका परिधिः । मध्येऽन्तर्बिलं । गजकुम्भसदृशं । तानि प्रदर्शितानि त्रैलोक्यसारे—"दीर्घा-

सूर्याङ्गुला योनिरुद्यंशेन विस्तरेण तु । एकाङ्गुलोच्छ्रिता सा तु प्रविष्टाभ्यन्तरे तथा । कुम्भद्वयार्धसंयुक्ता चाश्वत्थदलवन्मता । अङ्गुष्ठमेखला युक्ता मध्ये स्वाज्यधृतिस्तथा" इति । पञ्चरात्रे—"अर्काङ्गुलोच्छ्रितां योनिं विदध्यात्तावदायतां" इति । कुण्डमरीचिमालायां—"योनिमध्यगतं लिङ्गं मृत्पिण्डौ दक्षिणोत्तरौ" इति । कुण्डपरशुरामे—"योनिमध्यगतं लिङ्गं



तुङ्गं पृथुकराङ्गुलं । मृत्पिण्डद्वितयं तस्याः पार्श्वे वा कुम्भिकम्भवत्" इति । नो भगे योनिकुण्डे योनिर्न कर्तव्या स्वस्यैव योनिरूपत्वादिति भावः । किंच योनिर्द्विविधा—गजोष्ठसदृशी अश्वत्थदलाकृतिश्चेति । तत्रेयं कुण्डार्कगता गजोष्ठसदृशी । अश्वत्थदलाकृतिस्तु चतुरस्रसाध्या कुण्डसिद्ध्यादावुक्ता सा तत एवावगन्तव्या विस्तरभिया नेह प्रपञ्च्यते । कुण्डे एतच्छ्लोकोक्ताङ्गजाताकरणे न्यूनातिरिक्तकरणे वाऽन्यथाकरणे दोषानाह विश्वकर्मा—"खातेऽधिके भवेद्रोगो हीने धेनुधनक्षयः । वक्रकुण्डे तु सन्तापो मरणं छिन्नमेखले । मेखलारहिते शोकोऽभ्यधिके वित्तसंक्षयः । भार्याविनाशनं प्रोक्तं कुण्डं योन्या विनाकृतं । अपत्यध्वंसनं प्रोक्तं कुण्डं यत्कण्ठवर्जितं" इति । सिद्धान्तशेखरे—"मानहीने महाव्याधिरधिके शत्रुवर्धनं । अनेकदोषदं कुण्डमत्र न्यूनाधिकं यदि । तस्मात्सम्यक्परीक्ष्यैव कर्तव्यं शुभमिच्छता" इति । वसिष्ठसंहितायां—"मानाधिके भवेन्मृत्युर्मानहीने दरिद्रता" इत्यादि । अत्र सर्वत्र द्विहस्तादौ वृद्धिस्तु "द्विघ्नोऽङ्घिघ्ने"त्यनेन कर्तव्येति ॥ ९ ॥

पङ्क्त्यकैरर्कशक्रैर्नृपतिधृतिकरैर्मण्डपोऽल्पः समोऽग्र्य-
स्तुल्याम्भोदोष्णि खण्डा इह नव सुसमा मध्यमो वेदिरेषाम् ।
हस्तोच्चा खण्डकोणेष्विभकरमुदरे पञ्चहस्तं बहिश्च
स्तम्भौघं द्व्यष्टसंख्यं भुवि शरलवतः खेयमन्यत्र चैवम् ॥१०॥

मरीचिका—अथ मण्डपमाह—अत्र मण्डपः समचतुरस्रो दशहस्तो द्वादशहस्तोऽल्पः । एवं द्वादशहस्तश्चतुर्दशहस्तो वा मध्यमः । अत्र द्वादशहस्तस्योभयकोटिनिपातः उभयेषामपि चक्रशूलादिमानानां प्राह्यर्थः । तथा षोडशहस्तोऽष्टादशहस्तो वा मण्डपोऽग्र्यः श्रेष्ठः । अस्मिन्मण्डपे चतुर्भिश्चतुर्भिः सूत्रैस्तिर्यगूर्ध्वमण्डपस्य नव खण्डास्तुल्यप्रमाणाः कल्प्याः । तेषां मध्यखण्डो वेदिः । सा च सर्वेष्वपि मण्डपेषु हस्तमात्रोच्चा कार्या । खण्डकोणेषु सूत्रपातस्थानेषु षोडशसु उदरे वेदिकोणचतुष्टयेऽष्टहस्तस्तम्भचतुष्टयं, बहिर्बहिःकोणेषु पञ्चहस्तं स्तम्भद्वादशकं स्वस्वपञ्चमांशेन भूम्यन्तःप्रविष्टं खेयं कर्तव्यं । एवं सर्वत्र चक्रशूलादीनामपि अन्तःप्रवेशः स्वस्वपञ्चमांशेनोक्तः ॥ १० ॥

दीधितिः—अथ मण्डपमाह-पङ्क्त्यकैरिति । अत्र मण्डपः समचतुरस्रो दशहस्तो द्वादशहस्तश्चाल्पः । एवं द्वादशहस्तश्चतुर्दशहस्तश्च मध्यमः । अत्र द्वादशहस्तस्योभयकोटिपातः उभयेषामपि चक्रशूलादिमानानां प्राह्यर्थः । तथा षोडशहस्तोऽष्टादशहस्तश्च मण्डपोऽग्र्यः श्रेष्ठः । अत्र तुल्याम्भोदोष्णि तुल्यचतुर्भुजे मण्डपे खण्डाः सुसमा नव कार्याः । एषां मध्यमः खण्डः वेदिः । सा च हस्तोच्चा । खण्डकोणेषु षोडशसु सूत्रपातस्थानेषु इभकरं अष्टहस्तं । उदरे वेदिकोणेषु बहिश्च पञ्चहस्तं द्व्यष्टसंख्यं षोडशसंख्याकं स्तम्भौघं भुवि शरलवतः स्वपञ्चमांशेन खेयं निक्षेप्यमित्यर्थः । एवं अन्यत्र चक्रशूलादीनामपि अन्तःप्रवेशः स्वपञ्चमांशेन बोध्यः । अत्र वेदीकोणेभ्यः बहिरेव स्तम्भनिवेशः । अन्यथा चतुरस्रहान्यापत्तिः । एते चत्वारः इतरे द्वादशस्तम्भाश्च नवखण्डात्मकमण्डपभूमौ विदिक्खण्डचतुष्टये प्रतिखण्डकर्णयोः प्रान्तसंलग्ना यथा भवेयुस्तथा खेयाः । रुद्रपद्धतौ भट्टैस्तथोक्तत्वात् । अत्रोक्तमण्डपमानग्रहणेपि नवकुण्डीपक्षः लक्षहोमकोटिहोमादौ

नैव संभवति । तन्त्रौचित्यात्परिमाणमिति कात्यायनोक्तेः मन्त्रमुक्ताव- ल्यादिषु चतुर्विंशतिहस्ताष्टाविंशतिहस्तद्वात्रिंशद्धस्तपर्यन्तं या वृद्धिरुक्ता सा ग्राह्या । कोटिहोमे षोडशहस्तकुण्डपक्षे तत्राप्यसंभवे पञ्चाशद्धस्तशतह- स्तावपि मण्डपावुक्तौ तेषां प्रमाणभूतानि वचनानि ग्रन्थगौरवभयान्न लिख्यन्ते ॥ १० ॥

पद्मिनी—अथ मण्डपं वृत्तत्रयेणाह—अत्र मण्डपशब्देन भूमिस्तम्भ- वलिकादिसमुदायः । अन्यथा दशहस्तादिसंख्याया असंभवः स्यात् । नवखण्ड- करणस्य सर्वथैवासम्भवाच्च । स मण्डपो दशहस्तो द्वादशहस्तश्चाल्पः । द्वाद- शहस्तश्चतुर्दशहस्तश्च मध्यमः । षोडशहस्तोऽष्टादशहस्तोऽग्र्यः श्रेष्ठः । द्वादश- हस्तस्योभयकोटिपातः । एककुण्डकरणपक्षे द्वादशहस्तो मध्यमः पञ्चकुण्डक- रणपक्षेऽल्प इति ज्ञापनार्थः । चक्रशूलमध्यमाल्पमानप्राप्तिस्तु स्पष्टैव । तुल्या- म्भोदोष्णीति । तुल्यानि अम्भांसि चत्वारि दोषो भुजा यस्मिन् सः तुल्या- म्भोदोस्तस्मिन् तुल्याम्भोदोष्णि समचतुरस्र इत्यर्थः । अस्मिन्मण्डपे चतुर्भिश्चतुर्भिः सूत्रैर्नवखण्डास्तुल्यप्रमाणाः कार्याः । तेषां मध्ये मध्यमो वेदिः । सा च सर्वेष्वपि मण्डपेषु हस्तोच्चा कर्तव्या । खण्डकोणेषु सूत्रसंपात- स्थानेषु षोडशस्तम्भा निखेयाः । सूत्रसंपातस्थानानां षोडशसंख्यात्वात् । मध्य- खण्डकोणचतुष्टये अष्टहस्ताः । बहिःकोणेषु द्वादशसंख्याकेषु पञ्चहस्ताः । इय- मुच्चता । वैपुल्यस्यान्यतो ग्राह्यत्वेन कुण्डोद्योतस्थमुच्यते—"सूत्रेण पञ्चाङ्गुलविस्तृतेन संवेष्ट्यमाना विपुलास्तु सर्वे ।" यद्यपीदं स्थूलत्वं तोरणस्तम्भा- नधिकृत्योक्तं शारदायां "दशाङ्गुलप्रमाणेन तत्परीणाह ईरितः" इति तथाप्यन्यत्रानुक्तत्वात्तत्सामान्यादितरेषु तथात्वमिति न्यायात्सर्वेषामिदमेव । यत्त पदार्थादर्शे "परिणाहो विशालता" इति कोशात् दशाङ्गुलव्यास- परिधिपरिमाणाः स्थूला इत्युक्तं तच्चिन्त्यं । न च परिणाहशब्दोऽनुपपन्नः । अनेकार्थपरिणाहशब्दस्यात्र परिधिवाचकत्वात् । दृष्टं च—"लिङ्गमस्तकवि- स्तारो लिङ्गोच्छ्रायसमो भवेत् । त्रिगुणः परिणाहः स्यादि"त्यादौ परिधिवाच- कस्य दृष्टत्वात् । एवमेव तुलापद्धतौ तडागोत्सर्गपद्धतौ च श्रीमज्जग- द्गुरुभट्टचरणैरप्युक्तमितिदिक् । एषां खननं स्वस्वपञ्चमांशेन । अन्यत्रापि चक्रशूलादिष्वपि पञ्चमांशेनैव खननम् । ननु खण्डकोणेषु स्तम्भदानोक्त

स्वात्तेषां षोडशसंख्यात्वादर्थात्स्तम्भानां षोडशसंख्याप्राप्तौ पुनर्व्यष्टसंख्यमिति संख्योक्तिः किमर्थमिति चेन्न। महामण्डपे स्तम्भान्तरस्यापि महत्त्वात्तत्र मण्डपदृढीकरणाय काष्ठान्तरदानस्य युक्तिसिद्धत्वात्तादृशकाष्ठानां मण्डपान्तःपातित्वं नास्तीति ज्ञापनार्थत्वात् ॥ १० ॥

नौका—एवं साङ्गोपाङ्गानि दशविधकुण्डान्युक्त्वा इदानीं मण्डपरचनाप्रकारमाह—पङ्क्त्यर्कैरित्यादि वृत्तत्रयेण। मण्डप इति। मण्डपो वक्ष्यमाणलक्षणः पङ्क्त्यर्कैः करैर्दशभिर्द्वादशभिर्वा हस्तैरल्पः। दशहस्तो द्वादशहस्तश्च कनिष्ठ इत्यर्थः। अर्केशक्रैः करैः द्वादशभिश्चतुर्दशभिर्वा हस्तैः समः द्वादशहस्तश्चतुर्दशहस्तश्च मध्यमः। नृपतिधृतिकरैः षोडशभिरष्टादशभिर्वा हस्तैरग्र्यः षोडशहस्तोऽष्टादशहस्तश्चोत्तम इत्यर्थः। अत्र द्वादशहस्तस्योभयात्मकत्वं तत्तद्विहितचक्रशूलादिमानेन संगच्छते। यत्र कनिष्ठमानेन चक्रशूलादिकं स कनिष्ठः। यत्र च मध्यममानेन तत् स मध्यम इति ज्ञेयम्। स च तुल्याम्भोऽब्ध्यस्त्रि तुल्यानि समानि अम्भोब्ध्यस्त्राणि चत्वारो भुजाः यस्य तादृशः समचतुरस्रः। इहास्मिन् त्रिविधेपि मण्डपे सुसमास्तुल्या नव खण्डा नव विभागाश्चतुर्भिश्चतुर्भिः प्रागुदगायतसूत्रैः कर्तव्याः। एषां नवखण्डानां मध्ये मध्यमः खण्डो वेदिः तत्र वेदिः कर्तव्या। सा च त्रिष्वपि मण्डपेषु हस्तोच्चा हस्तमात्रोच्चा। खण्डकोणेषु षोडशसु व्यष्टसंख्यं षोडशसंख्यं स्तम्भौघं स्तम्भकदम्बकं। तन्मध्ये उदरवेदिकोणचतुष्टये स्तम्भचतुष्टयं इभकरं अष्टहस्तात्मकं। बहिः स्तम्भद्वादशकं पञ्चहस्तात्मकं त्रिष्वपि मण्डपेष्विति भावः। एवं सर्वे षोडश। ते च सचूडाः कार्याः। तच्च स्तम्भौघं भुवि भूम्यां शरलवतः पञ्चमांशतः स्वस्वपञ्चमांशेनेत्यर्थः। खेयं प्रविष्टं कर्तव्यं। अन्यत्र चैवं अन्यत्र शूलचक्रादिष्वपि एवं पञ्चमांशेन खेयमित्यर्थः ॥ १० ॥

सिताक्षरा—अथ मण्डपं वृत्तत्रयेणाह-पङ्क्त्यर्कैरिति। अत्र मण्डपशब्देन भूमिस्तम्भवलिकादिसमुदायः। अन्यथा दशहस्तादिसंख्याया असम्भवः स्यात्। नवखण्डकरणस्य सर्वथैवासंभवाच्च। स मण्डपो दशहस्तो द्वादशहस्तश्चाल्पः। द्वादशहस्तश्चतुर्दशहस्तश्च समो मध्यमः। षोडशहस्तोऽष्टादशहस्तश्चाग्र्यः श्रेष्ठः इति। "कनीयान्दशहस्तः स्यान्मध्यमो

द्वादशोन्मितः। तथा षोडशभिर्हस्तैर्मण्डपः स्यादिहोत्तम" इति। "स्वल्पो द्वादशहस्तोर्ध्वं द्विद्विवृद्ध्या ततः क्रमात्" इति प्रतिष्ठासारसंग्रहः। "उत्तमं मानमित्याहुर्हस्तषोडशकं तथे"ति हयग्रीवपञ्चरात्रे उक्तं। तथा लिङ्गपुराणे—"अथाष्टादशहस्तेन कलाहस्तेन वा पुन"रिति। अत्रापि वर्ण-परत्वेन मण्डपा उक्तास्त आकरतो ज्ञेया इति। तुल्याम्भोदोष्णीति। तुल्यानि अम्भांसि चत्वारि दोषो भुजा यस्मिन् स तुल्याम्भोदोः तस्मिंस्तु-ल्याम्भोदोष्णीति। समचतुरस्रे इत्यर्थः। अस्मिन्मण्डपे चतुर्भिश्चतुर्भिः सूत्रै-र्नव खण्डास्तुल्यप्रमाणाः कार्याः। तेषां मध्यमः मध्यः खण्डो वेदिः। सा सर्वेष्वपि मण्डपेषु हस्तोच्चा कर्तव्या। क्रियासारे—"नवांशं मण्डपं कृत्वा मध्यांशे वेदिका मता। हस्तोन्नता च विस्तीर्णे"ति। क्रियासारे वेदिकान्य-थात्वे दोष उक्तः—"वक्रपार्श्वा निम्नमध्या परुषाद्दगशोभना। मानहीनाधि-का या सा कर्तुः कर्मविनाशिनी"ति। खण्डकोणेष्विति। खण्डकोणेषु सूत्रपातस्थानेषु षोडशस्तम्भा निखेयाः। ते मध्यखण्डकोणचतुष्टयेऽष्टहस्ताः। बहिःकोणेषु द्वादशसंख्याकेषु पञ्चहस्ता द्वादश। अष्टहस्ताः पञ्चहस्ता इत्यु-च्छ्रितिमानं। तदुक्तं जयपृच्छाधिकारे—"पञ्चहस्तोच्छ्रिताः स्तम्भाः पञ्च-मांशेन भूमिगाः। तदर्धेनाधिका मध्या वितानं तत्र कल्पये"दिति। भुवि-शरलवतः खेयमिति। एषां खननं भूम्यां निवेशनं स्वपञ्चमांशेन। अन्यत्र चैवमिति चक्रशूलादिष्वपि पञ्चमांशेन खननमित्यर्थः। तदुक्तं वास्तु शास्त्रे—"पञ्चमांशं न्यसेद्भूमौ सर्वसाधारणो विधि"रिति। "स्तम्भो-च्छ्राये शिलान्यासे सूत्रयोजनकीलके। खननेऽवटसंस्कारे प्रारम्भो वह्निगो-चरः" इत्युक्तम्। क्रियासारे—"वेणुर्यज्ञियवृक्षो वा क्रमुकः स्तम्भ-कर्मणी"ति ॥ १० ॥

सुप्रभा—एवं सर्वकुण्डसाधारणमङ्गजातमुक्त्वा साङ्गोपाङ्गं मण्डप-माह श्लोकत्रयेण—पङ्क्त्यर्कैरिति। अत्र मण्डपस्त्रिविधः पङ्क्त्यर्कैर्दशभि-र्हस्तैर्द्वादशभिर्हस्तैरल्पः कनिष्ठः। अर्कशक्रैर्द्वादशहस्तैश्चतुर्दशहस्तैः समो मध्यमः। नृपतिधृतिकरैः षोडशहस्तैरष्टादशहस्तैरग्र्यः श्रेष्ठः। अत्र द्वादश-हस्तात्मकमण्डपस्य कनिष्ठमध्यमद्वयकोटिनिवेशस्तु पञ्चकुण्ड्यामल्पत्वमेक-कुण्ड्यां मध्यमत्वं ज्ञापयति। एते च पक्षाः शक्त्यपेक्षया वा नवपञ्चकुण्ड्य-

पेक्षया वाऽनुष्ठेयाः। द्विहस्ताद्यात्मकनवपञ्चैककुण्ड्यादौ मण्डपोपि "द्विघ्नो-द्विघ्ने" इत्यनया रीत्या वर्धनीयः। तत्र स्तम्भवलिकाद्यौचित्यात् "अर्थात्परिमाण"मिति कात्यायनवचनात्समुन्नेयमिति दिक्। इह मण्डपे तुल्याः समाः अम्भांसि चत्वारो दोषो भुजा यस्मिंस्तादृशे। समचतुरस्रे भुजे मण्डपे इत्यर्थः। नव खण्डा भागाः सुसमाः सुतरां समाश्चतुरस्रा यथा संपद्यन्ते तथा कार्याः। चतुर्भिश्चतुर्भिः सूत्रैः नव खण्डाः समप्रमाणका भवन्तीति। एवं नवखण्डानां मध्यमः खण्डो वेदिर्वेदितव्या। वेदिशब्देन देवतास्थापनस्थानमुच्यते। सा हस्तोच्चा कर्तव्या। कुण्डरत्नावल्यादिग्रन्थान्तरे वेदिविशेषान्तराण्युक्तानि—"रुद्रादौ हवनेऽथ वेदिरथवा वेदाङ्गनागैः करैरेकद्वित्रिभिरङ्गुलैश्च कथिता राजादिषु न्यूनता। पादोच्चाऽथ तुलाविधौ तु नवभि ९ र्नागैः ८ स्वरै ७ र्वापि सा द्वाभ्यां २ सार्धकरेण १॥ हस्तविमिताप्युच्चाथ वाप्यादिषु" इति। सिद्धान्तशेखरे—"यावान्कुण्डस्य व्यासस्तावती वेदि"रिति। इयं च प्रधानवेदिः। मातृकावेदिर्योगिनीवेदिश्चाग्नेय्यां हस्तमात्रा। ग्रहपीठं वप्रद्वययुतमेकहस्तमीशान्यां। क्षेत्रपालपीठं हस्तमात्रं हस्तार्धोच्चं वायव्यां। वास्तुवेदिर्हस्तमात्रा हस्तार्धोच्चा नैरृत्यां। वचनान्याकरतो ज्ञेयानि विस्तरभिया नात्र लिख्यंते। खण्डकोणेषु षोडशसूत्रपातस्थानेषु। तत्रोदरे मध्यखण्डकोणचतुष्के इभकरमष्टहस्तं स्तम्भचतुष्टयं। बहिर्द्वादशसु खण्डकोणेषु पञ्चहस्तं स्तम्भद्वादशकं। एवं स्तम्भौघं स्तम्भसमुदायं द्व्यष्टसंख्यं षोडसंख्यं जानीयात्। अष्टहस्तं पञ्चहस्तमिति स्तम्भोच्छ्रायमानं। स्थौल्यं तु कुण्डोद्योते—"सूत्रेण पङ्क्त्यङ्गुलविस्तृतेन संवेष्ट्यमाना विपुलास्तु सर्वे" इति। तथा सर्वेपीमे स्तम्भा उक्तमानाद्बहिः सचूडाः कार्याः। एतत्स्तम्भषोडशकं भुवि मण्डपभूमौ शरलवतः स्वस्वपञ्चमांशेन खेयं रोपणीयं। एते सर्वे स्तम्भाः स्वस्वपञ्चमांशेन भूमौ निवेशयितव्या इत्यर्थः। यत्तु केचन—"बाह्यविदिक्कोणस्थस्तम्भचतुष्टयं मण्डपभूमेर्बहिर्निखनन्ति तन्न समञ्जसं। लोके गृहनिर्माणादौ नहि वेदिकां परित्यज्य वीथ्यां स्तम्भस्थापनं दृष्टचरं भवति। यथा लौकिकं तथैव वैदिकमितिन्यायेन मण्डपभूमावेवोचितमिति। अन्यत्र चैवं। अन्यत्र शूलचक्रादिषु ध्वजपताकादिष्वपि। एवं स्वस्वपञ्चमांशेन खननं निवेशनं कर्तव्यमिति भावः। स च मण्डपस्योपविष्टः छेदोऽन्तर्भागसहितो विन्यासमुखेन प्रदर्श्यते इति ॥१०॥

मंडपभूमिविन्यासः



द्वात्रिंशत्स्तम्भचूडास्ववनयवलिकास्ता जिनाः खण्डबाहु-
ष्वष्टौ स्युर्मण्डपस्य श्रुतिषु सशिखरो मध्यभागोऽस्य यस्मात् ।
दिक्षु द्वारो द्विहस्ता उपरि चतुरिभैरङ्गुलैरेधिताःस्यू
रम्भास्तम्भध्वजाद्यैः कटपिहितममुं शोभयाम्भोघटाद्यैः ११

मरीचिका—एषां मण्डपानां अङ्गान्तराण्याह—अत्र सर्वेपि स्तम्भाः सचूडाः कर्तव्याः । तेषु वलिकाख्यानि उभयच्छिद्राणि दारूणि तत्तत्खण्डसमप्रमाणानि स्तम्भचूडास्ववनयेत् । एवं प्राच्यां पङ्क्तौ त्रिभिर्वलिकाभिः स्तम्भचतुष्टयं ग्रन्थनीयं । एवं सर्वास्वपि स्तम्भपङ्क्तिषु वलिकाख्यानि दारूणि दत्वा सर्वान्स्तम्भान्परस्परं ग्रन्थयेत् । एवं स्तम्भचूडासु ऋज्व्यश्चतुर्विंशतिर्वलिका भवन्ति । तथा चतस्रश्च बाह्यमध्यस्तम्भानां चतस्रः कर्णवलिका भवन्ति । शिखरवलिकाश्चतस्रो मध्यस्तम्भचूडाभ्यः मध्यस्थितं शिखरं यथा प्रविशन्ति तथा कर्तव्याः । मण्डपस्य प्रतिदिशं मध्ये द्वाराणि कर्तव्यानि । तानि चाल्पे मण्डपे द्विहस्तानि । मध्यमे मण्डपे चतुरङ्गुलाधिकद्विहस्तानि । उत्तमेऽष्टाङ्गुलाधिकद्विहस्तानि । द्वाभ्यां स्तम्भाभ्यामेकया वलिकया च प्रतिदिशं कर्तव्यानि । शेषः स्पष्टः ॥ ११ ॥

दीधितिः—एवं मण्डपानामङ्गान्तरमाह—द्वात्रिंशदिति । अग्रयोः सरन्ध्रं स्तम्भचूडयोस्तिर्यङ्निवेश्यं दारु वलिकेत्युच्यते । ताश्च द्वात्रिंशद्भवन्ति । तासु खण्डबाहूनामुपरि चतुर्विंशतिर्भवन्ति । तत्र बहिःस्तम्भेषु द्वादश आन्तरेषु चतस्रः । आन्तरस्तम्भात्प्रत्येकं तदग्रगपार्श्वगबाह्यस्तम्भेषु तिर्यग्द्वेद्वे इत्यष्टौ एवं जिनाः । मण्डपस्य श्रुतिष्वष्टौ बाह्यकोणस्तम्भादान्तरस्तम्भपर्यन्तं चतस्रः । अथान्तरस्तम्भाग्रेषु एकतोरन्ध्राश्चतस्रो निवेश्यैकं स्थूलं काष्ठं कदलीकोरकाकारं कृत्वा तन्मूले परितो रन्ध्राणि कृत्वा तत्र प्रविष्टैर्वलिकेतराग्रैस्तत्काष्ठं ऊर्ध्वाग्रं तथोन्नामनीयं यथा वा वलिकाः पूर्वश्रुतिवलिकामार्गानुगाः स्युः । तत्काष्ठमूलमध्याल्लम्बसूत्रं च मण्डपगर्भे यथा पतेत् स शिखरो मध्यभागोस्य यस्मात् अस्य मण्डपस्य मध्यभागः सशिखरः यस्मादस्ति तस्मादुक्तरीत्या कर्तव्यं । अथ द्वाराण्याह—दिक्षु द्वारो द्विहस्ता इति । दिक्षु द्विहस्तप्रमाणानि चत्वारि द्वाराणि कार्याणि । अल्पे मण्डपे उपरि मध्यमोत्तमयोः क्रमेण चतुरिभैरङ्गुलैरेधिताः । मध्यमे चतुरङ्गुलाधिकद्विहस्तानि । उत्तमेऽष्टाङ्गुलाधिकद्विहस्तानि द्वाभ्यां स्तम्भाभ्यां एकया वलिकया च कर्तव्यानि । मण्डपशोभामाह—कटपिहितममुं शोभयाम्भोघटाद्यैरिति । अमुं मण्डपं द्वारवर्जं कटैः पिहितं कृत्वा रम्भास्तम्भध्वजाद्यैः अम्भोघटाद्यैश्च शोभय शोभितं कुरु । अत्रोभयत्रादिपददानं अन्यत्रोक्तस्य सर्वस्य ध्वजपताकादेः संग्रहार्थं । तच्च क्रियासारे—"नारिकेलफलैर्वापि पल्लवैर्वाथ वेणुभिः । आच्छाद्य मण्डपं सर्वं द्वारवर्जं तु सर्वतः ।" वास्तुशास्त्रे—"कटैः सद्भिस्तु संछाद्या विजयाद्यास्तु मण्डपाः । हयग्रीवपञ्चरात्रे—"दर्पणैश्चामरैर्घण्टैः स्तम्भान्वस्त्रैर्विभूषये"दिति । अत्रोक्तं नारिकेलफलं "सफलैः कदलीस्तम्भैः क्रमुकैर्नारिकेलजैः" इति श्लोकोक्तं अन्यदुपलक्षयति । सिद्धान्तशेखरे—"चूतपल्लवमाल्याढ्यं वितानैरुपशोभितम् । विचित्रवस्त्रसंछन्नं पट्टकूलविभूषितमि"ति । अन्यथात्वे पञ्चरात्रे दोष उक्तः—"अनुक्तसाधनैः क्लृप्तो यदि वा कुटिलाकृतिः । मानाधिकोऽथवा न्यूनो मण्डपः कर्तृनाशनः । आख्यातसाधनैः क्लृप्तः सरलः सममानकः । मनोज्ञो मण्डपो योऽसौ कर्मकर्तुः शुभावहः" इति । प्रतिष्ठासारसंग्रहे—"पीतरक्तादिवर्णाश्च पञ्चहस्ता ध्वजाः स्मृताः । द्विपञ्चहस्तदण्डैस्ते वंशजैः संयुता हि ते" इति । अत्रादिपदेन अरुणकृष्णनीलश्वेतसितश्वेतासिता वर्णा ग्राह्याः । क्रियासारे—"मातङ्गवस्तमहिषसिं-

हमत्स्यैणवाजिनः। वृषभं च यथान्यायं ध्वजमध्ये क्रमाल्लिखेत्" । अकरणे दोषः पञ्चरात्रे–"ध्वजेन रहिते ब्रह्मन्मण्डपे तु वृथा भवेत्। पूजायागादिकं सर्वं जपाद्यं यत्कृतं बुधैः।" ध्वजादिरोपणफलं तत्रैव–"यं कृत्वा पुरुषः सम्यक्समस्तफलमाप्नुया"दिति । पताकाश्च सारसंग्रहे–"प्रतिकुण्डं पताकास्तु प्रोक्ताः शास्त्रार्थकोविदैः। सप्तहस्ताः पताकाः स्युः सप्तमांशेन विस्तृताः। लोकपालानुपूर्व्येण नवमी तुहिनप्रभा। पताकाश्च ध्वजाश्चापि गन्धपुष्पसमन्विता" इति । महाध्वजः परशुरामनिबन्धे—"त्रिहस्तविततो दीर्घो दशहस्तो विचित्रितः। चामरेणान्वितः शीर्षे प्रान्ते सक्षुद्रघण्टिकः। दशहस्ते धृते दण्डे पुष्पगन्धैः समन्वित" इति ॥ ११ ॥

**पद्मिनी**—अत्र सर्वेपि स्तम्भाः सचूडाः कर्तव्याः। तासु चूडासु द्वात्रिंशत्संख्याकानि उभयतः सच्छिद्राणि तत्तत्स्तम्भान्तरप्रमाणानि वलिकाख्यानि काष्ठान्यवनयेत्। तत्र चतसृभिर्वलिकाभिर्वेदिकोणगतस्तम्भचतुष्टयं ग्रन्थनीयं। एवं त्रिभिस्त्रिभिर्वलिकाभिः प्रतिदिशमाग्नेयादिकोणमारभ्य पुनराग्नेयीकोणपर्यन्तं स्तम्भद्वादशकं ग्रन्थनीयम्। सर्वत्र मण्डपस्य प्रदक्षिणकार्ये आग्नेयमारभ्य कर्तव्यमिति नियमात्। अत्रार्थे संमतिः–"विन्यसेद्वेदिकोणेषु स्तम्भान्वेदस्वरूपकान्। आग्नेयादिक्रमेणैवे"ति । वेदिकोणेष्वित्युपलक्षणं । उक्तं च– "स्तम्भोच्छ्राये शिलान्यासे सूत्रयोजनकीलके। खननावटसंस्कार आरम्भो वह्निगोचर" इति। एतेन बाह्यस्तम्भनिवेशनाद्यपि तेनैव क्रमेण भवतीत्यर्थः। एवं बाह्याग्नेयकोणस्तम्भात् वेदिगताग्नेयकोणस्तम्भपर्यन्तमेकं वलिकाख्यं काष्ठं कर्णरूपं निधेयं। बाह्यकोणस्तम्भसमीपस्थस्तम्भद्वयादारभ्य वेदिकोणगताग्नेयकोणस्तम्भपर्यन्तं वलिकाख्यं काष्ठद्वयं निधेयं । एवं कोणत्रयेपि। एवं चतसृभिर्वलिकाभिर्मध्यशिखरभागो यथा भवति तथा कर्तव्यः तथा च द्वात्रिंशद्वलिकाख्यानि काष्ठानि भवन्ति । अस्य मण्डपस्य प्रतिदिशं मध्ये द्वाराणि कर्तव्यानि। तानि चाल्पमण्डपे द्विहस्तानि। मध्यमे चतुरङ्गुलाधिकद्विहस्तानि। उत्तमेऽष्टाङ्गुलाधिकद्विहस्तानि। तानि शाखोदुम्बरसहितानि। उक्तं च–"तेषां मध्यकाष्ठानां चोपरि आच्छादनायान्यानि काष्ठानि देयानि। दिङ्मध्यसूत्रं च द्वारं मध्यं प्रकल्प्य ततश्चतुरङ्गुलाधिकहस्तप्रमाणमुभयतो गृहीत्वाष्टाङ्गुलाधिकद्विहस्तविस्ताराणि देहल्युत्तरोदुम्बरशाखायुतानि प्रागादिदिग्गतानि चत्वारि द्वाराणि कृत्वा तद्वर्जं परित उपरि च सत्कटैर्मण्डप-

इत्याद्यः। नारायणभट्टकृतजलाशयोत्सर्गे—"कनीयसं द्विकरं स्याच्चतुरङ्गुलवृद्धितः। मध्यमोत्तमयोर्द्वारं शाखोदुंबरसंयुत"मिति। अमुं मण्डपं द्वारवर्जं कटपिहितं कदलीस्तम्भध्वजाद्यैः अम्भोघटाद्यैश्च शोभय शोभायुक्तं कुर्वित्यर्थः। प्रथमाद्यपदेन पताकादीनां संग्रहः। तास्तु कुण्डोद्योतटीकयोः—"पीता रक्ता श्यामा कृष्णा श्वेताथ धूम्रहरिते स्तः। रक्तेत्यष्टौ दिक्षु प्रागीशान्यान्तरेऽभ्रनिभा। रक्ता रक्षोम्बुपयोरुद्वयस्त्रा एता मुनिकरदीर्घास्ताः। मुनिलवविस्तृतिमत्यो दशकरवंशैः पताकाः स्युः। अथ करपञ्चकदीर्घा विततिद्विकरा ध्वजाश्चतुष्कोणाः। मध्ये सकिङ्किणीको ध्वजस्य दीर्घो भवेद्वंशः"। "रम्भास्तम्भैराम्रपत्रतोरणैः कुसुमैः फलैः। चामरोल्लोचमुकुरैर्मण्डनीयोऽथ मण्डपः।" उल्लोचो वितानं। द्वितीयाद्यपदं तु ध्वजादिशोभानन्तरमेव घटानयनमिति ज्ञापनाय ॥ ११ ॥

नौका—अग्रे किं कर्तव्यमित्याह—द्वात्रिंशदिति। द्वात्रिंशद्वलिकाः उभयतः सच्छिद्राणि दारूणि तत्खण्डसमदीर्घाणि। तेषां वलिकेति संज्ञा। ताः स्तम्भचूडासु स्तम्भमस्तकेष्ववनय योजय। ता वलिकाः खण्डबाहुषु नवखण्डानां ये बाहवः भुजास्तेषु जिनाश्चतुर्विंशतिः मण्डपस्य श्रुतिषु कोणेषु चाष्टौ स्युः। एवं द्वात्रिंशदिति भावः। अस्य मण्डपस्य मध्यभागः। अन्तःस्तम्भचतुष्टयमध्य इत्यर्थः। यस्मात्सशिखरः येन शिखरयुक्तो भवति तथा कर्तव्यः। तथाच प्रागायतासु चतुःसूत्ररेखासु एकैकस्य तिस्रस्तिस्रः मिलित्वा सर्वा द्वादश। एवमुदगायतरेखाचतुष्टये द्वादश। तथा मण्डपकोणस्थबाह्यस्तम्भचतुष्टयादन्तःस्तम्भचतुष्टयपर्यन्ताः कर्णवलिकाश्चतस्रः। एवं द्वात्रिंशद्वलिकाः हे मतिमन् अवनय प्रथयेत्यर्थः। इदानीं द्वारकरणप्रकारमाह—दिक्ष्विति। अस्य मण्डपस्य दिक्षु प्रागादिचतुर्षु दिक्षु द्वारो द्वाराणि द्विहस्ताः द्विहस्तानि कनिष्ठमण्डपे स्युः। उपरि मध्यमोत्तममण्डपयोस्तु क्रमाच्चतुरिभैश्चतुर्भिरष्टभिश्चाङ्गुलैरेधिता वर्धिताः स्युः। मध्यमे सचतुरङ्गुलद्विहस्तानि द्वाराणि स्युः। तानि च द्वाभ्यां द्वाभ्यां स्तम्भाभ्यां एकैकया वलिकया च प्रतिदिशं कर्तव्यानि। ततः कटपिहितं कटैर्वंशसंभवैर्नारिकेलदलविकारैर्वा पिहितं उत्तमे साष्टाङ्गुलद्विहस्तानि द्वाराणि वर्जयित्वा सर्वत आच्छादितं अमुं पूर्वोक्तं मण्डपं रम्भास्तम्भध्वजाद्यैः कदलीस्तम्भकेतवादिसाधनैः अम्भोघटाद्यैः जलपूर्णकुम्भाद्यैः साधनैश्च शोभय शोभितं कुर्वित्यर्थः ॥ ११ ॥

मिताक्षरा—अथ स्तम्भोपरि वलिकास्थापनाद्याह—द्वात्रिंशदिति। अत्र सर्वेपि स्तम्भाः सचूडाः कर्तव्याः। तासु चूडासु द्वात्रिंशत्संख्याकानि वलिकाख्यानि काष्ठानि उभयतः सच्छिद्राणि तत्तत्स्तम्भान्तरालप्रमाणानि अवनय निवेशय। तत्र चतसृभिर्वलिकाभिर्विदिक्कोणगतस्तम्भचतुष्टयं ग्रन्थनीयं। एवं तिसृभिस्तिसृभिर्वलिकाभिः प्रतिदिशमाग्नेयकोणमारभ्य पुनराग्नेयकोणपर्यन्तं स्तम्भद्वादशकं ग्रन्थनीयं। "विन्यसेद्वेदिकोणेषु स्तम्भान्वेदस्वरूपकान्। आग्नेयादिक्रमेणैवे"त्युक्तं। एतेन बाह्यस्तम्भनिवेशनाद्यपि तेनैव क्रमेण भवतीत्यर्थः। एवं बाह्याग्नेयकोणस्तम्भाद्वेदिगताग्नेयकोणस्तम्भपर्यन्तमेकं वलिकाख्यं काष्ठं कर्णरूपं निधेयं। बाह्यकोणस्तम्भसमीपस्थस्तम्भद्वयादारभ्य वेदिकोणगताग्नेयकोणस्तम्भपर्यन्तं वलिकाख्यं काष्ठद्वयं निधेयं। एवं कोणत्रयेपि। एवं चतसृभिर्वलिकाभिर्मध्यशिखरभागो यथा भवति तथा कर्तव्यः। तथाच द्वात्रिंशद्वलिकाख्यानि काष्ठानि भवन्तीत्यर्थः। शारदातिलके—"षोडशस्तम्भसंयुक्तं चत्वारस्तेषु मध्यमाः। अष्टहस्तसमुच्छ्रायाः संस्थाप्या द्वादशाभितः। पञ्चहस्तप्रमाणास्ते निश्छिद्रा ऋजवः समा" इति। वलिकानिधानमुक्तं कुण्डकल्पलतायां—"वलिकामूर्ध्वतस्तेषां न्यस्य मध्योच्छ्रितं सृजेत्। द्वादशानामपि तथा चूडासु वलिका न्यसेत्। मण्डपायामविस्तारा मध्यस्तम्भाग्रतो न्यसेत्। कोणस्तम्भाग्रसंलग्नाश्चतस्रो वलिकाः पुरा। द्वे द्वे तूभयतो न्यस्य तासां स्तम्भाग्रसंस्थिते। वलिका अपि संस्थाप्याः कृतोपर्यङ्कुशाकृती"ति। द्वाराण्याह—दिक्ष्विति। दिक्षु पूर्वदक्षिणपश्चिमोत्तरासु द्वारः द्वाराणि। तानि चाल्पमण्डपे द्विहस्तानि। उपरि मध्यमोत्तमयोः चतुरिभलवैर्वर्धितानि स्युरित्यर्थः। तत्र मध्यमे चतुरङ्गुलाधिकद्विहस्तानि। उत्तमे इभलवैः अष्टाङ्गुलाधिकद्विहस्तानि। तानि शाखोदुम्बरसहितानि। उक्तं च—"कनीयसं तु द्विकरं चतुरङ्गुलवृद्धितः। मध्यमोत्तमयोर्द्वारं शाखोदुम्बरसंयुत"मिति। तथा जयपृच्छाधिकारे—"द्विहस्तमायतद्वारं शाखोदुम्बरसंयुत"मिति। एवमेवाशयः श्रीमद्भट्टनारायणचरणानां जलाशयोत्सर्गपद्धतौ॥ अथमण्डपाच्छादनं मण्डपशोभाकरणं चाह—रम्भेति। अमुं मण्डपं कटपिहितं कटैराच्छादितं कुर्यात्। तदुक्तं—"परितश्चोपरि शुभैः कटैस्तं छादयेदथे"ति। आच्छादनं द्वारवर्जं। क्रियासारे—"नारिकेलदलैर्वापि

पल्लवैर्वाथ वेणुभिः। आच्छाद्या मण्डपाः सर्वे द्वारवर्जं तु सर्वत" इति। रम्भास्तम्भैः कदलीस्तम्भैः। ध्वजाद्यैरित्यादिपदेन पताकानां मध्यबृहद्ध्वजस्य च संग्रहः। तल्लक्षणानि प्रतिष्ठासारसंग्रहे—"पीतरक्तादिवर्णांश्च पञ्चहस्ता ध्वजाः स्मृताः। द्विपञ्चहस्तैर्दण्डैस्ते वंशजैः संयुता मता" इति। क्रियासारे—"पूर्वाद्यष्टहरित्स्वष्टौ ध्वजान्संस्थापयेत्क्रमात्। तेषां हस्तद्वयव्यासो मध्यं च करसंमित"मिति। तेषु दिगीशवाहनान्यङ्कनीयान्यपि तत्रैव—"मातङ्गबस्तमहिषसिंहमत्स्यैणवाजिनः। वृषभं च यथान्यायं ध्वजमध्ये क्रमाल्लिखेत्। अथवा दिग्गजानष्टावैरावतपुरःसरान्। ध्वजेषु विलिखेदुक्तधातुभिश्च सलक्षणानि"ति। ध्वजावश्यकत्वं प्रतिष्ठासारसंग्रहे—"ध्वजेन रहिते ब्रह्मन् मण्डपे तु वृथा भवेत्। पूजाहोमादिकं सर्वं जपाद्यं यत्कृतं बुधै"रिति। पताका अपि सारसंग्रहे—"प्रतिकुण्डं पताकास्तु प्रोक्ताः शास्त्रार्थकोविदैः। सप्तहस्ताः पताकाः स्युः सप्तमांशेन विस्तृताः। लोकपालानुवर्णेन नवमी तुहिनप्रभे"ति। सोमशम्भुरपि—"दशहस्ताः पताकानां दण्डाः पञ्चांशवेशिताः। पताका आयुधाङ्काश्च पुष्पचन्दनचर्चिता" इति। लोकपालवर्णा मात्स्ये—"इन्द्रः पीतो यमः श्यामो वरुणः स्फटिकप्रभः। कुबेरश्च सुवर्णाभो वह्निश्चापि सुवर्णभाः। तथैव निर्ऋतिः श्यामो वायुर्धूम्रः प्रशस्यते। तथैवेशः सितः प्रोक्त"इति। लोकपालायुधानि तु—"वज्रं शक्तिर्दण्डः खड्गः पाशोऽङ्कुशो गदा त्रिशूलश्चे"ति। नवम्यपि पताका आचार्यकुण्डसमीपे निवेश्येति कुण्डकल्पलता। नवमध्वजमानमुक्तं प्रतिष्ठाकाण्डे—"ध्वजस्तु द्विगुणः प्रोक्तो मध्यमस्तुहिनप्रभः। क्षुद्रघण्टान्वितस्तस्य वेणुः षोडशहस्तक" इति। द्विगुणः पूर्वध्वजापेक्षया ह्यायामविस्ताराभ्यामिति ज्ञेयम्। तं मण्डपं अम्भोघटाद्यैश्च शोभय। शोभायुक्तं कुर्वित्यर्थः। अत्राद्यादिपदेन शोभासाहित्यं ग्राह्यम्। तदुक्तं सिद्धान्तशेखरे—"चूतपल्लवमालाढ्यं वितानैरुपशोभितम्। विचित्रवस्त्रसंछन्नं पट्टकूलादिभूषितम्। सफलैः कदलीस्तम्भैः क्रमुकैर्नारिकेलजैः। फलैर्नानाविधैर्भोज्यैर्दर्पणैश्चामरैरपि। भूषितं मण्डपं कुर्याद्दलपुष्पसमन्वित"मिति। घटैः दिग्द्वारतोरणकलशैः। उक्तं च हयशीर्षपञ्चरात्रे—"तोरणस्तम्भमूलेषु कलशान्मङ्गलाङ्कुरान्। प्रदद्या"दिति। तथा मन्त्रमुक्तावल्यां—"मण्डपे कलशौ द्वौ द्वौ द्वारदेशे निवेशयेत्। गलितोदकसंपूर्णावाम्रपल्लवशोभितौ। पूज्या द्वारस्थकुम्भेषु शक्राद्यास्तन्मनूत्तमै"रिति। मनुर्मन्त्रः। तथाच तत्रैव—"मण्डपस्य तु कोणस्थकलशेषु क्रमादमी। अमृतो दुर्जयश्चैव सिद्धार्थो मङ्गलस्तथा। मन्त्रैस्तु लोकपालानां ध्वजांश्चैव निवेशये"दिति ॥ ११ ॥

सुप्रभा—द्वात्रिंशदिति । स्तम्भचूडासु प्रागुक्तषोडशस्तम्भशिखासु द्वात्रिंशत्संख्याका उभयतः सच्छिद्रास्तत्तत्स्तम्भान्तरप्रमाणकाः वलिकास्तिर्यक्काष्ठविशेषाः भवनय स्थापय । प्रथमं मध्यखण्डस्तम्भचतुष्टयोपरि चत्वारि तिर्यक्काष्ठानि दत्त्वा पश्चात् आग्नेयीं दिशमारभ्य पुनराग्नेयीदिक्पर्यन्तं प्रादक्षिण्येन द्वादश तिर्यक्काष्ठानि दत्त्वा अनन्तरं मध्यस्तम्भचतुष्टयात्प्रतिदिशं द्वे द्वे तिर्यक्काष्ठे दातव्ये भवतः । अनन्तरं मण्डपस्य श्रुतिषु अष्टौ तिर्यक्काष्ठानि दद्यात् । तदेवाह । ता वलिकाः खण्डबाहुषु जिनाश्चतुर्विंशतिसंख्याकाः स्युः । खण्डबाहूनां चतुर्विंशतिसंख्याकत्वात् । तथा मण्डपस्येति पदं उभयत्रान्वेति । श्रुतिषु कर्णेषु अष्टौ वलिकाः स्युः । एवं द्वात्रिंशद्वलिका भवंति । ननूक्तं कार्यं दीर्घदीर्घवलिकाप्रदानेन विंशतिसंख्याभिर्वलिकाभिर्निष्पद्यते तत्किमर्थं द्वात्रिंशदित्युक्तमितिचेन्न । तथा मा भवतु किंतु द्वात्रिंशदेव वलिका भवन्त्वेतदर्थमेवोक्तं । अन्यथा मूलवचनोक्तसंख्याया वैयर्थ्यापत्तेर्नियमादृष्टहानिः स्यात् । यस्मादस्य मण्डपस्य मध्यभागः मध्यखण्डस्तम्भचतुष्टयान्तर्भागः सशिखरोऽस्ति शिखरयुक्तो लोके दृष्टचरः । तस्मात्स मध्यभागो यथा शिखराकारो भवेत्तथा कर्तव्य इत्यर्थः । शिखरप्रमाणं क्वापि नोक्तं अतः "अर्थात्परिमाण"मिति सामान्यकातीयपरिभाषया यत्र मण्डपे यदनुरूपं तद्ग्राह्यम् । अस्य मण्डपस्य दिक्षु प्रागादिचतुर्दिक्षु द्वारो द्वाराणि कर्तव्याः । तत्राल्पे मण्डपे द्वाराणि द्विहस्तानि । उपरि मध्ये उत्तमे च मण्डपे चतुर्भिः इभैरष्टाभिश्चाङ्गुलैरेधिता वर्धिता द्वारो भवेयुः । मध्यमे मण्डपे चतुरङ्गुलाधिकद्विहस्तात्मकानि चतुर्दिक्षु चत्वारि द्वाराणि । उत्तमे मण्डपेऽष्टाङ्गुलाधिकद्विहास्तात्मकानि चतुर्दिक्षु चत्वारि द्वाराणि । चतुर्दिक्षु दिक्सूत्रं द्वारमध्यं कल्पयित्वा द्वाभ्यां स्तम्भाभ्यामेकया वलिकया च चत्वारि द्वाराणि कर्तव्यानीत्यर्थः । अत्र केचन उपरिष्टात्फलकाख्यतिर्यक्काष्ठवदधस्तादपि देहल्याख्यं तिर्यक्काष्ठं निवेशयंति तत्र मूलानुपलंभाद्ग्रंथकर्त्रा नोक्तं । अमुं मण्डपं द्वाराणि वर्जयित्वा "अनाहूतोऽध्वरं गच्छेद्दिदृक्षाकौतुकं यदि" इति न्यायेन–जनानां यागं प्रेक्षितुं सुशकैः कटाद्यैर्वंशनिर्मितजालिकाद्यैः पिहितं सर्वत आच्छादितं कुरु । तथा तं रम्भास्तम्भध्वजाद्यैः कदलीस्तम्भैर्ध्वजैश्च । अत्रादिशब्देनान्यान्यपि शोभाकराणि पताकाआदर्शादिसाधनानि संगृहीतव्यानि । तथा अम्भोघटाद्यैः मण्डपप्रतिष्ठोक्तकलशस्थापनादिभिः शोभय सुरम्यं शोभितं कुर्वित्यर्थः । तदुक्तं क्रियासारे—"नारिकेलफलैर्वापि पल्लवैर्वाथ वेणुभिः । आच्छाद्य मण्डपं सर्वं द्वारवर्जं तु सर्वतः" । वास्तुशास्त्रे—" कटैस्तु सन्निः

संछाद्य विजयाद्यास्तु मण्डपाः” इति । सिद्धान्तशेखरे—“चूतपल्लवमाल्याढ्यं वितानैरुपशोभितम् । विचित्रवस्त्रसंछन्नं पट्टकूलविभूषितम्” इति । पञ्चरात्रे—“दर्पणैश्चामरैर्घण्टैः स्तम्भान्वस्त्रैर्विभूषयेदि”ति । उक्तमानान्न्यूनातिरिक्तान्यथा मण्डपकरणे दोष उक्तः पञ्चरात्रे—“अनुक्तसाधनैः क्लृप्तो यदि वा कुटिलाकृतिः । मानाधिकोऽथवा न्यूनो मण्डपः कर्तृनाशनः । आख्यातसाधनैः क्लृप्तः सरलः सममानकः । मनोज्ञो मण्डपो योऽसौ कर्म कर्तुः शुभावहः” इत्यादि । इति ॥ ११ ॥ (१)

मंडपस्य तिष्ठद्विन्यासः



(१) अत्र मरीचिका व्याख्या पुस्तके “लोकेशाशासु” इति पद्यं सङ्ग्राह्यमधिकं १२ द्वादशपद्यत्वेन दृश्यते ॥

लोकेशाशासु पीतारुणगगनहरिच्छ्वेतकृष्णार्जुनाच्छा-
न्मेघारक्तान्ध्वजान्द्वीषुकरपरिमितान्वाहिनो क्वाद्रिहस्ताः ।
लोकेशास्त्राः पताकास्तनुहि दशकरे वंशशीर्षेऽथवाऽल्पाः
केतुं रम्यं विचित्रं त्रिदशमितकरं दीर्घवंशे च शैवे ॥ १२ ॥

मरीचिका—ध्वजपताकानिवेशनं महाध्वजनिवेशनं च द्वादशावृत्तेनाह—लोकेशाशास्विति । लोकेशाशासु ध्वजान्पताकाश्च तनुहि । त्वमिति शेषः । पूर्वदिक्तः स्थापयेदित्यर्थः । कीदृशान्–पीतारुणगगनहरिच्छ्वेतकृष्णार्जुनाच्छान्मेघारक्तान् । पीतः प्रसिद्धः । अरुणो रक्तः । गगनं कृष्णः । हरिन्नीलः । श्वेतः शुभ्रः । कृष्णः प्रसिद्धः । अर्जुनः श्वेतः । अच्छः श्वेतः । मेघो धूम्रवर्णः । आरक्तः प्रसिद्धः । पुनः कीदृशान् । द्वीषुकरपरिमितान् हस्तद्वयविस्तारान् पञ्चहस्तदीर्घान् । पुनः कीदृशान् । वाहिनः गजमेषमहिषसिंहमकरमृगाश्ववृषयुक्तान् । कीदृशाः पताकाः । क्वाद्रिहस्ताः एकहस्तसप्तहस्तविस्तारायामाः । पुनः कीदृशाः । लोकेशास्त्राः दिक्पतिशस्त्राणि वज्रशक्तिदण्डखड्गपाशाङ्कुशगदाशूलानि तैः सहिताः दशकरप्रमिते वेणुशिरसि स्थापयेदित्यर्थः । अथ सर्वास्ताः । अल्पाः कुरु शक्त्युत्साहसदृशीः अर्थात् ध्वजानपि तादृशान्कुरु । त्रिदशमितकरं करत्रयव्यासं दशहस्तदीर्घं विचित्रं नानावर्णं रम्यं सुन्दरं च महाध्वजं शैवे दिग्भागे दीर्घवंशोपरि तनुहि स्थापय ॥ १२ ॥

सुप्रभा—इदानीं रम्भास्तम्भध्वजाद्यैरित्यनेन सूचितं ध्वजपताकानिवेशनमाह–प्रक्षिप्तेनैकेन श्लोकेन—लोकेशाशास्विति । लोकेशानामिन्द्रादिदिक्पतीनां आशासु दिक्षु क्रमेण प्राच्यादिदिक्तः पीतारुणगगनहरिच्छ्वेतकृष्णार्जुनाच्छान् मेघारक्तान् । पीतश्चारुणश्च गगनं च हरिच्च श्वेतश्च कृष्णश्चार्जुनश्चाच्छश्च मेघश्चारक्तश्चेति द्वन्द्वः । पीतादिशब्दा वर्णवाचकाः । पीतः प्रसिद्धः । अरुणो रक्तः । गगनं कृष्णः । हरिन्नीलः । श्वेतः शुक्लः । कृष्णः प्रसिद्धः । अर्जुनः शुक्लः । अच्छः शुक्लः । मेघो धूम्रः । आरक्त ईषद्रक्तः । द्वीषुकरपरिमितान् । द्वाभ्यां हस्ताभ्यां विततान् पञ्चहस्तैर्दीर्घान् । वाहिनः प्राच्यादिक्रमेण गजमेषमहिषसिंहमकरमृगाश्ववृषैर्वाहनैरुपेतान् ध्वजान् । वंशानां वेणूनां शीर्षे मस्तके । तनुहि विस्तारय । स्थापयेत्यर्थः । पूर्ववद्

प्राच्यादिक्रमेण पीतरक्तकृष्णनीलशुक्लकृष्णशुक्लश्वेतधूम्रेषद्रक्तवर्णाः । क्वद्रि-हस्ताः एकहस्तेन वितताः सप्तहस्तैर्दीर्घाः । लोकेशानामिन्द्रादिदिक्पालानां अस्त्राणि सन्ति यासु तादृशाः वज्रशक्तिदण्डपाशाङ्कुशगदाशूलकमण्डलुचक्राङ्किता इत्यर्थः। पताकाः वंशमूर्ध्नि वितनुहि स्थापयेत्यर्थः। अथवा ताः पताकाः ध्वजाश्च अल्पाः स्वशक्त्युत्साहसंभवतः उक्तप्रमाणान्न्यूनाः कुर्विति । एवं शैवे दिग्भागे । ऐशान्यामित्यर्थः । त्रिदशमितकरं विस्तारे त्रिहस्तप्रमितं दैर्घ्ये दशहस्तप्रमितमित्यर्थः । विचित्रं नानावर्णं । रम्यं नयनमनोहरं केतुं महाध्वजं पूर्ववद्दीर्घवंशोपरि स्थापयेत् । तथाचोक्तं प्रतिष्ठासारसंग्रहे—"पीतरक्तादिवर्णाश्च पञ्चहस्ता ध्वजा मताः। द्विपञ्चहस्तैर्दण्डैस्ते वंशजैः संयुता हि ते" इति। क्रियासारे—"मातङ्गवस्तमहिषसिंहमत्स्यैणवाजिनः । वृषभं च यथान्यायं ध्वजमध्ये क्रमाल्लिखेत् । प्रतिकुण्डं पताकास्तु प्रोक्ताः शास्त्रार्थकोविदैः । सप्तहस्ताः पताकाः स्युः सप्तमांशेन विस्तृताः । लोकपालानुपूर्व्येण नवमी तुहिनप्रभा । पताकाश्च ध्वजाश्चापि गन्धपुष्पसमन्विताः" इति । महाध्वज उक्तः परशुरामीये—"त्रिहस्तविततो दीर्घो दशहस्तो विचित्रितः । चामरेणान्वितः शीर्षे प्रान्ते सक्षुद्रघण्टिकः । दशहस्तधृते दण्डे पुष्पगन्धैः समन्वितः" इति । चतुष्कोणा ध्वजाः । त्रिकोणाः पताका इति कुण्डमण्डपविदां संप्रदाये संकेतः । अयं श्लोकः प्रक्षिप्तोपि मूलाविरुद्धत्वात्—परमावश्यकत्वाच्च व्याख्यातः । इति ॥ १२ ॥

हस्तान्ते तोरणोऽस्मादिषुषडगकरोऽश्वत्थजोदुम्बरोत्थ-
प्लाक्षन्यग्रोधजः प्राक्प्रभृतिषु फलकाः स्वार्धतो मूर्ध्नि तस्य ।
तन्मध्ये विष्णुयागे दशरविमनुभिश्चाङ्गुलैः स्वांघ्रिपुष्टं
शङ्खं चक्रं गदाऽब्जं भवति शिवमखे शूलमेकाङ्गुलोनम् ॥ १३ ॥

मरीचिका—अङ्गान्तराण्याह—अस्मान्मण्डपाद्बहिः हस्तान्ते हस्तप्रमिते देशे तोरणाख्यं च द्वारचतुष्टयं कर्तव्यं । इषुषडगकरोऽल्पे पञ्चहस्तः । मध्यमे षड्ढस्तः । उत्तमे सप्तहस्तः । प्राच्यामश्वत्थजः । दक्षिणस्यामुदुम्बरजः । प्रतीच्यां प्लक्षजः । उदीच्यां न्यग्रोधजः । फलकाः स्वार्धतो मूर्ध्नि तस्य तस्य तोरणस्य मूर्ध्नि फलका देयाः । स्वार्धतः यत्तोरणमानं तदर्धमेव फलकमानमित्यर्थः । तन्मध्ये फलकानां मध्ये वैष्णवे यागेऽल्पमण्डपे दशाङ्गुलं । मध्यमे द्वाद-

शाङ्गुलं। उत्तमे चतुर्दशाङ्गुलं। प्रागादिक्रमेण शङ्खं चक्रं गदां पद्मं च स्वपञ्चमांशेन फलकान्तःप्रविष्टं दद्यात्। शिवमखे तु एकाङ्गुलोनं शूलं चतुर्ष्वपि तोरणेषु दद्यात्। तच्चाल्पे मण्डपे नवाङ्गुलं। मध्यमे एकादशाङ्गुलं। उत्तमे त्रयोदशाङ्गुलं। अन्यत्सर्वं मूलग्रन्थेभ्य एवावगन्तव्यम्॥ १३॥

दीधितिः—अथ तोरणान्याह—हस्तान्त इति। अस्मान्मण्डपाद्बहिः हस्तान्ते हस्तप्रमिते देशे तोरणः तोरणाख्यं द्वारचतुष्टयं कर्तव्यं। इषुषडगकरः अल्पे पञ्चहस्तः। मध्यमे षड्ढस्तः। उत्तमे सप्तहस्तः। प्राक्प्रभृतिषु प्राच्यादिचतुर्दिक्षु। अश्वत्थोदुम्बरोत्थप्लाक्षन्यग्रोधजः क्रमेणैतद्वृक्षकाष्ठजः कर्तव्यः। फलकाः स्वार्धतो मूर्ध्नि तस्य तस्य तोरणस्य मूर्ध्नि स्वार्धतः यत्तोरणमानं तदर्धमानेन फलका देयाः। महाकपिलपञ्चरात्रे—"देवास्तोरणरूपेण संस्थिता यज्ञमण्डपे। विघ्नविध्वंसनार्थाय रक्षार्थमध्वरस्य च। न्यसेन्न्यग्रोधमैन्द्र्यां तु याम्यां चौदुम्बरं तथा। वारुण्यां प्लक्षजं चैव कौबेर्यां पिप्पलं न्यसेत्। अश्वत्थोदुम्बरप्लक्षवटशाखाकृतानि च। मण्डपस्य प्रतिदिशं द्वाराण्येतानि कारयेत्"। इति वृक्षक्रमविकल्पः। द्वाराकारत्वाद्द्वारादेशः। पञ्चरात्रे—"अलाभेऽप्येकमेवैषां सर्वाशासु निवेशये"दिति। तन्मध्ये विष्णुयाग इति। दशरविमनुभिश्चाङ्गुलैः स्वांघ्रिपुष्टं। अल्पमण्डपे दशाङ्गुलं। मध्यमे द्वादशाङ्गुलं। उत्तमे चतुर्दशाङ्गुलं। स्वांघ्रिपुष्टं स्वचतुर्थांशेन विस्तृतं प्रागादिक्रमेण शङ्खं चक्रं गदां पद्मं च स्वपञ्चमांशेन फलकान्तःप्रविष्टं। शिवमखे शिवप्रतिष्ठायां एकाङ्गुलोनं शूलं चतुर्ष्वपि तोरणेषु दद्यात्। इतरत्सर्वं पूर्ववत्॥ १३॥

पद्मिनी—अस्मान्मण्डपाद्बहिः हस्तमितप्रदेशे तोरणाः कर्तव्याः। अधममध्यमोत्तममण्डपेषु पञ्चषट्सप्तकराः। अश्वत्थोदुम्बरप्लक्षन्यग्रोधकाष्ठोद्भवाः प्राचीमारभ्योदीच्यन्तं क्रमेण। तस्यैकैकस्य मूर्ध्नि तत्तदर्धेन फलकाः स्वस्वकाष्ठजा निधेयाः। विष्णुयागश्चेत्तत्फलकमध्ये प्राच्यादिक्रमेण शङ्खचक्रगदाब्जानि निखेयानि। तल्लक्षणं तु अधममण्डपे दशाङ्गुलमिताः कीलाः शङ्खादिचिह्निताः स्वचतुर्थांशेन पुष्टाः। एवं मध्यममण्डपे द्वादशाङ्गुलमितदीर्घाः। उत्तमे चतुर्दशाङ्गुलमितदीर्घाः। विस्तारस्तु स्वस्वचतुर्थांशेनैव। रोपणं तु पञ्चमांशेनैवेति पूर्वमुक्तम्। शिवयागे तु त्रिशूलमेका-

ङ्गुलोनं। अधमे नवाङ्गुलं। मध्यमे एकादशाङ्गुलं उत्तमे त्रयोदशाङ्गुलमिति विशेषः॥ १२॥

**नौका**—अथ तोरणान्याह-हस्तान्त इति। अस्मात् अधममध्यमोत्तमभेदेन त्रिविधस्यापि मण्डपस्य द्वारचतुष्टयात् हस्तान्ते हस्तमितप्रदेशान्ते इषुषडगकरः क्रमान्मण्डपत्रये पञ्चषट्सप्तहस्ताः कनिष्ठे पञ्चहस्तः। मध्यमे षड्ढस्तः। उत्तमे सप्तहस्तोच्च इत्यर्थः। तोरणाः स्तम्भद्वयात्मकद्वारसदृशरूपाः प्राक्प्रभृतिषु दिक्षु क्रमात् अश्वत्थऔदुम्बरप्लक्षन्यग्रोधजाः कर्तव्याः। प्राच्यामश्वत्थदारुसंभवः। दक्षिणस्यामुदुम्बरसंभवः। प्रतीच्यां प्लक्षसंभवः। उदीच्यां वटसंभवः कर्तव्य इत्यर्थः। अत्रापि पूर्ववत्पञ्चमांशेन भूप्रवेशः। तस्य तोरणस्य मूर्ध्नि मस्तके स्वार्धतः स्वार्धमानेन यत्परिमितं तोरणमानं तदर्धमानेनेत्यर्थः। कनिष्ठे सार्धद्वयहस्तेन, मध्यमे त्रिहस्तेन, उत्तमे सार्धत्रिहस्तेनेत्यर्थः। फलकाः पट्टिकाः सजातीया देयाः। तन्मध्ये तासां फलकानां मध्ये मध्यभागे। कनिष्ठमध्यमोत्तममण्डपेषु क्रमाद्दशरविमनुभिः दशभिर्द्वादशभिश्चतुर्दशभिरङ्गुलैर्दीर्घं प्रागादिदिक्षु क्रमात् शङ्खं चक्रं गदां कमलं च विष्णुयागे भवति। तच्च स्वांघ्रिपुष्टं स्वचतुर्थांशेन विस्तृतं पूर्वोक्तत्वात् स्वपञ्चमांशेनान्तःप्रविष्टं कर्तव्यं। शिवमखे तु एकाङ्गुलोनः शूलो भवति। प्रागादिचतसृष्वपि दिक्षु शूलमेव। कनिष्ठमण्डपे नवभिर्मध्यमे एकादशभिरुत्तमे त्रयोदशभिरङ्गुलैर्दीर्घं फलकमध्यभागे पञ्चमांशेनान्तःप्रविष्टं स्वतुर्थांशविस्तृतं च कर्तव्यमिति भावः। सूर्याद्यदेवतायागेपि इदमेव त्रिशूलायुधं कर्तव्यमिति प्रतिभाति। साधारणमण्डपपूजायां त्रिशूलाग्रे देवतावाहनादीनां विहितत्वात्। विष्णुयागे तु वचनादपवादः। अथवा सूर्यस्य बहुशो नारायणरूपत्ववर्णनात्तत्र शङ्खादिचतुष्टयं। देवीगणेशयोस्तु शिवसंबन्धित्वाच्छूलमिति विवेकः। अत्र मण्डपेऽन्यदङ्गजातं विस्तृतिभीत्या यदत्र नोक्तं तद्ग्रन्थान्तरादवगन्तव्यमिति॥ १२॥

**मिताक्षरा**—अथ तोरणान्याह वृत्तेन-हस्तान्त इति। अस्मान्मण्डपाद्धस्तान्ते हस्तमात्रे तोरणानि बहिर्द्वाराणि कुर्यादित्यन्वयः। "तोरणोऽस्त्री बहिर्द्वारं" इत्यमरः। तान्यधममध्यमोत्तममण्डपेषु पञ्चषट्सप्तहस्तानि स्युः। अश्वत्थोदुम्बरप्लक्षन्यग्रोधकाष्ठोद्भवानि प्राच्या आरभ्योदीच्यन्तानि क्रमेणेति।

तदुक्तं मन्त्रमुक्तावल्यां–"मण्डपद्वारबाह्ये च वेदिमानेन दिक्क्रमा" दिति। हयशीर्षपञ्चरात्रे—"अश्वत्थोदुम्बरौ चैव प्लक्षो न्यग्रोध एव च। तोरणार्थे तु कथिताः पूर्वादिषु यथाक्रम" मिति। भविष्यपुराणे—तोरणं प्रकृत्य–"पञ्चषट्सप्तहस्ताः स्युः कनिष्ठादौ तु मण्डप" इति। वास्तुशास्त्रे विशेषः–"पञ्चहस्तप्रमाणास्ते विस्तारेण द्विहस्तकाः। षडङ्गुलाभिवृद्ध्या तु मध्यमोत्तमयोः क्रमा" दिति। फलकनिवेशनमाह—स्वार्धत इति। तेषु तोरणेषु एकैकस्य मूर्ध्नि तदर्धेन तोरणस्तम्भार्धमानेन फलकाः पट्टिकाः तोरणकाष्ठजा निधेयाः। तदुक्तं शारदातिलके—"तिर्यक्फलकमानं स्यात्स्तम्भानामर्धमानत" इति। अथ कीलकनिवेशनमाह—तन्मध्यत इति। तन्मध्ये फलकमध्ये वैष्णवे कर्मणि प्राच्यादिक्रमेण शङ्खं चक्रं गदां अब्जं निधेयं। तल्लक्षणं तु अधममण्डपे दशाङ्गुलमिताः कीलाः शङ्खादिचिह्निताः स्वस्वचतुर्थांशेन पुष्टा विस्तृताः। एवं मध्यममण्डपे द्वादशाङ्गुलदीर्घाः। उत्तमे चतुर्दशाङ्गुलदीर्घाः। तद्रोपणं तु स्वपञ्चमांशेनैवेति पूर्वमुक्तं। शैवे शिवयागे तु त्रिशूलमेकाङ्गुलोनं। तथाहि। अधमे नवाङ्गुलं। मध्यमे एकादशाङ्गुलं। उत्तमे त्रयोदशाङ्गुलमिति विशेषः। तदुक्तं वास्तुशास्त्रे—"मध्ये द्वादशांशेन शङ्खं चक्रं गदाऽम्बुजं। प्रागादिक्रमयोगेन न्यसेत्तेषां स्वदारु" मिति। क्रियासारे—"शूलेन चिह्निताः कार्या द्वारशाखासु मस्तके। शूले नवाङ्गुलं दैर्घ्यं तुरीयांशेन विस्तृतिः। शेषाणां द्व्यङ्गुला वृद्धिर्वंशश्चाङ्गुलवृद्धितः" इति सर्वं शिवम्॥ १३॥

सुप्रभा—अथ तोरणान्याह—हस्तान्त इति। अस्मान्मण्डपाद्बहिः हस्तान्ते हस्तप्रमितदेशे प्राक्प्रभृतिषु चतुर्दिक्षु द्वारामग्रे। तोरणो बहिर्द्वारं। "तोरणोऽस्त्री बहिर्द्वारं पुरद्वारं तु गोपुरं" इति कोशात्। कर्तव्यः। स कीदृशः। "अश्वत्थजोदुम्बरोत्थप्लक्षन्यग्रोधजः। प्राच्यां अश्वत्थवृक्षकाष्ठमयः। दक्षिणस्यामौदुम्बरकाष्ठोद्भवः। प्रतीच्यां प्लक्षोद्भवः। उदीच्यां न्यग्रोधो वटवृक्षस्तद्भवः। प्लक्ष इति महाराष्ट्रभाषायां पिंपरी इति प्रसिद्धो वृक्षः। पुनः कीदृशः। इषुषडगकरः। अल्पे मण्डपे पञ्चहस्तोच्छ्रायात्मकः। मध्यमे षड्ढस्तोच्छ्रायः। उत्तमे सप्तहस्तोच्छ्रायः। तस्य तोरणस्य मूर्ध्नि मस्तके। फलकास्तिर्यग्भूताः काष्ठविशेषाः। स्वार्धतः यस्मिन्मण्डपे यत्तोरणमानं तन्मानार्धपरिमितप्रमाणकाः स्वस्वकाष्ठजाता दातव्याः। महाकपिलपञ्चरात्रे तु

वृक्षक्रमान्तरमुक्तं—"देवास्तोरणरूपेण संस्थिता यागमण्डपे । विघ्नविध्वंसनार्थाय रक्षार्थमध्वरस्य च । न्यसेन्न्यग्रोधमैन्द्र्यां तु याम्यां चौदुम्बरं तथा । वारुण्यां प्लक्षजं चैव कौबेर्यां पिप्पलं न्यसेत् । अश्वत्थोदुम्बरप्लक्षवटशाखाकृतानि च । मण्डपस्य प्रतिदिशं द्वाराण्येतानि कारयेत्" इति । एषां सर्वेषां वृक्षाणामलाभे तत्रैवाह—"अलाभेप्येकमेवैषां सर्वाशासु निवेशयेत्" इति । तन्मध्ये तत्तत्फलकमध्यभागे । विष्णुयागे सति क्रमेण प्रागादिचतुर्दिक्षु दशरविमनुभिश्चाङ्गुलैः । अल्पे मण्डपे दशाङ्गुलैः । मध्यमे मण्डपे द्वादशाङ्गुलैः । उत्तमे चतुर्दशाङ्गुलैरुन्नतं । स्वांघ्रिपुष्टं स्वस्वचतुर्थांशेन विस्तृतं । अल्पे मण्डपे यवचतुष्टयाधिकद्व्यङ्गुलविस्तृतं । मध्यमे त्र्यङ्गुलविस्तृतं । उत्तमे यवचतुष्टयाधिकत्र्यङ्गुलविस्तृतं । स्वस्वकाष्ठोद्भवं शङ्खं चक्रं गदां पद्मं स्वस्वपञ्चमांशेन फलकान्तःप्रविष्टं भवति । शिवमखे रुद्रयागे सति तु एकाङ्गुलोनं एकेनाङ्गुलेन वर्जितं । दशरविमनुभिः इत्यत्र नवैकादशत्रयोदशभिरङ्गुलैरित्यर्थः । अल्पे मण्डपे नवाङ्गुलोन्नतं यवद्वयाधिकद्व्यङ्गुलविस्तृतं । मध्यमे एकादशाङ्गुलोन्नतं यवषट्काधिकद्व्यङ्गुलविस्तृतं । उत्तमे त्रयोदशाङ्गुलोन्नतं यवद्वयाधिकत्र्यङ्गुलविस्तृतं । चतुर्ष्वपि तोरणेषु स्वस्वपञ्चमांशेन फलकान्तःप्रविष्टं स्वस्वकाष्ठजातं शूलं कुर्वित्यर्थः इति ॥ १३ ॥

वृत्तेऽब्जेऽब्धीष्विभाश्वैरयुतगुणफलाल्लब्धमूलेन वृत्त-
व्यासो योनौ तु सार्धत्रिनवकररसैः सार्धसप्ताब्धिदन्तैः ।
खाभ्राभ्रार्थैः सहांघ्रिः श्रुतिकनवशरैर्धीनवाम्भोरसैश्च
क्ष्मावार्धीभर्तुभिर्भूनगगगननगैश्च क्रमात्र्यादिदोष्षु ॥१४॥

मरीचिका—अथ वृत्तानयनप्रकारमाह—अयुतगुणादिष्टफलात् ५७६०००० चतुःपञ्चाष्टसप्ततिः ७८५४ तल्लब्धं ७३३ तस्य मूलं २७।०।५ इदमेकहस्तकुण्डस्य प्रकृतिवृत्ते मध्यसूत्रं । अस्य वर्गः ७३३ "व्यासस्य वर्गे भनवाग्नि ३९२७ निघ्ने सूक्ष्मं फलं पञ्चसहस्र ५००० भक्ते" इत्युक्तरीत्या तदेवो ५७६ ज्ञेयं । अर्धचन्द्रे त्विममेव भाजकं अर्धीकृत्य ३९२७ अनेन भक्ते लब्धं १४६६ अस्य मूलं ३८।२।२ यद्वा "व्यासे भनन्दाग्नि ३९२७ हते विभक्ते खबाणसूर्यैः १२५० परिधिस्तु सूक्ष्मः । द्वाविंशति २२ घ्ने विहृतेथ

शैलैः ७ स्थूलोपि वा स्याद्व्यवहारसिद्ध्यै'' इत्युक्तरीत्या परिधिं ८५ प्रसाध्य "वृत्तक्षेत्रे परिधिगुणितव्यासपादः फलं स्या'' दित्युक्तरीत्या वा फलमुन्नेयं। योनौ तु तस्मादेवा युतगुणात्फलात्सार्धत्रिनवतिसहितया ६२९३।४ द्राषष्ठ्या लब्धं ९१५ अस्य मूलं ३०।२ "वृत्तक्षेत्रे परिधिगुणितव्यासपादः फलं स्यात्'' वृत्तव्यासः। अयमेव योनिकुण्डगतत्रिकोणद्वयस्य लम्बः। त्र्यस्रयोर्यो मध्य-बाहुः स एव मध्यभूमिः। तन्मानं चतुर्थांशोनाद्वृत्तवर्गात् ६८६ लब्धं। अस्य मूलं २६।१।४ अस्यार्धं १३।०।६ इदं लम्बेन गुणितं ३९६।४ इदं त्र्यस्रद्वयफलं। लम्बगुणं भूम्यर्धं स्पष्टं त्रिभुजे फलं भवति इति वचनात्। अथ वृत्तार्धयोः फलानयनं। तत्र व्यासः १५।१ अस्योक्तरीत्या परिधिः ४७।४ अनयोर्व्यासप-रिध्योर्घातः ७१८ अस्य चतुर्थांशः १७९।४ इदं पूर्वेण सहितं ५७६ इदं एक-हस्ते योनिकुण्डे फलं। क्रमप्राप्तं त्र्यस्रभाजकमाह—सार्धसप्ताब्धिदन्तैरिति ३२४७।४ तस्मिन्नेवायुतगुणिते फले सार्धसप्तचत्वारिंशता सह द्वात्रिंशत्या भक्ते लब्धं १७७४ अस्य मूलं ४२।१ पादोनस्य वृत्तव्यासवर्गस्य मूलं भुजपादोनस्य भुजवर्गस्यापि मूलं लंबः। अत्र त्र्यस्रस्य त्रयाणां भुजानां समत्वात् भुज एव भू-भूम्यर्धलम्बगुणे त्र्यस्रफलं तदेव फलं भवति। अत्र भूम्यर्धं १८।२ लम्बः ३१।१ चतुरस्रे तु तदेवायुतगुणं फलं खाभ्राभ्रार्थैः ५००० पञ्चसहस्र्या भक्तं लब्धं ११५२ अस्य मूलं ३३।७।४ यूकाचतुष्टयोनं चतुस्त्रिंशदङ्गुलात्मकं। अयमेव कर्णः। एतद्वर्गार्धं ५७६ मूलेन २४ अयं चतुरस्रबाहुः पञ्चास्रादिषु वृत्ते तु यावन्त्यो ज्याः पतन्ति तावन्ति केन्द्रमभिलक्ष्य त्रिकोणानि भवन्ति। तत्र भुजवर्गोनस्य व्यासवर्गस्य यन्मूलं स एव लम्बः भुजलम्बः। भुजलम्ब-योर्घातश्चतुर्णां त्र्यस्राणां फलं भवति। तदेवं पञ्चास्रादौ एकेन द्वाभ्यां त्रिभि-श्चतुर्भिश्च पादैरेधितं पञ्चास्रादिफलं भवति। तत्र पञ्चास्रे तावत् तदेवा-युतघ्नं फलं यवद्वययुतचतुश्चत्वारिंशता सहितया एकोनषष्टिशत्या ५९४४।२ भक्ते लब्धं ९६९ अस्य मूलं लम्बः ३१।१।४ भुजः १८।२।३ अस्य वर्गः ३३३ अनेनोनो व्यासवर्गः ६३६ अस्य मूलं लम्बः २५।१।४ अयं भुजेन गुणितः ४६०।५ इदं स्वचतुर्थांशेन ११५।१।४ अनेनाधिकं ५७६ षडस्रे तु पञ्चन-वत्यधिकया चतुःषष्टिशत्या ६४९५ तस्मादेवायुतगुणात्फलाल्लब्धं ८८५ अस्य मूलं २९६ अस्यैव चतुर्थांशो भुजवर्गः २२१।२ अनेनोनो व्यासवर्गः ६६४ अस्य मूलं २५।६।२ अयं लम्बः भुजेन गुणितः ३८४ इदं पादद्वयेन युक्तं

१९२ तदेव फलं ५७६ । सप्तास्रे तु एतदेवायुतगुणं एकचत्वारिंशता सहित-षाष्टषष्टिशत्या ६८४१ भक्तं लब्धं ८४१ लंबः अस्य मूलं वृत्तव्यासः २९ भुजः १२।५ अस्य वर्गः १५१ अनेन न्यूनो वृत्तवर्गः ६८२ अस्य मूलं २६।१ इदं दोर्निघ्नं ३३९ इदं द्विगुणितं ६७८ स्वाष्टमांशेन न्यूनं सप्तास्रि फलं । अष्टास्रे एतदेवायुतगुणफलं एकसप्तत्यधिकया सप्तसहस्रया ७०७१ भक्तं तस्माल्लब्धं ८१२ अस्य मूलं वृत्तव्यासः २८।४ अस्य भुजः १०।७।४ अस्य वर्गः १९०।०।४ अनेन न्यूनो वृत्तवर्गः ६९३ अस्य मूलं २६।१।४ अयं लम्बः । ततः भुजयोर्घातः २८८ एवं द्विगुणितं अष्टास्रे फलं भवति । तदेव वृत्तव्यासभुजमानानां सर्वत्राव्यभिचाराद्भुजसाम्यादिसिध्यर्थं प्रकारान्तरं न मृग्यं । एवमेकहस्तानां भुजानां च योन्याद्यङ्गसहितानां मानमुक्तम् ॥ १४ ॥

दीधितिः—अथ पूर्वोक्तानां व्यासानां भुजानां चोपपत्तिं विवक्षुस्ताव-त्प्रकृतिवृत्तव्याससाधकाननुपातानाह—वृत्तेऽब्जेऽब्धीषिवभाश्वैरिति । इह चिकीर्षिते कुण्डे स्वेच्छाविषयीभूतं क्षेत्रफलं होमानुसारेण निर्णीतः मस्ति । तत्फलं यद्व्यासजवृत्तान्तर्गतस्वेष्टाकृतिककुण्डे यथास्यात्तथा व्यासः साध्यः । यतः फलमिष्टाकृतिककुण्डभुजाधीनं । भुजाः परिध्यधीनाः । परिधिर्व्यासाधीनः । अतो व्यासे क्षेत्रफलहेतुत्वं । अथेष्टं व्यासं प्रकल्प्य तद्वृत्ते स्वेष्टाकृतिकं कुण्डं निर्माय तस्य भुजान् क्षेत्रफलं च ज्ञात्वाऽनुपात-कर्तव्यः । यद्यनेन सिद्धक्षेत्रफलेन कल्पितव्यासस्य वर्गतुल्यो व्यासवर्गो भवति तदा स्वेष्टफलेन कियानिति । क्षेत्रफलस्य वर्गत्वात् । वर्गेण वर्गं गुणयेद्भजेच्चेति नियमात् । प्रमाणफलभूतो व्यासोपि वर्गितः क्रियते । अत इच्छाफलमिष्टव्यासस्य वर्गः स्यात् । तन्मूलमिष्टव्यासः । किंत्वत्र निःशेष-भजनाभावात्क्रियानप्यवयवः सूक्ष्मोपि त्यक्तव्यो भवति । हरार्धादल्पे शेषे । अधिके त्वधिको ग्राह्यो भवति । अतो यथायथा महद्वृत्तं तथातथा सूक्ष्मं फलं स्यात् । अतःकारणात् गणितसौकर्याय च शतमितो व्यासः कल्पितः । तज्जन्ये वृत्ते स्वेष्टाकृतिककुण्डानां फलान्यानीय तत्र तत्र हरत्वेनोक्तानि । अनुपाते तेषां प्रमाणत्वात् । प्रमाणफलं च शतव्यासवर्गोऽयुतं । अयं साध्य-फलेन गुणनीयः । अत उक्तं अयुतगुणफलात् तत्रतत्रोक्ताब्धीषिवभाश्वादिहरै-र्भक्ताद्यल्लब्धं तन्मूलेन परिमितः स्वेष्टफलाकृतिके कुण्डे प्रकृतिवृत्तव्यासः स्यात् इति अनेनोपायेन आनीतानि वृत्तादिफलानि क्रमेण लिख्यन्ते । तत्र वृत्ते

पद्मकुण्डे च आनीतं फलं ७८५४ अतो वृत्तेऽब्जेऽब्धीष्विभाश्वैरिति हर उक्तः। अर्धचन्द्राकृतौ तु सिद्धफलस्यार्धमेव फलं ३९२७ भवतीति स्फुटत्वात्पृथङ्नोक्तं। योनिकुण्डफलं ६२९३।५।०।१ तदिदमुक्तं योनौ तु सार्धत्रिनवकररसैरिति। त्र्यादिदोष्षु च क्रमात्फलान्युच्यन्ते। तत्र त्रिभुजे फलं ३२४७।४।६।०।६ तदुक्तं सार्धसप्ताब्धिदन्तैरिति। चतुरस्रे फलं ५००० अत उक्तं खाभ्राभ्रार्थैरिति। पञ्चास्रे फलं ५९४४।२।६।०।२ अत्राचार्येण वक्ष्यमाणप्रकारेण फलानयने क्रियमाणे यवद्वयमधिकमायाति। अत उक्तं सद्यांघ्रिः श्रुतिकनवशरैरिति। षडस्रे तु फलं ६४९५।१।४।१।४ अत उक्तं धीनवाम्भोरसैरिति। सप्तास्रे फलं ६८४१।७।३।२।२ अत उक्तं क्ष्मावार्धीभर्तुभिरिति। अष्टास्रे फलं ७०७१।०।२।६।० अत उक्तं भूनगगगननगैरिति। अत्रापि करणीगतमूलग्रहणे भास्कराचार्यैः पाटीगणिते वर्गेण महतेष्टेनेत्याद्युपायः कृतः। अतोऽत्र चतुःषष्टिवर्गः महान्कल्प्यंते। अतः चतुर्वारमष्टभिः संगुण्य तत्रतत्र स्थितानवयवान्संयोज्य मूलग्रहणे ऊर्ध्वाङ्के चतुःषष्ट्या भक्ते करणीगतं सूक्ष्मफलं लभ्यते ॥ १४ ॥

पद्मिनी—अथेष्टफलव्यासानयनप्रकारमाह—अयुतगुणादिष्टफलात् चतुःपञ्चाशतोत्तराष्टसप्ततिशत्या भक्ते लब्धं यद्भवति तस्य मूलं वृत्तव्यासो भवति। सार्धत्रिनवतिसहितया द्विषष्टिशत्या भक्ते यल्लब्धं भवति तस्य मूलं योनेर्व्यासः। एवं सर्वत्र। तत्र त्र्यस्रादिभाजकानाह—सार्धसप्तचत्वारिंशदुत्तरद्वात्रिंशच्छतानि। पञ्चसहस्राणि चतुर्भुजस्य। यवद्वययुतचतुश्चत्वारिंशदुत्तरैकोनषष्टिशतानि पञ्चभुजस्य। पञ्चनवत्यधिकचतुःषष्टिशतानि षड्भुजस्य। एकचत्वारिंशदधिकाष्टषष्टिः सप्तभुजस्य। एकसप्तत्युत्तरसप्ततिशतानि अष्टभुजस्य। अथ बालबोधनार्थमुदाहरणं लिख्यते—तत्र फलमेकहस्तस्य ५७६ अयुतगुणितं ५७६०००० । इदं ७८५४ अनेन भक्ते लब्धं ७३३।३ अस्य मूलं २७।०।६ द्विहस्ते अयुतगुणं फलं ११५२०००० उक्तभाजकेन भक्ते लब्धं १४६६।६ अस्य मूलं ३८।२।३ त्रिहस्ते फलमयुतगुणं १७२८०००० पूर्ववद्भक्ते लब्धं २२००।१ अस्य मूलं ४६।७।१।२ चतुर्हस्तेऽयुतगुणं फलं २३०४०००० प्राग्वद्भक्ते लब्धं २९३३।४ अस्य मूलं ५४।२ पञ्चहस्तेऽयुतगुणं फलं २८८०००० उक्तरीत्या भक्ते लब्धं ३६६६।७ अस्य मूलं ६०।४।३ षड्ढस्तेऽयुतगुणफलं ३४५६०००० उक्त-

प्रकारेण लब्धं ४४००।२ अस्य मूलं ६६।३ सप्तहस्ते फलमयुतगुणं ४०३२०००० उक्तपथाल्लब्धं ५१३३।५ अस्य मूलं ७१।५।१ अष्टहस्तेऽयुतगुणं ४६०८०००० उक्तवत्कृते लब्धं ५८६७ अस्य मूलं ७६।४।६ नवहस्तेऽयुतगुणफलं ५१८४०००० उक्ताङ्केन भक्ते लब्धं ६६००।३ अस्य मूलं ८१।२ दशहस्तेऽयुतगुणं ५७६००००० पूर्वोक्ताङ्केन भक्ते लब्धं ७३३३।६ अस्य मूलं ८५।५ एवमेकादशगुणितादौ द्रष्टव्यम् ॥ ॥ अथार्धचन्द्रे इममेव भाजकमर्धीकृत्य भक्ते, यद्वा फलं द्विगुणितं कृत्वा तेनैव भाजकेन भक्तं चेदिष्टफलकव्यासो भवति । यथा इष्टफलमयुतगुणं ५७६००००।३९२७ अनेन भक्ते लब्धं १४६६।६ अस्य मूलं ३८।२।३ यद्वा फलं द्विगुणितं सदयुतघ्नं ११५२००००।७८५४ अनेन भक्ते लब्धं १४६६।६ अस्य मूलं ३८।२।३ द्विहस्ते ११५२००० फलं । भाजकः ३९२७ लब्धं २९३३।४ मूलं ५४।२।४ त्रिहस्ते फलं १७२८०००० लब्धं ४४००।२ मूलं ६६।२।५ चतुर्हस्ते फलं २३०४०००० लब्धं ५८६७ मूलं ७६।४ पञ्चहस्ते फलं २८८००००० लब्धं ७३३३।६ मूलं ८५।५ षड्ढस्ते फलं ३४५६०००० लब्धं ८८००।४ मूलं ९४ सप्तहस्ते फलं ४०३२०००० लब्धं १०२६७ मूलं १०१।२।५ अष्टहस्ते फलं ४६०८०००० लब्धं ११७३४ मूलं १०८।२।४ नवहस्ते फलं ५१८४००००।१ लब्धं १३२०० मूलं ११४।३ दशहस्ते ५७६००००० लब्धं १४६६७।४ मूलं १२१ ॥ ॥ अथ योनिकुण्डे एकहस्ते फलं ५७६०००० पूर्वोक्तभाजकेन भक्ते लब्धं । अयं भाजकः ६२९३।४ अयमष्टगुणितो यवरूपः संपन्नः ५०३४८ फलमप्यष्टगुणितं ४६०८०००० यवरूपेण भाजकेन भक्ते लब्धं ९१५।१।७ अस्य मूलं ३०।२ अत्र सर्वेषु वृत्तादिकेषु कुण्डेषु द्व्यादिगुणेषु सत्सु व्यासोत्पत्तौ उक्तोपायस्य गुरुभूतत्वाल्लघूपायान्तरमप्युच्यते तदर्थं मदीयः श्लोकः–"इष्टफले द्व्यादिगुण्य इष्टवर्गं तथैव तं। कृत्वा मूलेन यत्प्राप्तं तदेव द्व्यादिविस्तरः"। अस्यार्थः–स्वकीयेष्टफले द्विगुणितत्रिगुणितचतुर्गुणितादिकर्तव्ये सति तं इष्टवर्गं तथैव कृत्वा। वृत्तादिकुण्डगतव्यासवर्गं द्विगुणितत्रिगुणितचतुर्गुणितादिकं कृत्वा तस्य मूलेन यत्प्राप्तं भवति तदेव द्विगुणितादीनां विस्तरः विस्तार इत्यर्थः। व्यास इति यावत्। उदाहरणं—द्विहस्ते इष्टवर्गः योनिकुण्डगतव्यासवर्गः ९१५।१।७ द्विगुणितः १८३०।३।६ अस्य मूलं ४२।७ त्रिहस्ते

त्रिगुणितः २७४५।५।५ अस्य मूलं ५२।३।१ चतुर्हस्ते चतुर्गुणितः ३६६०।-७।४ मूलं ६०।४ पञ्चहस्ते पञ्चगुणः ४५७६।१।२ मूलं ६७।५।१ षड्ढस्ते षड्गुणः ५४९१।३।२ मूलं ७४।०।७ सप्तहस्ते सप्तगुणः ६४३७।१ मूलं ८०।२ अष्टहस्ते ७३२१।७ मूलं ८५।६ ॥ ॥ त्र्यस्त्रिकुण्डे व्यासवर्गः १७७३६ अस्य मूलं ४२।१ द्विहस्ते द्विगुणः ३५४७।२ मूलं ५९।४।३ त्रिहस्ते त्रिगुणः ५३२१ मूलं ७२।७।४ चतुर्हस्ते चतुर्गुणः ७८५४।४ मूलं ८३।७।७।३ पञ्चहस्ते पञ्चगुणः ८८६८ मूलं ९४।१।३ षड्ढस्ते षड्गुणः १०६-३९।६ मूलं १०३।१।१ सप्तहस्ते सप्तगुणः १२४१५।३ मूलं १११३ अष्टहस्तेऽष्टगुणः १४१८९ मूलं ९१९।१ ॥ ॥ चतुरस्त्रे व्यासवर्गः ११५२ अस्य मूलं ३३।७।४ द्विहस्ते द्विगुणः २३०४ मूलं ४८ त्रिहस्ते त्रिगुणः ३४५६ मूलं ५८।६।२ चतुर्हस्ते चतुर्गुणः ४६०८ मूलं ६७।७ पञ्चहस्ते पञ्चगुणः ५७५० मूलं ७५।६।५ षड्ढस्ते षड्गुणः ६९१२ मूलं ८३।१।१ सप्तहस्ते सप्तगुणः ८०६४ मूलं ८९।६।३ अष्टहस्तेऽष्टगुणः ९२१६ मूलं ९६ ॥ ॥ पञ्चास्त्रे व्यासवर्गः ९६९७ अस्य मूलं ३११ द्विहस्ते द्विगुणः १९३८ मूलं ४४।०।२ त्रि० २९०७ मूलं ५४ चतु० ३८७६ मूलं ६२।। पञ्च० ४८४५ मूलं ६९ षड्ढस्ते ५८१४ मूलं ७६।२ सप्त० ६७८३ मूलं ८२।३ अष्ट० ७७५२ मूलं ८८।०।३ ॥ ॥ षडस्त्रे व्यासवर्गः ८८६।६।५ अस्य मूलं २९।६ द्विहस्ते १७७२।५।२ मूलं ४२।१ त्रिहस्ते २६९० मूलं ५१।७ चतुर्हस्ते ३५७१।२।४ मूलं ५९।६ पंच० ४४३४।१ मूलं ६६।४।५ षड्. ५३।२१ मूलं ७२।७।५ सप्त. ६२०७।६।३ मूलं ७८।६।३ अष्ट० ७०९४।५ मूलं ८४।१।७ ॥ ॥ सप्तास्त्रे वर्गः ८४७ मूलं २९ द्विहस्ते १६९४ मूलं ४१ त्रिहस्ते २५२४।५ मूलं ५०।२ चतुर्हस्ते ३३६७ मूलं ५८ पञ्च ४२०९।३ मूलं ६४।७ षड्. ५०५१ मूलं ७१।०।५ सप्त. ५८९३।१ मूलं ७६।६ अष्ट ६७३५ मूलं ८२।०।४ ॥ ॥ अष्टास्त्रे वर्गः ८१४।४ मूलं २८।४ द्वि. १६२९ मूलं ४०।३ त्रि. २४४४३।४ मूलं ४९।३।४ च. ३२५८ मूलं ५७।०।५ पंच. ४०७२।४ मूलं ६३।६।४ ष. ४८८७ मूलं ६९।७।२ स. ५७०१ मूलं ७५।४ अष्ट. ६५१६ मूलं ८०।५

अथ वृत्तादिसर्वकुण्डानां फलानयने एतच्छ्लोकोक्तप्रकारा युक्तिः प्रकटीकृत्य प्रदर्श्यते। तदर्थं मदीयश्लोकः-"हते वर्गोत्पादकेन वर्गभांशसहस्रकैः।

भक्ते फलं भवेत्स्वस्वाकारक्षेत्रस्य तत्त्वतः" ॥ अस्यार्थः—वर्गोत्पादकशब्देन अब्धीष्विभाश्वैरित्यादयः एतैः स्वस्वक्षेत्रव्यासवर्गं निहत्य दशसहस्रैर्भक्तश्चेत्फलं भवतीत्यर्थः । तत्त्वत इत्यनेन सूक्ष्मव्यासवर्गग्रहणे तात्पर्यं स्पष्टार्थमुदाहरणं लिख्यते—तत्र वृत्तकुण्डव्यासवर्गः ७३३।३।१८५४ अनेन गुणितो जातः ५७५९९२७ अयं दशसहस्रैर्भक्तः ५७६ इदमेकहस्तवृत्तकुण्डफलं। एवमेव-हस्तद्वयादौ ॥ अर्धचन्द्रवर्गः १४६६।६।३९७२ अनेन गुणितो जातः ५७५९९२७ दशसहस्रैर्भक्तः ५७६ ॥ योनिकुण्डे वर्गः ९१५।१।७॥६२९३।४ अनेन गुणितो जातः ५७६००२८ दशसहस्रैर्भक्तः ५७६ ॥ त्र्यस्रव्यास-वर्गः १७७३।५॥३२४७।४ अनेन गुणितो जातः ५७५९४७ दशसहस्रैर्भक्तः ५७६ ॥ चतुरस्रव्यासवर्गः ११५२॥५००० अनेन गुणितो जातः ५७-६०००० दशसहस्रैर्भक्तः ५७६ ॥ पञ्चास्रव्यासवर्गः ९६९॥५९४४।२ अनेन गुणितो जातः ५७५९९७८ दशसहस्रैर्भक्तः ५७६ षडस्रव्यासवर्गः ८८६।६।६।५॥६४९५ अनेन गुणितो जातः ५७५९९४८ दशसहस्रैर्भक्तः ५७६ सप्तास्रव्यासवर्गः ८४१।७॥६८४१ अनेन गुणितो जातः ५७५९२६ दशसहस्रैर्भक्तः ५७६ ॥ अष्टास्रव्यासवर्गः ८१४।४॥७९७ अनेन गुणितो जातः ५७५९३३९ अयं दशसहस्रैर्भक्तः ५७६ एवमेव द्विगुणितादाविति संक्षेपः ॥ १४ ॥

नौका—तदेवं दशविधकुण्डानां मण्डपस्य च तत्तन्मानकथनपूर्वकं रच-नाप्रकारमुक्त्वा इदानीं तृतीयवृत्तकथितप्रकृतिवृत्तव्यासानामुत्पत्तिप्रकारमाह—वृत्तेऽब्जेऽब्धीष्विभाश्वैरिति वृत्तेन। अयुतगुणफलात् एकहस्तात्मककुण्ड-स्यायुतगुणफलं ५७६०००० तस्मात् अब्धीष्विभाश्वैः चतुःपञ्चाशदुत्तराष्टश-ताधिकसप्तसहस्रैः ७८५४ भक्ते सति लब्धं ७३३ अस्य मूलं २७।०।५ तेन वृत्तव्यासः तदङ्गुलपरिमितो व्यास इत्यर्थः। वृत्तेऽब्जे वृत्तकुण्डे पद्मकुण्डे च भवति । अयमेवाधिभैरित्यनेन प्रागुक्तो वृत्ताब्जकुण्डयोः सर्वस्यापि वृत्त-गर्भस्य क्षेत्रफलमिष्टं । अर्धचन्द्राभे तु वृत्तगर्भस्य फलस्यार्धमेव फलमिष्ट-मिति तत्रेष्टफलद्विगुणितफलको व्यासोऽपेक्षितः। स पूर्वोक्तभाजकार्धेनायाति । तथाचायुतगुणफलात् ५७६०००० पूर्वभाजकमर्धमितैः सप्तविंशत्युत्तरनव-शताधिकत्रिसहस्रैः ३९२७ भक्ते लब्धं १४६६ अस्य मूलं ३८।२।३ तत्परिमितो वृत्तव्यासः अर्धचन्द्राभे कुण्डे भवति । अयमेवाधिपदह्मभिरित्यनेनोक्तः ।

अस्य वृत्तकुण्डभाजकेनोक्तसद्दशाङ्कित्त्वेनोक्तः। योनौ तु योनिकुण्डे तु अयुतगुणफलात् ५७६०००० सार्धत्रिनवकररसैः सार्धत्रिनवत्युत्तरद्विशताधिकषट्सहस्त्रैः ६२९३।४ भक्ते लब्धं ९१५ अस्य मूलं ३०।२ वृत्तव्यासो भवति। अयमेवात्र सपात् खानल इत्युक्तः। इतःपरं त्र्यादिदोष्षु त्र्यस्राद्यष्टास्रान्तेषु षट्कुण्डेषु क्रमाद्भाजका ज्ञेया इति भावः। तथाच त्र्यस्रे अयुतगुणफलात् ५७६०००० सार्धसप्ताब्धिदन्तैः सार्धसप्तचत्वारिंशदुत्तरद्विशताधिकत्रिसहस्रैः ३२४७।४ भक्ते लब्धं १७७४ अस्य मूलं ४२।१ वृत्तव्यासः। अयमेव द्व्वेदे सयवे इत्युक्तः। चतुरस्रेऽयुतगुणफलात् ५७६०००० खाभ्राभ्राथैः पञ्चसहस्रैः ५००० भक्ते लब्धं ११५२ अस्य मूलं ३३।७।४ वृत्तव्यासः। अयमेव करामेऽकले इत्युक्तः। पञ्चास्रेऽयुतगुणफलात् ५७६०००० सहांघ्रिश्रुतिकनवशरैः सपादचतुश्चत्वारिंशदुत्तरनवशताधिकपञ्चसहस्रैः ५९४४।२ भक्ते लब्धं ९६९ अस्य मूलं ३१।१ वृत्तव्यासः। अयमेव क्ष्मारामे सयवे इत्युक्तः। षडस्रेऽयुतगुणफलात् ५७६०००० धीनवाम्भोरसैः पञ्चनवत्युत्तरचतुःशताधिकषट्सहस्रैः ६४९५ भक्ते लब्धं ८८६ अस्य मूलं २९।६ वृत्तव्यासः। अयमेवानंघ्रौ खरामे इत्युक्तः। सप्तास्रेऽयुतगुणफलात् ५७६००००क्ष्मावार्धीभर्तृभिः एकचत्वारिंशदुत्तराष्टशताधिकषट्सहस्रैः ६८४१ भक्ते लब्धं ८४१ अस्य मूलं २९ वृत्तव्यासः। अयमेव गोद्वावित्यनेनोक्तः। अष्टास्रेऽयुतगुणफलात् ५७६०००० भूनगगगननगैः एकसप्तत्युत्तरसप्तसहस्रै ७०७१ भक्ते लब्धं ८१४ अस्य मूलं २८॥४ वृत्तव्यासः। अयमेवापदल इत्युक्तः। एवं द्विचतुःषडष्टघ्नं कृत्वा तदयुतगुणे पूर्वोक्तभाजकैर्भक्ते लब्धं तन्मूलेन तत्तत्प्रकृतिवृत्तव्यासोत्पत्तिर्भवतीति ॥ १४ ॥

**मिताक्षरा**—अथेदानीं वृत्तेऽब्ज इत्यादिना व्यासा उक्तास्तदानयनप्रकारं गणितेनाह-**वृत्तेऽब्जेऽब्धीष्विभाश्वैरिति**। वृत्ते वृत्तकुण्डे अब्जे पद्मकुण्डे च चतुःपञ्चाशदुत्तराष्टसप्ततिशतानि ७८५४ भाजको भवति। अयुतगुणफलात् दशसहस्रगुणितात्फलात्। फलं तु षट्सप्तत्युत्तरपञ्चशतं ५७६ तत् दशसहस्रगुणितमुक्तभाजकेन भक्ते सति तत्तत्कुण्डस्य वृत्तव्यासो भवति। तस्य मूलं क्रमात् त्र्यादिदोष्षु त्र्यादिपदेन त्र्यस्रादीनि कुण्डानि तेषु वृत्तव्यासो भवति इत्यर्थः। दोःशब्दो भुजवाची। यथोदाहरणम्—फलं ५७६ अयुतगुणे ५७६०००० उक्तभाजकेन ७८५४ भक्ते लब्धं ७३३।३ अस्य मूलं

२७।०।६ पञ्चकुण्डस्याप्ययमेव व्यासः । द्विहस्ते द्विगुणं ११५२ अयुतगुणं ११५२०००० उक्तभाजकेन भक्ते लब्धं १४६६।६ अस्य मूलं ३८।२।३ त्रिहस्ते १७२८ अयुतगुणं १७२८०००० उक्तभाजकेन भक्ते लब्धं २२००।१।१ अस्य मूलं ४६।७।२ चतुर्हस्ते चतुर्गुणं २३०४ अयुतघ्नं २३०४०००० प्राग्वद्भक्ते लब्धं २९३३।४।२ अस्य मूलं ५४।१।३ पञ्चहस्ते पञ्चगुणं २८८० अयुतघ्नं २८८००००० उक्तरीत्या भक्ते लब्धं ३६६६।७ अस्य मूलं ६०।४।३ षड्ढस्ते षड्गुणं ३४५६ अयुतघ्नं ३४५६०००० उक्तवल्लब्धं ४४००।२।२ अस्य मूलं ६६।२।३ सप्तहस्ते सप्तगुणं ४०३२ अयुतघ्नं ४०३२०००० उक्तवल्लब्धं ५१३३।५ अस्य मूलं ७१।५।१ अष्टहस्तेऽष्टगुणं ४६०८ अयुतघ्नं ४६०८०००० उक्तवल्लब्धं ५८६७ अस्य मूलं ७६।४।६ नवहस्ते नवगुणं ५१८४ अयुतघ्नं ५१८४०००० उक्ताङ्केन लब्धं ६६००।३।५ अस्य मूलं ८१।२ दशहस्ते दशगुणं ५७६० अयुतघ्नं ५७६००००० उक्तवल्लब्धं ७३३३।६।५ अस्य मूलं ८५।५ एवं यथेष्टहस्तादौ ज्ञेयम् ॥ ॥ अर्धचन्द्रे इममेव भाजकमर्धीकृत्य यद्वा फलं द्विगुणीकृत्य दशसहस्रेण गुणयित्वा पूर्वभाजकेन भक्तं चेदर्धचन्द्रव्यासो भवति । यथोदाहरणम्—पूर्वभाजकार्धं ३९२७ जातोऽयं भाजकः। फलं ५७६०००० अयुतघ्नं भाजकार्धेन भक्तं १४६६।६।५ अस्य मूलं ३८।२।३ यद्वा फलं द्विगुणमयुतघ्नं ११५२०००० पूर्वभाजकेन भक्ते लब्धं १४६६।६।५ अस्य मूलं ३८।२।३ जातं । स एवार्धचन्द्रव्यासः । द्विगुणादौ वृत्तोक्तवत् । योनौ तु सार्धत्रिनवकररसैः ससार्धत्रिनवतिद्विषष्टिशत्या भक्ते पूर्ववद्व्यासो भवति । यथा फलमयुतघ्नं ५७६०००० उक्तभाजकः ६२९३।४ भाजकाङ्के अवयवाङ्कसत्त्वात् सवर्णितौ भाज्य ४६०८०००० भाजकौ ५०३४८ जाते द्वे अपि संख्ये यवरूपे भक्ते लब्धं ९१५।१।७ अयमेव योनिकुण्डव्यासवर्गः । अस्य मूलं ३०।२ द्विहस्तादावुक्तवत् ॥ ॥ अथत्र्यस्रादिभाजकानाह—सार्धसप्ताब्धिदन्तैः सार्धचत्वारिंशदुत्तरद्वात्रिंशच्छतानि भाजकः ३२४७।४ पूर्ववत्सवर्णितौ भाज्य ४६०८०००० भाजकौ २५९८० भक्ते लब्धं १७७३।५।३ अस्य मूलं ४२।१ जातोऽयं त्र्यस्रवृत्तव्यासः । द्विहस्तादावुक्तवत् ॥ ॥ अथ चतुरस्रे खाभ्राभ्रार्थैः ५००० पञ्चसहस्रमितो भाजकः । फलमयुतगुणं ५७६०००० भक्ते लब्धं ११५२ अस्य मूलं ३३।७।४ जातोऽयं चतुरस्रवृत्तव्यासः ॥ ॥ अथ पञ्चास्रे सप्ताङ्घ्रिश्रुतिकनवशरैः

५९४४।२ सयवद्वयचतुश्चत्वारिंशदुत्तरैकोनषष्टिशतानि भाजको भवति। अत्र भाज्यभाजकौ सवर्णनीयौ। यथा भाज्यः ४६०८०००० भाजकः ४७५५ भक्ते लब्धं ९६९ अस्य मूलं ३१।१ जातोऽयं पद्मास्रवृत्तव्यासः॥ ॥ अथ षडस्रे धीनवाम्भोरसैश्च ६४९५ पञ्चनवत्यधिकचतुःषष्टिशतानि भाजकः। भाज्यः ५७६०००० भक्ते लब्धं ८८६।६।५ अस्य मूलं २९।६ जातोऽयं षडस्रवृत्तव्यासः ॥ ॥ अथ सप्तास्रे क्ष्मावार्धीभर्तुभिः एकचत्वारिंशदुत्तराष्टषष्टिशतानि भाजकः ६८४१ भाज्यः ५७०००० भक्ते लब्धं ८४७।७।६ अस्य मूलं २९ जातोऽयं सप्तास्रवृत्तव्यासः॥ ॥ अथाष्टास्रे भूनगगगननगैः एकसप्तत्युत्तरसप्ततिशतानि भाजकः ७०७१ भाज्यः ५७६००००० भक्ते लब्धं ८१४।४।६ अस्य मूलं २८।४ जातोयमष्टास्रवृत्तव्यासः। द्विहस्तादौ प्राग्वत् ॥ १३ ॥

सुप्रभा—एवं साङ्गोपाङ्गं कुण्डजातं मण्डपजातं चोक्त्वा तृतीयवृत्तप्रोक्तानां प्रकृतिवृत्तव्यासान्तं भुजानां चोपपत्तिं वक्तुकामः प्रकृतिवृत्तव्यासानयनमाहैकेन श्लोकेन–वृत्तेऽब्जे इति। वृत्ते वृत्तकुण्डे। अब्जे पद्मकुण्डे च अयुतगुणफलात् अयुतं दशसहस्रं तेन गुणितं यत्क्षेत्रफलं स्वेष्टक्षेत्रफलं ५७६०००० तस्मात् एकहस्तात्मककुण्डस्य मूलभूतं यत्षट्सप्तत्युत्तरपञ्चशतात्मकं क्षेत्रफलं दशसहस्रेण गुणयित्वा जातफलादित्यर्थः। अब्धीष्विभाश्वैः ७८५४ अनया भाजकसंख्यया भक्ते सति लब्धमूलेन यल्लब्धं ७३३ तस्य मूलं २७।०।५ तेन वृत्तव्यासः प्रकृतिवृत्तव्यासः एकहस्तवृत्तपद्मकुण्डसाधनको वेदितव्यः। अयमेव पूर्वं तृतीयश्लोके "वृत्तेऽब्जे वलयोऽधिभै" रित्यनेन दर्शितः। अर्धचन्द्रे इमामेव भाजकसंख्यामर्धीकृत्य भक्ते, अथवा मूलक्षेत्रफलं द्विगुणीकृत्यायुतगुणं च कृत्वा पूर्ववदुक्तभाजकेन भक्ते सति लब्धमूलेन पूर्ववद्व्यासो भवति। यथा—क्षेत्रफलं ५७६ अयुतगुणं ५७६०००० उक्तभाजकसंख्या ७८५४ अस्या अर्धं ३८२७ अनेन भक्ते लब्धं १४६६।६ अस्य मूलं ३८।२।३ अथवा क्षेत्रफलं ५७६ इदमेव द्विगुणितं ११५२ अयुतगुणं ११५२०००० उक्तभाजकेन ७८५४ भक्ते लब्धं १४६६।६ अस्य मूलं ३८।२।३ तेन वृत्तव्यासः। अयमेव पूर्वं अधिपदह्यग्निः इत्यनेन दर्शितः। योनौ तु क्षेत्रफलं ५७६ अयुतगुणं ५७६०००० सार्धत्रिनवकररसैः ६२९३।४ अनेन भाज केन भक्ते लब्धं ९१५ अस्य मूलं ३०।२ वृत्तव्यासो

भवति। अयमेव पूर्वं सपात्खानलः इत्यनेन दर्शितः। त्र्यादिदोष्षु क्रमात् क्रमशः त्र्यस्रप्रभृति वस्वस्रान्तेषु षट्सु कुण्डेषु वक्ष्यमाणा भाजकसंख्या वेदितव्येति। त्र्यस्रे क्षेत्रफलं ५७६ अयुतगुणं ५७६०००० सार्धसप्ताब्धिदन्तैः ३२४७।४ अनेन भक्ते लब्धं १७७४ अस्य मूलं ४२।१ वृत्तव्यासः। अयमेव पूर्वं दृग्वेदे सयवे इत्यनेन दर्शितः। चतुरस्रे क्षेत्रफलं ५७६ अयुतगुणं ५७६०००० खाभ्राभ्रार्थैः ५००० अनेन भक्ते लब्धं ११५२ अस्य मूलं ३३।७।४ वृत्तव्यासः। अयमेव पूर्वं करामेऽकले इत्यनेन दर्शितः। पञ्चास्रे क्षेत्रफलं ५७६ अयुतगुणं ५७६०००० सद्वांघ्रिश्रुतिकनवशरैः ५९४४।२ अनेन भक्ते लब्धं ९६९ अस्य मूलं ३१।१ वृत्तव्यासः। अयमेव पूर्वं क्ष्मारामे सयवे इत्यनेन दर्शितः। षडस्रे क्षेत्रफलं ५७६ अयुतगुणं ५७६०००० धीनवाम्भोरसैः ६४९५ अनेन भक्ते लब्धं ८८६ अस्य मूलं २९।६ वृत्तव्यासः। अयमेव अनंघ्रौ खरामे इत्यनेन दर्शितः। सप्तास्रे क्षेत्रफलं ५७६ अयुतगुणं ५७६०००० क्ष्मावार्धीभर्तुभिः ६८४१ अनेन भक्ते लब्धं ८४१ अस्य मूलं २९ वृत्तव्यासः। अयमेव पूर्वं गोद्वौ इत्यनेन दर्शितः। अष्टास्रे क्षेत्रफलं ५७६ अयुतगुणं ५७६०००० भूनगगगननगैः ७०७१ अनेन भक्ते लब्धं ८१४ अस्य मूलं २८।४ वृत्तव्यासः। अयमेव पूर्वं गोद्वावपदले कृतेत्यनेन दर्शितः। एवमेव द्वित्रिचतुःपञ्चषट्सप्ताष्टनवदशहस्तेषु दशविधेष्वपि कुण्डेषु स्वस्वक्षेत्रफलं अयुतगुणं कृत्वोक्ततत्तद्भाजकेन भक्त्वा लब्धमूलेन प्रकृतिवृत्तव्यासा आनेतव्या इति॥ १४॥

इष्टव्यासमितैर्भुजैः समचतुष्कोणं विधायाङ्कयेत्
कर्णार्धेऽर्धमुखेंऽसतोऽपरदिशि श्रोत्रेऽप्युदक् चांसतः।
मूलं त्र्यादिगुणे फले वदनतः पार्श्वेऽर्धपुच्छेंऽसतः
पार्श्वार्धेऽर्धमुखे कटौ द्विगुणिते कर्णाच्च पार्श्वे दले ॥१५॥

मरीचिका—एवमेकहस्तानां भुजानां च योन्याद्यङ्गसहितानां मानमुक्तम्। द्विहस्तादौ मूलसूत्रानयनप्रकारं गणितानभिज्ञानां सुगममाह—इष्टव्यासेति। स्वेष्टमानकसमचतुरस्रे दक्षिणांसाद्दक्षिणभुजरेखायां कर्णार्धसूत्रमिते देशे चिह्नं कुर्यात्। तदर्धसंज्ञं। तथा मुखाधांवधि सूत्रं गृहीत्वा-

तदपि दक्षिणांसाद्दक्षिणरेखायामेव चिह्नं कार्यं । इदं त्रिपाच्चिह्नं अर्धमुखसंज्ञं च । तथा दक्षिणांसात्पूर्वमुखभुजसमसूत्रे कर्णान्ते चिह्नं कुर्यात् । ततश्च मुखपार्श्वयोर्यत्सूत्रं तद्द्विगुणितं द्विहस्तमूलं । तथा मुखादर्धावधि सूत्रं द्विगुणितं त्रिहस्तमूलं । मुखपुच्छसूत्रं द्विगुणितं चतुर्हस्तमूलं । उत्तरांसाद्दक्षिणपार्श्वसूत्रं द्विगुणितं पञ्चहस्तमूलं तत उत्तरांसादर्धसूत्रं द्विगुणितं षड्ढस्तमूलं । उत्तरांसात्त्रिपात्सूत्रं द्विगुणितं सप्तहस्तमूलं । उत्तरांसाद्दक्षिणश्रोणिसूत्रं द्विगुणितं अष्टहस्तमूलं । ततश्चतुरस्रबहिस्थात्कर्णान्ताद्दक्षिणपार्श्वसूत्रं द्विगुणितं नवहस्तमूलं । तत एवार्धसूत्रं द्विगुणितं दशहस्तमूलं । अत्र सर्वत्र सत्कृत्योर्योगपदं कर्ण इति प्रकारेण यः कर्णो जायते स एव द्विगुणितश्चेच्चतुर्गुणितस्य पदं भवति । यथा मुखादंसो द्वादशाङ्गुलः । अंसात्पार्श्वोपि द्वादशाङ्गुलः । एवं तयोर्वर्गावेकीकृतौ २८८ एतदेव चतुर्गुणितं ११५२ एवमर्धवर्गः २८८ पादवर्गेण १४४ मिश्रः ४३२ अस्य मूलं त्रिपादी २१ अयमेव चतुर्गुणितः १७२८ एवमादि सर्वत्रोन्नेया श्लोकार्थयोजना स्पष्टा ॥१४॥

दीधितिः—अथ गणितानभिज्ञानां सुखेन तज्ज्ञानायापि च ग्रन्थान्तरोक्तकुण्डवृद्धिविषये व्यासादिवृद्धिज्ञानायाह—इष्टव्यासमितैरिति । समभुवि इष्टव्यासमितैश्चतुर्भिर्भुजैः समकोणं चतुष्कोणं विधाय दिक्चिह्नेषु तदन्तरालस्य कोणेषु च वृत्तवन्मुखांसादीनि कल्प्यानि । ततो यमदिशि दक्षिणांसाद्दक्षिणस्यामेव भुजरेखायां । कर्णार्धे इति अंसात् गर्भचिह्नपर्यन्तेन सूत्रेण कर्कटेन वा चिह्नं कुर्यात् । तच्चिह्नमप्यर्धसंज्ञं ज्ञेयं । मुखादर्धपर्यन्तेन सूत्रेण दक्षिणांसादेव दक्षिणस्यामेव भुजरेखायां तच्चिह्नान्तरं क्रियते तदर्धमुखसंज्ञं । अथ तस्मादेव दक्षिणांसादुदक्श्रोणिपर्यन्तेन सूत्रकर्कटकान्यतरेण संपूर्णकर्णमितेन स्वमार्गवृद्धप्राग्भुजरेखायामुत्तरदिशि चिह्नं कुर्यात् । तत्तूत्तरांसादप्युत्तरतो वहिर्भवति । तदपि कर्णसंज्ञं ज्ञेयं । अथ व्यादिगुणे फले क्षेत्रान्तः संपादयितुमिष्टे सति क्रमेण वक्ष्यमाणसूत्रे द्विगुणिते कृते मूलमितिमूलसूत्रं वेदितव्यं । स्वेष्टव्याससूत्रप्रमाणं भवतीति यावत् । तत्र मुखतो दक्षिणभुजरेखास्थपार्श्वचिह्नपर्यन्तसूत्रे द्विगुणे द्विहस्तमूलसूत्रं स्यात् । मुखत एवार्धचिह्नपर्यन्ते त्रिहस्तस्य । मुखतएव पुच्छपर्यन्तेऽर्धमुखाङ्कपर्यन्ते वा चतुर्हस्तस्य । अथांसत इत्युत्तरांसोऽत्र विवक्षितः दक्षिणांसग्रहणे प्रत्यक्षविरोधात् । उत्तरांसाद्दक्षिणपार्श्वपर्यन्ते पञ्चहस्तस्य । अर्धाङ्कपर्यन्ते षड्ढ-

स्तस्य । अर्धमुखाङ्कपर्यन्ते सप्तहस्तस्य । दक्षिणश्रोणीपर्यन्तेऽष्टहस्तस्य । अथ कर्णचिह्नाद्दक्षिणपार्श्वपर्यन्ते नवहस्तस्य । अर्धाङ्कपर्यन्ते दशहस्तस्य । द्विगुणं सर्वत्र ज्ञेयं । ततोऽग्रे कुण्डमेव न क्वचिदपि विहितमस्ति । यद्यपि षोडशहस्तं कोटिहोमे क्वचिद्विहितमस्ति । तत्र षोडशानामकरणीगतत्वान्मूलं
४ अतश्चतुर्गुणेनैकहस्तसूत्रेण तन्मूलसूत्रं सुखेनैव ज्ञायत इति पृथङ्नोक्तम् ॥ ॥ अथात्र युक्तिरुच्यते । तत्र क्षेत्रफलाद्व्यासानयने युक्तिः पूर्वमेवोक्ता तथैव युक्त्या यद्येकगुणे फलेऽयं व्यासवर्गः तर्हि द्व्यादिगुणे क इति । अत्र प्रमाणेच्छयोः प्रमाणेनापवर्ते कृते रूपहरस्याविकृतत्वात् त्यागे फले गुण एव व्यासवर्गस्य गुणः । अतो द्व्यादिगुणाद्व्यासवर्गान्मूलं स्वेष्टफलव्यासः स्यात् एवं गणितप्रयासः । अतः क्षेत्रगतः सिद्धो व्यासो गृह्यते यथा—व्यासमितैः समचतुर्भुजैर्यत्समचतुरस्रं तद्भुजकोटी किल व्यासमिते । तद्वर्गयोगो हि द्विगुणो व्यासवर्गोऽतस्तन्मूलरूपेण कर्णेन तुल्यं द्विगुणे फले व्याससूत्रं स्यादिति किं चित्रम् । किंतु यद्वृत्तं निर्मेयं तद्व्यासार्धेनेति इष्टत्वाद्व्यासार्धं साध्यं । एवं कर्णे द्व्यपवर्तिते भुजकोटी अपि तथा द्व्यपवर्तिते भवत इति मुखादंसपर्यन्तं भुजोंऽसाच्च पार्श्वपर्यन्तं कोटिः ते व्यासार्धमिते तद्वर्गयोगो हि व्यासार्धवर्गो द्विगुणः व्यासवर्गस्य द्व्यादिगुणे प्राप्ते तच्चतुर्थांशरूपो व्यासार्धवर्गोऽपि द्व्यादिगुणः स्यात् । तन्मूलं कर्णार्धं स्यात् । अतो वदनतः पार्श्वपर्यन्तसूत्रं द्विहस्तवृत्तव्यासार्धं स्यादिति युक्तियुक्तम् ।

अथ तत्कर्णार्धं यद्यंसार्धचिह्नपर्यन्तं कोटिस्तर्हि तद्वर्गो व्यासार्धवर्गेण द्विघ्नेन समः मुखादंसपर्यन्तं व्यासार्धं भुजः । तद्वर्ग एकगुणः तद्योगे त्रिगुणो व्यासार्धवर्गः अतो वदनतोऽर्धाङ्कपर्यन्तं त्रिहस्तव्यासार्धमिति युक्तियुक्तमुक्तं । अथांसतोऽर्धमुखाङ्कपर्यन्तं तावती कोटिः त्रिघ्नो व्यासार्धवर्गस्तद्वर्गः मुखांसान्तरस्यैकगुणः तद्योगे चतुर्गुणः तत्र कर्णश्चतुर्हस्तव्यासार्धं तत्तु व्याससममेव स्यात् । यतो व्यासार्धवर्गश्चतुर्गुणो व्यासवर्ग एव स्यात् अतो मुखपुच्छान्तरे गृह्यते । अथोत्तरांसाद्दक्षिणांसपर्यन्तं व्यासो भुजः । तद्वर्गो हि व्यासार्धवर्गश्चतुर्गुणोस्ति । दक्षिणांसात्तत्पार्श्वपर्यन्तं व्यासार्धं कोटिः । तद्वर्गस्त्वेकगुणः । अतएवोत्तरांसाद्दक्षिणपार्श्वपर्यन्तं पञ्चहस्तव्यासार्धं । अथ तस्मिन्नेव भुजे यदि द्विहस्तव्यासार्धमिता कोटिस्तर्हि कोटिवर्गो द्विगुणो व्यासार्धवर्गो भुजवर्गश्चतुर्गुणः । तद्योगे षड्गुणः । अतोंऽसादर्धाङ्कपर्यन्तं षड्ढस्तव्यासार्धं स्यात् ।

यदि त्रिहस्तव्यासार्धं कोटिस्तदा तद्वर्गस्त्रिगुणो भवति । योगे सप्तगुणः । अतोंऽसादर्धमुखाङ्कपर्यन्तं सूत्रं सप्तहस्तव्यासार्धं । अथ यदि व्यासमितैक-कोटिस्तदा तद्वर्गोपि चतुर्गुणः स्यात् । योगेऽष्टगुणः । अतोंऽसाद्दक्षिणश्रोणीपर्यन्तं पूर्वकर्णमितमष्टहस्तव्यासार्धं स्यात् । अथ यदि कर्णमितो भुजस्तर्हि तद्व-र्गोऽष्टगुणो व्यासार्धवर्गः । दक्षांसपार्श्वान्तरे व्यासार्धं कोटिस्तद्वर्ग एकगुणः योगे नवगुणः अतः कर्णचिह्नात् पार्श्वपर्यन्तसूत्रं नवहस्तव्यासार्धं । अथ तस्मिन्नेव भुजे द्विहस्तव्यासार्धं च कोटिस्तर्हि तद्वर्गो द्विगुण इति योगे दशगुणः अतः कर्णाङ्कादर्धचिह्नपर्यन्तं दशहस्तव्यासार्धं । अथ यथोत्तरतः कर्णो भुजरूपः कृतः एवं स्वमार्गवृद्धे दक्षिणभुजे यदि पश्चात्कर्णाङ्कं कृत्वा तावत्पर्यन्तं कोटिः क्रियते तयोर्यः कर्णः स षोडशहस्तव्यासार्धं स्यात् । अत्रेष्टव्यास-मितैर्भुजैरित्युपलक्षणं तेनेष्टभुजमितैर्भुजैः समचतुरस्रं कृत्वा तत्र तेनैव प्रका-रेण द्विहस्तादौ भुजा अपि ज्ञेयाः ॥ १५ ॥

पद्मिनी—अथ द्विगुणितादौ कर्तव्ये गणितानभिज्ञानां सुगमार्थं शुल्बप्रकारमाह—इष्टश्चासौ व्यासश्चेष्टव्यासः इष्टव्यासेन मिता इष्टव्यास-मिताः तैरिष्टव्यासमितैः । इष्टव्यासके वृत्ते कृते तस्मिन्वृत्ते ये मिता गणिताः त्र्यस्रवृत्ते त्रिभुजाः चतुरस्रवृत्ते चतुर्भुजा इत्यादयः तादृशभुजैः समचतुरस्रं विधाय वक्ष्यमाणचिह्नादि कर्तव्यं । यद्वा समचतुष्कोणमित्युक्त्या वृत्तस्थच-तुरस्रभुजस्यैव ग्रहणं । तादृशचतुरस्रे वक्ष्यमाणं कार्यं । अथवा इष्टव्यासेन मिताः इष्टव्यासप्रमाणका इत्यर्थः । अयमेवार्थ उचितः पूर्वत्र लक्षणापातात् । अतएव रघुवीरदीक्षितैरपि गृहीतः । अत्र प्रथमकल्पे भुजा एवायान्ति । द्वितीयकल्पे वृत्तस्थचतुरस्रमेवायाति तस्य यः कर्णः तन्मूलसूत्रं । तृती-यकल्पे व्यास एवायाति । एतन्मध्ये यथारुचि समचतुष्कोणं विधायाङ्कयेत् चिह्नानि कुर्यात् । दक्षिणांसादपरदिशि दक्षिणबाहौ कर्णार्धमितदेशे चिह्नं कार्यं तदर्धसंज्ञं । मुखादर्धपरिमितसूत्रेण द्वितीयचिह्नं कार्यं । तदर्धमुखसंज्ञं । दक्षिणां-सात् उदगंस उत्तरस्यां दिशि श्रोत्रमितदेशे चिह्नं कार्यं । अंसतः तेन उदगंसत उत्तरस्यां दिशीत्यर्थो लब्धः । उदक्कांशत इत्यत्रोदक्पदस्य तन्त्रता ज्ञातव्या । चकारेणोत्तरत्रांसपदे उदक्पादस्यानुवृत्तिर्ज्ञातव्या । अत्र पूर्वोक्तांसपदेन दक्षिणांसाच्छ्रोत्रमितदेशेऽङ्कने सिद्धश्चेदुदक्कांसत इत्यत्रांसपदं व्यर्थं सत् ज्ञाप-यति चतुष्कोणं विधायाङ्कयेदिति । अनेन चतुरस्राद्बहिरङ्कनं प्राप्तं प्रतिषेधति

नतूत्तरांसाच्छ्रोत्रमितदेशे चिह्नकरणत्वं साधयति। अत एवात्रांसपदस्योदगंसपरत्वमित्यपि सुवचं। नच चतुरस्राभ्यन्तरे श्रोत्रमितदेशस्यासंभवेनार्थाद्बहिरङ्कनसिद्ध्या नाप्राप्तिरितिवाच्यम्। उदक्पदापरपादयोर्वैयर्थ्यापत्तेः अर्थसिद्धेः सर्वत्र समत्वात्। एवं चतुष्कोणविधानस्यापि वैयर्थ्यात् कोटिभुजाभ्यामेव प्रकृतार्थसिद्धेः सत्त्वात्। तस्माद्दक्षिणांसं मिलित्वा यथा श्रोत्रमितदेशे चिह्नं भवति तथा कार्यमिति सिद्धम्। अत्रोदग्ग्रहणेनैव पूर्वो दक्षिणांस इति सिद्धं। पूर्वोक्तानि मुखादिसंज्ञकानि तान्यपि कार्याणि। तत्र मुखात्पार्श्वावधिसूत्रं द्विगुणितं द्विहस्ते मूलं। मुखादर्धावधि सूत्रं द्विगुणितं त्रिहस्तमूलं। मुखात्पुच्छावधि सूत्रं द्विगुणितं चतुर्हस्तमूलं। उदगंसतः पार्श्वावधिसूत्रं द्विगुणितं पञ्चहस्तमूलं। उदगंसतः अर्धावधिसूत्रं द्विगुणितं षड्ढस्तमूलं। उदगंसतः अर्धमुखावधिसूत्रं द्विगुणितं सप्तहस्तमूलं। उदगंसतो दक्षिणश्रोण्यवधिसूत्रं द्विगुणितमष्टहस्तमूलं। श्रोत्रपरिमितदेशस्थचिह्नात्पार्श्वावधिसूत्रं द्विगुणितं नवहस्तमूलं। पुनस्तस्मादेव चिह्नादर्धावधिसूत्रं द्विगुणितं दशहस्तमूलं। अत्र तत्कृत्योर्योगपदं कर्ण इत्यनेनैव सर्वत्र ज्ञेयं। यथा—मुखाद्दक्षिणांसो द्वादशाङ्गुलः। दक्षिणांसात्पार्श्वोपि द्वादशाङ्गुलः। उभयोः कृत्योर्योगः २८८ अस्य मूलं १६।७।६ एवमस्य कृतिः ८८ द्वादशाङ्गुलस्य कृतिः १४४ एतयोर्योगः ४३२ अस्य मूलं २०।६।२ इदं त्रिहस्तसूत्रं। पुनरस्य कृतिः ४३२ द्वादशाङ्गुलकृतिः १४४ योगः ५७६ मूलं २४ इदं द्विगुणितं चतुर्हस्तसूत्रं। अस्य कृतिः ५७६ द्वादशाङ्गुलकृतिः १४४ योगः ७२० अस्य मूलं २६।६।५ द्विगुणितं पञ्चहस्तमूलं। एवं भुजस्य चतुर्विंशत्यङ्गुलात्मकत्वात्तस्य कृतिः ५७६ कोटिस्तु कर्णार्धपरिमिता १६।७।६ अस्य कृतिः २८८ एतयोर्योगः ८६४ अस्य मूलं २९।३।११५ इदं द्विगुणितं षड्ढस्तमूलं। एवं त्रिपात्सूत्रस्य कृतिः ४३२ भुजस्य कृतिः ५७६ योगः १००८ अस्य मूलं ३१।६ इदं द्विगुणं सप्तहस्तमूलं भुजकृतिः ५७६ कोटिकृतिः ५७६ योगः ११५२ अस्य मूलं ३३।७।४ इदं द्विगुणमष्टहस्ते मूलं। अस्य वर्गः ११५२ द्वादशाङ्गुलकृतिः १४४ एतयोर्योगः १२९६ अस्य मूलं ३६ इदं द्विगुणं नवहस्तमूलं। एवं कर्णवर्गः ११५२ दलवर्गः २८८ अनयोर्योगः १४४० अस्य मूलं ३७।७।५ इदं द्विगुणं दशहस्तमूलं॥ ननु एकहस्तस्य भुजः २४ सैव कोटिः २४ एतयोः कृतिः

५७६।५७६ योगः ११५२ पदं ३३।७।४ कर्णः इदं द्विहस्तमूलं । अस्य कृतिः ११५२ कोटिस्तु पूर्वैव २४ तस्या अपि कृतिः ५७६ योगः १७२८ अस्य मूलं ४१।४४ इदं त्रिहस्तमूलसूत्रं । एवं पूर्वा कोटिः सर्वत्र । भुजस्तु यः पूर्वं कर्णरूपेणागतः स एव । एवं तस्य यः कर्णः स भुजः कोटिस्तु पूर्वैव । एवंरीत्या यावद्विवक्षितं तावत्कर्तव्यमिति लाघवेन सिद्धौ पुनराचार्यैर्गुरुभूता युक्तिः किमर्थं स्वीकृतेति चेन्न स्थूललाघवादिति संक्षेपः ॥ १५ ॥

नौका—अथैकहस्तात्मकदशविधकुण्डानां वृत्तव्यासास्तृतीयवृत्ते कण्ठव उक्तास्ते गणितानभिज्ञानां ज्ञातुं योग्याः । द्विहस्तादिकुण्डव्यासज्ञानार्थं तेषां सुगमोपायमाह—इष्टव्यासमितैरिति । इष्टव्यासमितैः इष्टा ये यूकापञ्चकाधिकसप्तविंशत्यङ्गुलादिपरिमिता व्यासास्तत्परिमिता ये भुजास्तादृशैर्भुजैः वृत्तादिदशविधकुण्डेषु तत्तद्द्विहस्तादिदशहस्तान्तवृत्तव्यासवृद्ध्यर्थं तत्तदेव हस्तकुण्डव्यासाङ्गुलपरिमितैर्भुजैरित्यर्थः । समचतुष्कोणं समचतुरस्रं विधायाङ्कयेत् वक्ष्यमाणस्थानेषु चिह्नानि कुर्यादित्यर्थः । तानि कानि स्थानानीत्यपेक्षायामाह—अपरदिशि दक्षिणस्यांदिशि अंसतश्चतुरस्रस्य दक्षांसात् कर्णार्धे चतुरस्रमध्यगतं यत्कर्णसूत्रद्वयं तदेककर्णार्धमितसूत्रेण दक्षभुज एव चिह्नं कुर्यात् । तदर्धाख्यं चिह्नं कर्णार्धपरिमितत्वात् । ततो दक्षांसत एवार्धमुखे मुखार्धचिह्नपर्यन्तेन सूत्रेण प्राग्वद्दक्षभुज एव चिह्नं कार्यं तदर्धमुखाख्यं मुखार्धपरिमितत्वात् । ततश्चतुरस्रप्राग्भुजं उदक् उत्तरतो वर्धयित्वा अंसतः दक्षांसत एव तस्मिन्वर्धितसूत्रे चतुरस्राद्बहिः कर्णपरिमितेन सूत्रेण चिह्नं कार्यं । तत्कर्णाख्यं कर्णपरिमितत्वात् । एवं चिह्नत्रयं विधाय वदनतश्चतुरस्रमुखात्पार्श्वार्धपुच्छे मुखात्पार्श्वान्तमेकं सूत्रं । मुखादेवार्धान्तं द्वितीयसूत्रं । ततएव पुच्छान्तं तृतीयसूत्रं । तथांसतः पार्श्वेऽर्धेऽर्धमुखे कटौ उत्तरांसतो दक्षपार्श्वान्तं चतुर्थसूत्रं । ततएवार्धचिह्नान्तं पञ्चमसूत्रं । तत एवार्धमुखान्तं षष्ठसूत्रं । ततएव दक्षश्रोणीपर्यन्तं सप्तमसूत्रं । कर्णाच्चपार्श्वे दलेन चतुरस्राद्बहिःस्थकर्णचिह्नाद्दक्षपार्श्वान्तमष्टमसूत्रं । ततएवार्धाख्यचिह्नान्तं नवमसूत्रं । एवं नवसूत्राणि दत्वा द्व्यादिगुणे फले द्विआदिगुणे एकहस्तक्षेत्रफले सति द्विगुणिते तत्सूत्रे द्विगुणिते मूलं द्वित्र्यादिफलककुण्डमूलं तत्तद्धस्तात्मककुण्डवृत्तव्यासइत्यर्थः । तथाच प्रथमसूत्रं द्विगुणं द्विहस्तात्मककुण्डव्यासरूपं मूलं भवति । द्वितीयसूत्रं द्विगुणितं त्रिहस्तात्मकस्य मूलं । तथैव तृतीयादिनवमान्तानि

सूत्राणि द्विगुणितानि क्रमाच्चतुर्हस्तात्मकादि—दशहस्तात्मकान्तानां कुण्डानां वृत्तव्यासात्मकानि मूलानि भवन्तीति ॥ १५ ॥

**सिताक्षरा**—एवं पूर्वोक्तव्यासानामानयनमुक्त्वा अधुना द्विगुणादौ कर्तव्ये गणितानभिज्ञानां सुगमार्थं शुल्बप्रकारमाह—इष्ट इति । इष्टो यो व्यासस्तन्मितैर्भुजैः । अथवा इष्टव्यासे ये मिताः इष्टव्यासके वृत्ते कृते तस्मिन्ये मिता गणिताः त्र्यस्रे त्रिभुजाः चतुर्भुजे चतुर्भुजा इत्यादयः । अथवा इष्टभुजैः समचतुरस्रं विधाय वक्ष्यमाणचिह्नादिकर्तव्यं तदा प्रथमकल्पे वृत्तव्यास एवायाति । द्वितीये वृत्तस्थं चतुरस्रं तृतीये भुजा एवेति तत्र यथारुचि समचतुरस्रं विधायाङ्कयेत् चिह्नानि कुर्यात् । अंस इत्यत्र पूर्वं दक्षिणांसो ग्राह्यः अग्रे उदक्पदोपादानात् । पूर्वं यः अंसो गृहीतस्तद्विपरीतोऽनन्तरं ग्राह्य इति वा । तेन दक्षिणांसादपरदिशि दक्षिणबाहौ कर्णार्धमिते देशे चिह्नं कार्यं तदर्धसंज्ञं । मुखादर्धपरिमितसूत्रेण द्वितीयं चिह्नं कार्यं तदर्धमुखसंज्ञं । दक्षिणांसत उत्तरस्यां दिशि श्रोत्रमितदेशे चिह्नं कार्यं । तेन उदगंसत उत्तरस्यां दिशीत्यर्थो लब्धः । अत्रोदग्ग्रहणेनैव पूर्वो दक्षिणांस इति सिद्धम् । पूर्वोक्तानि मुखादिसंज्ञकानि तान्यपि कार्याणि । मूलं द्व्यादिगुणे फले कर्तव्ये सति मूलसूत्रं भवति । तत्र मुखात्पार्श्वावधिसूत्रं द्विगुणितं द्विहस्तमूलं । मुखादर्धावधिसूत्रं द्विगुणं त्रिहस्तमूलं । मुखात्पुच्छावधिसूत्रं द्विगुणं चतुर्हस्तमूलं । उदगंसतः पार्श्वावधिसूत्रं द्विगुणं पञ्चहस्तमूलं । उदगंसतः अर्धावधिसूत्रं द्विगुणं षड्ढस्तमूलं । उदगंसतः अर्धमुखावधिसूत्रं द्विगुणं सप्तहस्तमूलं । उदगंसतः दक्षिणश्रोण्यवधिसूत्रं द्विगुणं अष्टहस्तमूलं । श्रोत्रपरिमितचिह्नात्पार्श्वावधिसूत्रं द्विगुणितं नवहस्तमूलं । पुनस्तस्मादेव चिह्नादर्धावधिसूत्रं द्विगुणितं दशहस्तमूलसूत्रं । अत्र सर्वत्र तत्कृत्योर्योगे पदं कर्ण इत्यनेनोपपत्तिर्ज्ञेयेति ॥ १५ ॥

**सुप्रभा**—अथ गणितानभिज्ञानां तृतीयश्लोके सिद्धा व्यासा उक्तास्तेषां द्विहस्तादौ वृद्धिप्रकारः सुलभतया ज्ञातो भवतु तदर्थं शुल्बसूत्रानुसारिणं सुगमोपायमाहैकेन श्लोकेन—इष्टव्याससमितैरिति । इष्टश्चासौ व्यासश्चेष्टव्यासस्तस्मिन्ये मिता गणितास्तैर्भुजैः त्र्यस्रे त्रिभुजैः चतुरस्रे चतुर्भुजैः समचतुष्कोणं विधाय वक्ष्यमाणचिह्नैरङ्कयेत् । अस्मिन्पक्षे द्विहस्तादिदशहस्ता-

न्तानां भुजा एव समुत्पद्यन्ते। अथवा इष्टव्यासे इष्टव्यासात्मके वृत्ते मितैः कृतचतुरस्रभुजैः समचतुष्कोणं विधाय वक्ष्यमाणचिह्नैरङ्कयेत्। अस्मिन्पक्षे वृत्तगतचतुरस्रमेवोत्पद्यते। तस्य यत् कर्णसूत्रं तद्द्विहस्तादिदशहस्तान्तानां मूलसूत्रं भवति। अथवा इष्टव्यासेन मिता गणितास्तैः इष्टव्यासप्रमाणकैरित्यर्थः। भुजैः समचतुष्कोणं समचतुरस्रं विधाय कृत्वा अङ्कयेत् वक्ष्यमाणचिह्नैश्चिह्नितं कुर्यादिति भावः। अस्मिन्पक्षे वृत्तव्यासा एव समुत्पद्यन्ते। प्रकृते व्यासवृद्धिरेवापेक्षिता। सा चास्मिन्पक्षे एव लाघवेन सिध्यति अतोऽयमेव पक्षः साधुतर इति मन्ये। तानि चिह्नान्याह—अंसतोऽपरदिशि। अत्रांसो दक्षिणो ग्राह्यः। उत्तरत्रोदग्ग्रहणात्। दक्षांसतः अपरदिशि पश्चिमायां। समचतुरस्रस्य दक्षिणबाहौ दक्षपार्श्वमारभ्य दक्षश्रोणिपर्यन्तमित्यर्थः। कर्णार्धे दक्षांसादर्धचिह्नावधिकेन सूत्रेण कर्कटकेन वा दक्षिणभुजरेखायां चिह्नं कुर्यात्। तत् कर्णार्धसंज्ञं भवति। कर्णार्धेन कृतत्वात्। मुखात्कर्णार्धचिह्नावधिकेन सूत्रेण कर्कटकेन वा दक्षिणभुजरेखायां द्वितीयं चिह्नं कुर्यात्। तदर्धमुखसंज्ञं भवति। मुखार्धेन कृतत्वात्। अस्मादेव दक्षिणांसादुत्तरश्रोण्यवधिकेन सूत्रेण कर्कटकेन वा अंसत उत्तरांसतः उदक् बहिर्भागे उत्तरस्यां दिशि चिह्नं कुर्यात्। तदुत्तरांसतोऽप्युत्तरतस्तद्बहिर्भवति। तच्चापि कर्णसंज्ञं भवति। तन्मितसूत्रकृतत्वात्। वदनतश्चतुरस्रमुखतः पार्श्वे दक्षिणपार्श्वे मुखाद्दक्षिणपार्श्वावधिकं प्रथमं सूत्रं भवति। मुखादेवार्धे कर्णार्धे मुखात्कर्णार्धावधिकं द्वितीयं सूत्रं भवति। मुखादेव पुच्छे मुखात्पुच्छावधिकं तृतीयं सूत्रं भवति। तथा अंसत उत्तरांसात् पार्श्वे दक्षिणपार्श्वे उत्तरांसाद्दक्षिणपार्श्वावधिकं चतुर्थं सूत्रं भवति। उत्तरांसादेवार्धे उत्तरांसात्कर्णार्धावधिकं पञ्चमं सूत्रं भवति। उत्तरांसादेवार्धमुखे उत्तरांसादर्धमुखावधिकं षष्ठं सूत्रं भवति। उत्तरांसादेव कटौ उत्तरांसाद्दक्षिणश्रोण्यवधिकं सप्तमं सूत्रं भवति। कर्णाच्च पार्श्वे दले कर्णाच्चतुरस्राद्बहिरुत्तरस्यां कृतकर्णचिह्नात् पार्श्वे दक्षिणपार्श्वावधिकं अष्टमं सूत्रं। तत एव दले कर्णार्धचिह्ने चतुरस्राद्बहिर्गतकर्णात्कर्णार्धावधिकं नवमं सूत्रं। एवं नवसूत्राणि संपाद्य द्व्यादिगुणे। इदं कुण्डफलसूत्रयोरुभयोर्विशेषणं देहलीदीपन्यायेन" द्विरादिर्येषां तेषां द्वित्रिचतुःपञ्चषट्सप्ताष्टनवदशहस्तान्तानां कुण्डानां फले कर्तव्ये सति। तत्तत्पूर्वोक्तसूत्रे द्विगुणिते कृते सति तत्तद्धस्तात्मककुण्डक्षेत्रफलमूलं भवति। तत्तद्धस्तात्मककुण्डप्रकृतिवृत्तव्यासो भवतीत्यर्थः।

तथाहि प्रथमसूत्रं द्विगुणितं द्विहस्तात्मककुण्डव्यासरूपं भवति । द्वितीयं सूत्रं द्विगुणितं त्रिहस्तकुण्डव्यासरूपं भवति । तृतीयं सूत्रं द्विगुणं चतुर्हस्तकुण्डव्यासः । चतुर्थं सूत्रं द्विगुणं पञ्चहस्तकुण्डव्यासः । पञ्चमं सूत्रं द्विगुणं षड्ढस्तकुण्डव्यासः । षष्ठं सूत्रं द्विगुणं सप्तहस्तकुण्डव्यासः । सप्तमं सूत्रं द्विगुणमष्टहस्तकुण्डव्यासः । अष्टमं सूत्रं द्विगुणं नवहस्तकुण्डव्यासः । नवमंसूत्रं द्विगुणं दशहस्तकुण्डव्यास इति भावः ॥ १५ ॥

द्विहस्तादौ सुगमो वृद्धिप्रकारः




स्युर्वृत्तव्यासवर्गात्त्रियमकुचरणाभांशखाब्ध्यंशयुक्तौ
रामाश्वांशौ शरांशो नगकुलववियुक्त्र्यस्रतो बाहुवर्गाः ।
दोर्घ्नं दोर्व्यासकृत्योः खपदमिति फलं स्याच्चतुर्णां त्रिदोष्णां
पादघ्नं वृत्तदोष्णामिति मितिमवदच्छंकरो नैलकण्ठिः ॥१६॥

मरीचिका—पूर्वं येऽब्धीष्विभादयो भाजका उक्तास्तेषामुत्पत्तिमाह—अत्र वृत्तव्यासः शतं १०० तद्वर्गोऽयुतं १०००० "व्यासस्य वर्गे भनवाग्नि-३९२७ निघ्ने सूक्ष्मं फलं पञ्चसहस्रभक्ते" इत्युक्तरीत्या वृत्तफलं ७८५४ अनेनैव भाजकेनैकहस्तद्विहस्तादिफलमयुतघ्नं कृत्वा विभज्यते चेत् यल्लभ्यते तस्य मूलमेकद्विहस्तादिप्रकृतिवृत्तव्यासो भवति । अनेनैव भाजकेनार्धितेन तदेवायुतगुणं फलं भक्तं चेदर्धचन्द्रज्यावर्गो लभ्यते । पद्मकुण्डे तु शताङ्गुलस्य

वृत्तस्य नवमोंऽशः ११।१ इदमष्टगुणितं नवाशीतिः ८९ एतावानत्र मध्यमवृत्त-व्यासः। तथाऽधिवलयं सतत्त्वांशपंक्त्येत्युक्तं ११।१ अस्य तत्त्वांशः ३५।४।३ तद्योगे ११५।४ तत्र मध्यमवलयव्यासवर्गः ७९२१ अस्य सप्तमांशः स्वचत्वा-रिंशत्तमांशेन युक्तः ११५९ अस्य मूलं ३४ इदमत्रोत्पन्नानामष्टानां भुजानां प्रमाणं। इदमवधिवृत्तव्यासेन ११५।४ लम्बभूतेन गुणितं ३९२७ एतद्दलच-तुष्टयस्य फलं। एतदेव द्विगुणितं ७८५४ दलाष्टकफलं। योनिकुण्डस्य त्र्यस्र-पूर्वकत्वात्प्रथमं त्र्यस्रोत्पत्तिरुच्यते। वृत्तव्यासवर्गोऽयुतं तस्य त्र्यश्चरणाः ७५०० अयं त्र्यस्रे दोर्वर्गः। अस्य मूलं ८६।४।६ पादोनस्य दोर्वर्गस्य ५६२५ मूलं ७५ अयं लम्बः। अयं भुजार्धेन ४३।२।२ गुणितस्त्र्यस्रफलं ३२४७ भवति। त्र्यस्रभुजार्धमेव शतेन गुणितं योन्यन्तर्गतत्र्यस्रद्वयफलं ४३३० इदमेव पादद्वयाधिकं षडस्रफलं। एतदेवेष्टफलस्यायुतनिघ्नस्य भाजका भवन्ति। सार्धसप्ताब्धिदन्तैरित्यस्य धीनवाम्भोरसैश्चेति षडस्रे त्र्यस्रद्वयफलं ४३३० वृत्तार्धद्वयफलेन पूर्वोक्तवृत्तफलचतुर्थांशेन १९६३ युक्तं ६२९३।४ योनिकुण्डे फलं तत्संगृहीतं प्रागेव। चतुरस्रे तु दोर्व्यासकृत्योरन्तरमूलं लम्बभुजश्च तुल्य एव। अतस्तेनैव तद्गुणितं ५००० संगृहीतं खाभ्राभ्रार्थैरिति। पञ्चास्रे तु वृत्तव्यासवर्गस्य यस्तृतीयोंऽशः ३३३३।१।३ स स्वकीयसप्तविंशतितमेनां-शेन १२३।४ युक्तः ३४५६।५ अयं पञ्चास्रे दोर्वर्गः। अत्र दोर्व्यासकृत्योरन्तरं ६५४४ आद्यस्य मूलं ५८।६।२ द्वितीयस्य मूलं ८०।७ अनयोर्घातः ४७५५। इदं त्र्यस्रचतुष्टयस्य फलं स्वपादेन ११८८।६ वर्धितं ५९४४।२ इदं पञ्चास्रफलं। अतएवेष्टफलस्यायुतगुणस्यायं भाजकः ११८८।५ अयं सहांघ्रिश्रुतिकनवशरै-रित्यनेनोक्तः। तेनैकहस्तादौ तन्मूलेन पञ्चास्रप्रकृतिवृत्तव्याससंमितो भवति। अथ सप्तास्रे वृत्तव्यासवर्गस्य पञ्चमांशः २००० अयं स्वसप्तदशांशेन ११८ ऊनः सप्तास्रे दोर्वर्गः १८८२ अनेन न्यूनो व्यासवर्गः ८११८ आद्यस्य मूलं ४३।३।१ बाहुः। द्वितीयस्य मूलं ९१।१ अनयोर्घातः ३९१०।५ इदं त्र्यस्रच-तुष्टयफलं द्विगुणीकृत्य ७८२१।२ इदमष्टांशोनं ६८४१ इदं सप्तास्रफलं। पूर्ववदनेनायुतघ्ने फले भक्ते लब्धस्य मूलं सप्तास्रप्रकृतिवृत्तव्यासो भवति। अष्टास्रे तु तस्यैव व्यासवर्गस्य सप्तमोंशः स्वचत्वारिंशत्तमेनांशेन युक्तो दोर्वर्गः १४५६ अनेनोनो व्यासवर्गः ८५४४ आद्यस्य मूलं ३८।२।१ अथाष्टास्रे बाहुः द्वितीयस्य मूलं ९३।३।४ अनयोर्घातः ३५३५।२ अयं द्विगुणितः ७०७१

अष्टास्रे मूलं। इतः पूर्ववदष्टास्रिप्रकृतिवृत्तव्यासार्धः। श्लोकार्थस्तु वृत्तव्यासवर्गस्य त्रयश्चरणाः ७५०० त्र्यस्रदोर्वर्गः। द्वौ चरणौ ५००० चतुरस्रदोर्वर्गः। एकश्चरणः २५०० षडस्रे दोर्वर्गः। त्र्यंशः स्वसप्तविंशत्यंशेन युतः ३४५६ पञ्चास्रे दोर्वर्गः। सप्तमांशः स्वचत्वारिंशत्तमेनांशेन युक्तः १४५५ अष्टास्रे दोर्वर्गः। पञ्चमांशः स्वसप्तदशांशेन न्यूनः १८८२ अयं सप्तास्रे दोर्वर्गः। दोर्वर्गोनो व्यासवर्गो लंबो दोष्णा गुणितः त्र्यस्रचतुष्टयस्य फलं भवति। तदिदमुक्तं दोर्घ्नमित्यादि। खं विवरमन्तरमिति यावत्। इदं मूलं। इदमेव फलं। पादोनं त्र्यस्रिणि योज्यं क्रमादेकद्वित्रिचतुःपादाधिकपञ्चास्राादिषु कार्यं। विस्तरस्तु ग्रन्थान्तरेऽवगन्तव्यः। उपसंहरति–व्यासदोष्णामिति। दशविधकुण्डप्रकृतिव्यासानां एकहस्तद्विहस्तानां एकहस्तद्विहस्तमानभेदेन प्रत्येकं दशविधानां तथा दोष्णां बाहूनां शतसंख्यानामिति। अनेन प्रकारेण मितिं प्रमाणं भट्टशंकरनामा भट्टनीलकण्ठसुतोऽवदत् उक्तवान्॥

न परैरवगाहिता पुरः स्फुटकुण्डा किल शांकरी कृतिः।
विवृता रघुवीरदीक्षितैः कुतुकादेव न काम्यकामया॥ १॥

इति कुण्डार्कः सटिप्पणः समाप्तः।

स्युर्वृत्तव्यास $\underset{३}{१}$०० $\underset{२}{कृत्यो}$ १०००० स्त्रि ३ यम २ कु १ चरणा $\overset{७}{७}$५।$\overset{२}{५}$०।
२५।७५००।५००।२५०० भांश २७ खाब्ध्यंश ४० युक्तौ
रामा ३ श्वांशौ ७ शरांशो ५ नगकुलव १७ वियुक् शेषतो बाहुवर्गाः।

बाणाज्या व्यासकृत्योर्विवरपदततिच्छिद्ततोऽर्धं ततिच्छि-
द्दोर्वर्गं बाहुरार्याः शरकृतिरहिता दोः कृतिर्ज्यार्धवर्गः॥ १॥

ये ज्ये षण् ६ नाग ८ दोष्णोस्त्रि ३ युगभुजभुजौ स्तो यदि स्तस्तदेषां
दोःसाम्यं स्याच्चतुर्णां द्विगुणशरवियुक् व्यासदोष्णां कृता ज्या।
पञ्चास्रे दोःसमा चेदिदमपि सुभुजं सप्तदोर्ज्योऽथ बाणौ
तौ निर्व्यासौ च कृत्वा भुजमितिमवदच्छंकरो नैलकण्ठिः॥ २॥

वृत्तव्यासस्य १०० वर्गे १००० भनवगुणगुणे ३९२७ धांयुता ५००० र्घं
फलं ७८५४ स्या–

दोर्घ्नं दोर्व्यासकृत्योर्विवरपदमपि स्याच्चतुर्णां त्रिदोष्णाम्।

इष्टव्यासस्य वर्गे स्वमलफलगुणे तद्विकृत्याः फलेन
तष्टे लब्धस्य मूलं वलयततिरितः सर्वकुण्डप्रसिद्धिः ॥ ३ ॥

इति त्रयः क्षेपकाः। लीलावतीश्लोकाः।

त्यक्त्वान्त्याद्विषमात्कृतिं द्विगुणयेन्मूलं समे तद्धृते
त्यक्त्वा लब्धकृतिं तदान्यविषमाल्लब्धं द्विनिघ्नं न्यसेत्।
पङ्क्त्यां पङ्क्तिहृते समेऽन्यविषमात्त्यक्त्वाप्तवर्गं फलं
पङ्क्त्यां तद्द्विगुणं न्यसेदिति मुहुः पङ्क्तेर्दलं स्यात्पदम् ॥ १ ॥

मूलावशेषिकं सैकमष्टघ्नं विकलान्वितम्।
द्विसंगुणेन मूलेन द्वियुक्तेन विभाजितम् ॥ २ ॥

गुण्यान्त्यमङ्कं गुणकेन हन्यादुत्सारितेनैवमुपादिमादीन्।
गुण्यस्त्वधोधो गुणखण्डतुल्यस्तैः खण्डकैस्तद्गुणितो युतो वा ॥ ३ ॥

स्वाबाधाभुजकृत्योरन्तर्मूलं प्रजायते लम्बः।
लम्बगुणं भूम्यर्धं स्पष्टं त्रिभुजे फलं भवति ॥ ४ ॥

कुण्डकल्पद्रुमे योनिप्रकार उक्तः।

दीर्घा सूर्यमिताङ्गुला च वितता योनिः किलाष्टाङ्गुला
तुङ्गा स्यात्सकृदङ्गुला परिधिना तावन्मितेनावृता।
गर्तान्ता मुकुरोदरा वृतिदलाभ्यां युक्तमूलोन्नता
कुण्डैकाङ्गुलकोटिका क्वचिदिनैस्तुङ्गा परैर्द्व्यङ्गुला ॥ १ ॥

दिग्भिर्व्यंघ्रिभि ९।६ रङ्गुलीभिरुदितं योनेस्तु मूलं तत-
स्तस्यार्धेन चरेद्युगास्त्रयुगुलं तस्मिन्हि तुल्यश्रवम्।
वृत्तार्धद्वयमालिखेच्छ्रवणयोः संपातचिह्नाद्बहि-
श्चाग्राद्युग्मगुणा सुबोधिदलवत्कुण्डोत्तमाङ्गं भवेत् ॥ १ ॥

**अथ गजोष्ठी**—यद्वा पञ्चलवान्वितैर्भवमितैर्मूलं ततं चाङ्गुलै-
स्तस्यार्धार्धमितेन वृत्तशकलं द्वन्द्वं बहिर्भ्रामयेत्।
अग्रात्सूत्रयुगाद्गजोष्ठसदृशी वा योनिकुण्डोक्तवत्
क्षेत्रादङ्गनवाङ्गुला ९६ बुधजनैः साध्या मनोज्ञा भवेत् ॥ १ ॥

अथ कुण्डसिद्धिप्रकारेण षडस्राष्टास्रकुण्डमाह—

भक्ते क्षेत्रे जिनांशैर्धृतिमित १८ लवकैः स्वाक्षिशैलांश ७२ युक्तै-
र्व्यासार्धान्मण्डले तन्मितधृतगुणके कर्कटे चेन्दुदिक्तः।

षट्चिह्ने तु प्रदद्याद्दसमितगुणकानेकमेकं तु हित्वा
नाशे संध्यर्तुदोषामपि च वृतिकृतेर्नेत्ररम्यं षडस्रि ॥ १ ॥

क्षेत्रे चतुर्विंशतिधा भक्ते सति अष्टादशांशैः स्वद्वासप्ततितमांशयुक्तैस्तावता व्यासार्धेन वृत्ते कृते सति मिते धृते गुणके सूत्रे सति कर्कटेन वा तेनैव व्यासार्धेनोत्तरदिक्तः धृते सति परावर्तनेन षट्चिह्नानि भवन्ति। तेषु षट्चिह्नेषु षट्सूत्राणि एकान्तरेण परस्परलग्नानि दद्यात् । ततः संधौ य ऋतुदोषाः षड्भुजाः तेषां नाशे वृत्तिकृते मण्डलस्यापि नाशे षडस्रि नेत्ररमणीयं जायत इति व्याख्या ॥

क्षेत्रे जिनांशे गजचन्द्रभागैः १८ स्वाष्टाश्विभागेन २८ युतैस्तु वृत्ते ।
विदिग्दिशोरन्तरतोऽष्टसूत्रैस्तृतीययुक्तैरिदमष्टकोणम् ॥ २ ॥

क्षेत्रे चतुर्विंशतिधा भक्ते सति अष्टादशभागैः स्वीयाष्टाविंशांशेन युतैः कर्कटेन वृत्ते कृते सति विदिग्दिशोर्मध्ये कृताष्टचिह्नेभ्यः अष्टभुजैः तृतीयमिलितैश्चिह्नद्वयं विहाय तृतीयचिह्नेन योजितैः अष्टकोणं वृत्तमार्जनात् मध्यस्थाष्टदोःखण्डमार्जनाच्च भवतीति व्याख्या ॥

कुण्डकल्पे तु नालमाह—

समुद्राङ्गुलीमूलमेकाङ्गुलाग्रं स्थलाद्योनिमध्यान्तमध्त सरन्ध्रम् ।
समृत्पिण्डयुग्मं जगुर्नालमेके तथा नो शुभं कुण्डकोणे वराङ्गम् ॥

इष्टो बाहुर्यस्यां तत्स्पर्धिन्यां दिशीतरो बाहुः ।
त्र्यस्रे चतुरस्रे वा सा कोटिः कीर्तिता तज्ज्ञैः ॥ १ ॥
तत्कृत्योर्योगपदं कर्णो दोःकर्णवर्गयोर्विवरात् ।
मूलं कोटिः कोटिश्रुतिकृत्योरन्तरात्पदं बाहुः ॥ २ ॥

अथ त्रैराशिकम्

प्रमाणमिच्छा च समानजाती आद्यन्तयोस्तत्फलमन्यजाती ।
मध्ये तदिच्छाहतमाद्यहृत्स्यादिच्छाफलं व्यस्तविधिर्विलोमे ॥ १ ॥

जीवानां वयसो मौल्ये तौल्ये वर्णस्य हेमनी ।
भागहारे च राशीनां व्यस्तं त्रैराशिकं स्मृतम् ॥ २ ॥

प्राप्नोति चेत्षोडशवत्सरा स्त्री द्वात्रिंशतं विंशतिवत्सरात्किम् ।
द्विधूर्वहो निष्कचतुष्कमुक्षा प्राप्नोति धूः षड्वहस्तदा किम् ॥ ३ ॥

इति कुण्डार्कमरीचिका समाप्ता ।

शके १७२० कालयुक्तनामसंवत्सरे फाल्गुनशु. १ गुरुवार तद्दिने जनस्थान-स्थितवारोपनामकपुरुषोत्तमेन लिखितं ॥ रेणुकाप्र० ॥

दीधितिः—एवमनुपातयुक्त्या क्षेत्रयुक्त्या चेष्टफले व्यासाः साधिताः तेनैव युक्तिद्वयेन पाठ्या वा भुजाः किल सिध्यन्ति किंत्वस्य सर्वस्य प्रतीत्यर्थं क्षेत्रफलसाधनं वक्तव्यमस्ति तत्र भुजवर्गोपयोगादनुपातयुक्त्या लघुप्रक्रियया भुजवर्गास्तदनु क्षेत्रफलं चाह—स्युर्वृत्तव्यासवर्गा इति । अत्र वृत्तव्या-सवर्गस्य पादत्रयं त्र्यस्रिभुजस्य वर्गः। चरणद्वयं चतुरस्रभुजवर्गः । एकचरणः षडस्रभुजवर्गः । अथ व्यासवर्गस्य रामांशः स्वसप्तविंशांशेन युक्तः पञ्चास्रि-भुजवर्गः । व्यासवर्गस्य सप्तमांशः स्वचत्वारिंशांशेन युतोऽष्टास्रिभुजवर्गः । व्यासवर्गस्य पञ्चमांशः स्वसप्तदशांशेन हीनः सप्तास्रिभुजवर्गः । एवं त्र्यस्रा-दीनां षण्णां कुण्डानां यथायथं भुजवर्गा ज्ञेयाः । त्र्यस्रत इत्यत्र क्रमो न विवक्षितः उपपत्तिविरोधात् । अथ दोर्व्यासकृत्योर्यत्खं विवरं अन्तरमिति यावत् तस्य यत्पदं मूलं तद्दोर्घ्नं सत् चतुर्णां भुजभूमिककेन्द्राग्रकत्रिभुजानां क्षेत्रफलं भवति । तदेव स्वपादेनैकादिगुणेन वर्धितं कार्यं तत्पञ्चास्रादौ फलं स्यात् ॥ अत्रोपपत्तिः—पुच्छात् त्रिभुजभुजाग्रपर्यन्तं व्यासार्धं । व्यास $\frac{1}{2}$ पुच्छादेव भुजमध्यपर्यन्तं व्यासपादः कोटिः $\frac{1}{4}$ व्यासव० $\frac{1}{4}$ कोटिव० $\frac{1}{16}$ अनयोरन्तरं $\frac{3}{16}$ अयं किल त्र्यस्रिभुजार्धवर्गः । अस्य पदं द्विघ्नं पूर्णभुजः स्यात् । अतोऽयं वर्गत्वाच्चतुर्गुणो जातः त्र्यस्रिभुजवर्गः । व्या. व. $\frac{3}{4}$ व्यास-कृत्याग्निचरणाः त्र्यस्रिभुजवर्गः स्यादिति शोभनमुक्तं । चतुरस्रे तु व्यास एव कर्णः । तद्वर्गस्तु भुजकोटिवर्गयोगः । तयोः समत्वात्कर्णवर्गार्धं भुजवर्गः । अतो व्यासवर्गाच्चरणद्वयं चतुरस्रभुजवर्गः स्यात् । षडस्रे तु व्यासार्धमित एव भुजो भवतीत्युपपादितं प्राक् । तस्य व्यासार्धस्य $\frac{1}{2}$ वर्गोऽयं $\frac{1}{4}$ अतो व्यासकृत्यैकः पादः षडस्रिभुजवर्गः स्यादित्युक्तं । पञ्चास्रे तु वेदाग्निपञ्च-खाश्वैर्हताद्व्यासवर्गात् खखखाभ्रार्कभक्तात्किल भुजो लभ्यते । तत्र भुजवर्गस्य साध्यत्वाद्गुणहरौ व्यासश्च वर्गिताः क्रियन्ते । गुणवर्गः ४९७५०४५१५६ हरवर्गः १४४०००००००० एतौ किल व्यासवर्गस्य गुणहरौ अत्र संचारः । अस्मिन्हरेऽयं गुणस्तदा त्रिमिते क इति लब्धं रूपं १ शेषेण शेषेऽपवर्तिते जातं रूपं १ हरेऽपवर्तिते किंचिदूना सप्तविंशतिः सुखार्थं सप्तविंशतिरेव गृहीता । अतो व्यासवर्गस्य रूपं १ सप्तविंशांशश्च गुणौ उभयत्रापि त्रयं हरः ।

तत्र य एव भांशस्य त्र्यंशः स एव त्र्यंशस्य भांश इत्यतो व्यासकृत्या रामांशः स्वभांशयुतः सन् पञ्चास्त्रिभुजवर्गः स्यादित्युक्तं । सूक्ष्मत्वापेक्षायां तु स भांशः स्वीयेन पञ्चषष्ठांशेन वर्जितः कर्तव्यः । इदं पूर्वप्रतिपादितयुक्त्या ध्येयम् । अष्टास्त्रिभुजवर्गसिषाधयिषायां तु द्विद्विनन्देषुसागरमितगुणस्य वर्गः २१०८८३००८४ हरवर्गस्तु स एव १४४०००००००० अत्रापि संचारः । अस्मिन्हरेऽयं गुणस्तदा सप्तमिते क इति लब्धं रूपं १ शेषेण ३६१८१०५८८ शेषेऽपवर्तिते किंचिदूनाश्चत्वारिंशल्लभ्यन्ते । स सुखार्थं चत्वारिंशद्गृह्यते । अतो व्यासवर्गस्य रूपं खवेदांशश्च गुणौ उभयत्र सप्तहरः । अतः पूर्ववद्व्यासवर्गस्य सप्तांश एव स्वीयखाब्ध्यंशयुतः सन् अष्टास्त्रिभुजवर्गः स्यात् । किंतु स एव खाब्ध्यंशः स्वीयेन नन्दनन्दचन्द्रांशेन १९९ सुखार्थं द्विशतांशेन वा युक्तस्त्रिस्त्रिभ्यांशे योज्यते चेत् सूक्ष्मः स्यात् । सप्तास्त्रिभुजवर्गसाधने तु बाणेषुनखबाणमितगुणस्य वर्गः २७०९७२३०२५ व्यासवर्गस्य गुणः । हरवर्गस्तु स एव १४४०००००००० अत्रापि संचारः । अस्मिन्हरेऽयं गुणस्तदा पञ्चमिते क इति । अत्र ऋणशेषाल्लब्धिरूपं १ शेषेण ८५१३८४८७५ शेषेऽपवर्तिते जातं रूपं १ हरेऽपवर्तिते किंचिदूनाः सप्तदश लभ्यन्ते सुखार्थं सप्तदश गृहीताः अतो व्यासवर्गस्य रूपं १ सप्तदशांशश्च $\frac{१}{१७}$ ऋणगतो गुणकः । उभयत्रापि पञ्चहरः अतो व्यासवर्गस्य पञ्चमांशः स्वीयसप्तदशांशेन हीनः सप्तास्त्रिभुजवर्गः स्यात् । यतो यावानेव सप्तदशांशस्य पञ्चमांशस्तावानेव पञ्चमांशस्य सप्तदशांशो भवति । किंतु सूक्ष्मत्वाय सप्तदशांशः स्वकीयेन रसनन्दचन्द्रांशेन १९६ युक्तस्तस्मात्पञ्चमांशाद्धेयं । एवं सिद्धभुजवर्गान्मूलग्रहणेन भुजज्ञानं स्पष्टमेव ।

अथ क्षेत्रफलोपपत्तिः—तत्र भुजभूमिककेन्द्राग्रकत्रिभुजफलं भुजसंख्यया गुणितं सत् कुण्डफलं किल भवति । अथ वृत्तं निर्माय तत्र दिक्सूत्रे दत्त्वा पूर्वतः पश्चिमतश्च भुजसूत्रे देये यथा तन्मध्यौ प्राक्सूत्रे स्यातां । भुजयोरग्रे रेखे च देये एवमायतं भवति । कर्णौ च देयौ तौ व्याससमौ भवतः । एवं तत्र पूर्वापरयोर्द्वे पूर्ववत् त्रिभुजे भवतः । अथ दक्षिणोऽवशिष्टे क्षेत्रखण्डे एकं त्रिभुजं वर्तते । यतो दक्षिणसूत्रे केन्द्रकोट्यन्तरे भुजार्धं भुजार्धदक्षिणसूत्रान्तरे च कोट्यर्धं वर्तते । यद्वा तत्खण्डं दक्षिणसूत्रदेशे छित्त्वा कोट्यर्धयोः संश्लेषो यथा स्यात्तथा विन्यस्ते स्फुटमेव दृश्यते । एवमुत्तरश्चैकं एवमायते

चत्वारि त्रिभुजानि स्युः। अतो दोर्व्यासवर्गान्तरमायते कोटिः। सा भुजगुणा आयतफलं तदेव चतुर्णां त्रिदोष्णां फलं तत्पाद एकत्रिभुजफलं। अतस्तेनैक-द्वित्रिचतुर्गुणेन युक्तं सत्पञ्चास्रादिफलं स्यादिति युक्तियुक्तमेवोक्तं। किंत्वेवं चतुरस्रादीनां फलं स्यात्। त्र्यस्रे तु व्यासपादत्रयं लम्बोऽतस्तद्भुजार्धघात-स्तत्र फलं ज्ञेयम्। अथवा पूर्वोक्तयुक्त्या आयतचतुरस्रे कृते तन्मध्ये त्रिभु-जान्तःपातीनि भुजभूमिककेन्द्राग्रकत्रिभुजानि चत्वारि भवन्ति। अतः आगतं फलं स्वचतुर्थांशेन हीनं कृतं सत् त्रिभुजफलं भवति। योनौ तु त्र्यस्रफलं स्वतृतीयांशयुक्तं व्यासार्धमितव्यासजवृत्तफलयुतं फलं स्यात्। यतः केन्द्रा-त्कोणगैः सूत्रैस्त्र्यस्रं त्रेधा भवति। यावानेको विभागस्तावानेव वृत्तखण्डयो-रन्तराले लघुत्रिभुजरूपो वर्तते। यद्वा प्राक्सूत्रमेव भूर्व्यासमिता। व्यासार्धे त्र्यस्रत्रिभुजश्च भुजौ। त्र्यस्रत्रिभुजार्धं लम्बः। एवं द्वे त्रिभुजे। अतो व्यासार्ध-त्र्यस्रत्रिभुजयोर्घातः स लघुत्रिभुजस्य त्र्यस्रक्षेत्रस्य फलं। तद्व्यासार्धमितव्यास-फलेन वृत्तफलचतुर्थांशमितेन योज्यं। यतो व्यासार्धवर्गो व्यासवर्गचतुर्थांश-मितः स्यात्। अतस्तज्जं फलमपि तथैव। एवं योनिकुण्डफलं। अर्धच-न्द्राकृतौ तु वृत्तफलार्धमेव फलं। वृत्तफलं तु "व्यासस्य वर्गे भनवाग्नि-निघ्ने" पञ्चसहस्रभक्ते फलं स्यादित्यादि प्राग्युक्त्या साध्यं। पद्मकुण्डे तु उपान्तिमवृत्ते योऽष्टास्त्रिभुजः प्रतिदलं तद्भूमिके द्वे त्रिभुजे केन्द्राग्रकमेकं दलाग्रकमेकं तयोर्लम्बौ किल तद्भूम्यर्धस्य गुणकौ। अतोऽन्तिमवृत्तव्यासार्ध-मितो लम्बयोग एव गुणः। बहिस्त्रिभुजे क्षेत्रफलापगमोपगमाभ्यां तत् त्रिभुज-फलस्यैव फलितत्वात् तदेकदलफलमष्टगुणं पद्मकुण्डफलं स्यात्। इति मितिमवदत् शंकरो नैलकण्ठिरिति। इति उक्तप्रकारेण नैलकण्ठिः नील-कण्ठपण्डितपुत्रः शंकरः शंकरपण्डितः मितिं मानं अवदत् उक्तवानित्यर्थः॥ १६॥

इषुषट्सप्तभू १७६५ शाके मार्गासितगणाधिपे। विश्वेश्वरमुदे चक्रे त्विमां कुण्डार्कदीधितिम्॥ १॥ इति श्रीमौद्गल्योपाह्वयरामकृष्णोपाध्यायात्मज-शिवरामोपाध्यायविरचिता कुण्डार्कटीकासमाप्ता॥

**पद्मिनी**—अथ पूर्वं त्र्यस्रादिभुजा उक्तास्तेषामुत्पत्तिं सर्वक्षेत्राणां फलं पूर्वं येऽब्धीष्विभाश्वादयो भाजका उक्तास्तेषामुत्पत्तिं चाह-व्यासवर्गस्य चरणत्रयं त्र्यस्रदोर्वर्गः। व्यासः ४२।१ अस्य वर्गः १७७४।४।१ अस्य त्रयश्चरणाः

१३३०।७।१ अस्य मूलं ३६।४ चरणद्वयं चतुरस्रभुजवर्गः । तत्र व्यासवर्गः १९५२ अस्य चरणद्वयं ५७६ अस्य मूलं २४ एकः चरणः षडस्रे दोर्वर्गः । तत्र व्यासवर्गः ८८६।६।५ अस्य चरणः २२१।६।४ अस्य मूलं १४।७ व्यासवर्गस्य स्वसप्तविंशत्यंशयुतत्र्यंशः । स एव पञ्चास्रे दोर्वर्गः । तत्र व्यासवर्गः ९६९ अस्य त्र्यंशः ३२३ अस्य सप्तविंशत्यंशः १२ अनेन युक्तत्र्यंशः ३३५ अस्य मूलं १८।२।३ व्यासवर्गस्य चत्वारिंशदंशयुक्तो यः सप्तमांशः । अष्टास्रदोर्वर्गः । तत्र व्यासवर्गः ८१४।४ अस्य सप्तमांशः ११६।३ अस्य चत्वारिंशदंशः ३ अनेन युक्तः सप्तमांशः ११९।३ अस्य मूलं १०।७।५ व्यासवर्गस्य पञ्चमांशः स्वसप्तदशांशेनोनः सप्तास्रे दोर्वर्गः । तत्र व्यासवर्गः ८४१।७ अस्य पञ्चमांशः १६८।३ अस्य सप्तदशांशः ९।७।१ अनेनोनः पञ्चमांशः १५८।३।६ अस्य मूलं १२।५। अथ फलानयनं । दोर्व्यासकृत्योर्यदन्तरं तस्य यन्मूलं तद्दोर्घ्नं कृतं चेत् चतुर्णां त्रिदोष्णां फलं भवति । तस्यैव पादादिवृद्ध्या पञ्चादीनां फलं अर्थात् पादन्यूनं त्र्यस्रफलं भवति । नन्वत्र पादघ्नोक्त्यैव चतुर्णां त्रिदोष्णां फलं भवतीति स्पष्टतया सिद्धत्वाच्चतुर्णामिति वचनं व्यर्थमिति चेन्न । तस्यार्थान्तरत्वात् । तथाहि अत्र दोर्व्यासकृत्योर्यदन्तरं तस्य यन्मूलं तद्दोर्घ्नं कार्यं । तदा चतुर्णां त्रिदोष्णां फलं भवति । तेन किं सिद्धं—गर्भसूत्रेण भुजो गुणितश्चेच्चतुर्णां दोष्णां फलं भवति । एतेन वृत्तादौ व्यासादिनैव परिधिचतुर्थभागो गुणितश्चेत्सर्वक्षेत्रफलं भवतीति फलितोर्थः ।

तदर्थमुदाहरणं—वृत्तव्यासः २७।०।६ अस्य "द्वाविंशतिघ्ने विहृतेऽथ शैलैः स्थूलोपि वा स्याद्व्यवहारयोग्य" इत्युक्तरीत्या परिधिं प्रसाध्य ८५।१।१ अस्य चतुर्थभागः २१।२।२।२ अनेन व्यासो गुणितः ५७६।५।४ अधिकं ध्वजायासिध्यर्थं । अर्धचन्द्रक्षेत्रव्यासः ३८।२।३ अस्य परिधिः १२०।३ अस्य चतुर्थांशः ३०।०।६ अनेन व्यासो गुणितः ११५२।३।७ इदं समग्रवृत्तफलं । अस्यार्धमर्धचन्द्रफलं ५७६।२। योनिकुण्डे व्यासवर्गः ९१५।१।७ अस्य त्रयश्चरणाः ६८६।३।४ अस्य मूलं २६।२ अयमेव योनिकुण्डगतत्र्यस्रभुजः । अस्य वर्गः ६८६।३।४ व्यासवर्गः ९१५।१।७ अनयोरन्तरं २२८।६।३ अस्य मूलं १५।१ इदं गर्भसूत्रं । योनिकुण्डगतत्र्यस्रपरिधिः ७८।६ अस्य चतुर्थभागः १९।५।४ अनेन गर्भसूत्रं गुणितं सजातं फलं २९७।६ अत्र त्र्यस्रचतु-

ष्टयस्य सत्वादस्य त्र्यंशेनेदं युक्तं कार्यं। त्र्यंशः ९९।२ अनेन युक्तं सञ्जातं ३९७ अथवृत्तार्धद्वयफलं। तत्र व्यासः १५।१ अस्योक्तरीत्या परिधिः ४७।४।२ अस्य चतुर्थांशः ११।७ अनेन व्यासो गुणितः १७।९।५ इदं पूर्वफले योजितं सञ्जातं ५७६।५। अथत्र्यस्रफलानयनं। तत्र व्यासवर्गः १७७३। ५ अस्य त्रयश्चरणाः १३३०।१।६ अस्य व्यासवर्गस्य चान्तरं ४४३।३।२ अस्य मूलं २१।०।५ गर्भसूत्रं। त्र्यस्रपरिधिः १०९।४ अस्य चतुर्थांशः २७।३ अनेन गर्भसूत्रं गुणितं सञ्जातं फलं ५७६।४।५ अथ चतुरस्रव्यासवर्गः ११५२ अस्य द्वौ चरणौ ५७६ अस्य मूलं २४ इदं गर्भसूत्रं। चतुरस्रपरिधिः ९६ अस्य चतुर्थभागः २४ अनेन गर्भसूत्रं गुणितं सञ्जातं फलं ५७६ पञ्चास्रव्यासवर्गः ९६९ भुजवर्गः ३३५ अस्य व्यासवर्गस्य चान्तरं ६३४ अस्य मूलं २५।१।४।२ इदं गर्भसूत्रं पञ्चास्रपरिधिः ९१।४ अस्य चतुर्थांशः २२।५ अनेन गर्भसूत्रं गुणितं सञ्जातं फलं ५७६।२। षडस्रव्यासवर्गः ८८६ भुजवर्गः २२१।५।४ अस्य व्यासवर्गस्य चान्तरं ६६५।११ अस्य मूलं २५।६।२।५ इदं गर्भसूत्रं षडस्रपरिधिः ८९।२ अस्य चतुर्थांशः २२।४ अनेन गर्भसूत्रं गुणितं सञ्जातं फलं ५७६।३।५ अल्पान्तरत्वाददोषः। सप्तास्रव्यासवर्गः ८४१।७ भुजवर्गः १५८।३।६ अस्य व्यासवर्गस्य चान्तरं ६८३।३।२ अस्य मूलं २६।१ इदं गर्भसूत्रं सप्तास्रपरिधिः ८८।३ अस्य चतुर्थांशः २२।०।६ अनेन गर्भसूत्रं गुणितं सञ्जातं फलं ५७६।४ अल्पान्तरत्वाददोषो ध्वजायसिद्धिश्च। अष्टास्रव्यासवर्गः ८१४।४ भुजवर्गः ११९।३ अस्य व्यासवर्गस्य चान्तरं ६९५।१ अस्य मूलं २६।२।४ इदं गर्भसूत्रं। अष्टास्रपरिधिः ८७।५। अस्य चतुर्थांशः २१।७।२ अनेन गर्भसूत्रं गुणितं सञ्जातं फलं ५७६।३।२

अथ पद्मफलानयनं। तत्र चतुर्थवृत्तव्यासः २४ वर्गः ५७६ अस्य सप्तमांशः ८२।२।२ अस्य चत्वारिंशदंशः २।०।३ अनेन युक्तः सप्तमांशः ८४।२।५ अस्य मूलं ९।१।५ द्विगुणं १८।३।२ अनेनावधिव्यासः ३१।२।३ गुणितः ५७६।०।४ जातमिदं पद्मफलं। द्वात्रिंशद्धनुषांधनर्णत्वादविकृतत्वमेवेति।

फलोन्नयने मुख्यप्रकारस्तु—भुजेन गर्भसूत्रं गुणनीयं तेन चतुर्णां त्रिदोष्णां फलं भवति। यथासंख्यपादद्वयासंपूर्णं फलं भवति। अन्यथा पादद्वयोकेरसंभवापत्तेः। नच चतुर्णां त्रिदोष्णामित्यस्य वैयर्थ्यापत्तिस्तु तदत्रस्यैवेति वाच्यं। तस्य वृत्तकुण्डे सार्थक्यात्।

अथाब्धीष्विभाश्वादयो भाजका उक्तास्तेषामुत्पादनयुक्तिरुच्यते । अत्र वृत्तव्यासः शताङ्गुलपरिमितः । "व्यासस्य वर्गे भनवाग्निनिघ्ने सूक्ष्मं फलं पञ्चसहस्रभक्ते" इत्युक्तरीत्या फलं तदेव भाजकः । व्यासः १०० अस्य वर्गः १०००० अयं भनवाग्निनिघ्नः ३९२७०००० पञ्चसहस्रभक्तः ७८५४ अयमेव वृत्तकुण्डस्य भाजकः । अयमेवार्धितोऽर्धचन्द्रस्य । अब्जेतु व्यासस्य नवमांशः ११।१ इदमष्टगुणितं सञ्जातं तृतीयवृत्तं ८९ तथाऽवधिवलयं १११।१ अस्य तत्वांशः ४।२ अस्य योगः ११५।४ अथ तृतीयवृत्तस्याष्टभुजानां मानं २ "द्विद्विनन्देषुसागरैर्वृत्तव्यासे समाहते । खखखाभ्रार्कसंभक्ते लभ्यन्ते क्रमशो भुजाः" इत्युक्तरीत्या भुजो भवति । तत्र व्यासः ८९ द्विद्विनन्देषुसागरैः ४५९२२ गुणितो जातः ४०८७०५८। १२०००० अनेन भक्तः सन् जातो भुजः ३४ अयं द्विगुणितः ६८ अनेनावधिवृत्तव्यासो गुणितः ११५।४ सिद्धो जातः ७८५४ अयमेव पद्मकुण्डव्यासोत्पादकः । अथ त्र्यस्रस्य व्यासवर्गः १०००० व्यासार्धवर्गः २५०० अनयोरन्तरं ७५०० अस्य मूलं ८६।४।६।४ अयमेव त्र्यस्रभुजः । अथ भुजवर्गः ७५०० अस्य चतुर्थांशः १८७५ अयं त्रिगुणितः ५६२५ अस्य मूलं ७५ अयं लम्बः । अत्र समत्र्यस्रत्वाद्भुज एव भूमिः । भूम्यर्धं ४३।२।३।२ इदं लम्बगुणितं सञ्जातं फलं ३२४७।४ योनौ तु भूम्यर्धं शतेन गुणितं त्र्यस्रद्वयफलं ४३३० अथ वृत्तार्धद्वयफलं । तत्र व्यासवर्गः २५०० अयं भनवाग्निनिघ्नः ९८१७५०० पञ्चसहस्रभक्ते १९६३।४ इदं पूर्वफले योजितं सत् जातं योनिफलं ६२९३।४ चतुरस्रे व्यासार्धवर्गयोर्योगः । तत्र व्यासार्धवर्गौ २५००।२५०० अनयोर्योग एव चतुरस्रफलं ५००० पञ्चास्रे व्यासवर्गः १००००० अस्य तृतीयांशः ३३३३।३ अस्यापि सप्तविंशत्यंशः १२३।४ अनेन युक्तस्तृतीयांशः ३४५६।७ अस्य मूलं पञ्चास्रभुजः ५८।६।३ अथ ज्याव्यासवर्गयोरन्तरं ६५४३।१ अस्य मूलं ८०।७।१ इदं गर्भसूत्रं । पञ्चास्रपरिधिः २९४ अस्य चतुर्थांशः ७३।४ अनेन गर्भसूत्रं गुणितं सञ्जातं फलं ५९४४।२ षडस्रे ज्याव्यासवर्गान्तरमूलं ८६।४।६।४ इदं गर्भसूत्रं । इदमेव षडस्रपरिधिचतुर्थांशेन गुणितं सञ्जातं फलं ६४९५ सप्तास्रे व्यासवर्गस्य पञ्चमांशः २००० अयं स्वसप्तदशांशेनोनः १८८२।२ अस्य मूलं सप्तास्रभुजः ४३।३।१ ज्याव्यासवर्गान्तरं ८१।८ अस्य मूलं गर्भसूत्रं ९०।०।६ सप्तास-

परिधिः ३०३।५।७ अस्य चतुर्थभागः ७५।७।४ अनेन गर्भसूत्रं गुणितं सञ्जातं फलं ६८४१ अष्टास्रे व्यासवर्गस्य सप्तमांशः १४२८।४।४ अस्य चत्वारिंशदंशः ३५।५। ६ अनेन युक्तः सप्तमांशः १४६४।२५ अस्य मूलमष्टास्रभुजः ३८।२।१ अथ ज्याव्यासवर्गान्तरं ८५३५।५ अस्य मूलं गर्भसूत्रं ९२।३।१ अष्टास्रपरिधिः ३०६।१।१ अस्य चतुर्थांशः ७६।४।२।२ अनेन गर्भसूत्रं गुणितं सञ्जातं फलं ७०७१ इमानि वृत्ताद्यष्टास्रान्तानि फलानि स्वस्वक्षेत्राणामयुतगुणेष्टफलस्य भाजकानि भवन्ति ।

इति मितिमवदच्छंकरो नैलकण्ठिः नीलकण्ठापत्यं पुमान्नैलकण्ठिः शंकरनामा अनेनोक्तप्रकारेण मितिं मानं अवदत् उक्तवान् । नन्वत्र नीलकण्ठं पितरमनुसरन् शंकरो वक्ति कुण्डं इत्यनेन शंकरपदस्य कर्तृत्वे सिद्धे पुनः शंकरो नैलकण्ठिरिति किमर्था पुनरुक्तिः । नच वक्तीति क्रियापदस्य कर्त्राकाङ्क्षायां तत्र शंकरस्य तत्पूरकत्वेन तत्रैव चारिताथ्यर्यादत्रावददिति क्रियापदस्यापि कर्त्राकाङ्क्षायां शंकरो नैलकण्ठिरिति पदस्य तदाकाङ्क्षायाः सत्त्वान्न पुनरुक्तिरितिवाच्यं । अत्र शंकरो नैलकण्ठिरिति पदस्यासत्त्वेन पूर्वकर्तृवाचकपदेनैवात्रापि निर्वाहादितिचेन्न । तस्य मङ्गलार्थत्वात् । तदुक्तं महाभाष्ये—मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषाण्यायुष्मत्पुरुषकाणि चेति । न चास्मिन्ग्रंथे मङ्गलमध्यत्वं नास्तीति वाच्यम् । वेदास्रमिति पद्ये वेदशब्दस्य मङ्गलवाचित्वात् । तस्य ग्रन्थमध्यत्वादित्यलं बहुना ॥ १६ ॥

अथ प्रसंगात्कण्ठमेखलानां व्यासा उच्यन्ते । तदर्थं गुरुचरणोक्तिः—"ज्याव्यासवर्गान्तरमूलभक्ताद्व्यासात्प्रलब्धेन तु मेखलानाम् । स्मृतिं गुणेद्व्यासयुतां भवेत्तद्वृतेः प्रमाणं खलु मेखलानाम्" । अस्यार्थः—ज्यावर्गव्यासवर्गयोर्यदन्तरं तस्य यन्मूलं अर्थाद्गर्भसूत्रं । तेन व्यासे भक्ते यल्लब्धं भवति तेन मेखलानां विस्तारो गुणयेत् । स एव विस्तारः स्वकीयव्यासयुक्तः कार्यः । स एव मेखलानां व्यासो भवतीत्यर्थः । तुल्ययुक्तित्वात्कण्ठस्यापि । उदाहरणं–वृत्तार्धचन्द्रयोरयं प्रकारो नास्ति । तत्र गर्भसूत्रव्यासस्य चैक्यात् । योनिकुण्डे तु त्र्यस्रकल्पत्वाद्व्यासार्धमेव गर्भसूत्रं १५।१ अनेन व्यासो भक्तश्चेल्लब्धं २ इदं कण्ठव्यासार्धं द्विगुणं कृतं ४ व्यासे

योजितं ३४।२ अयं कण्ठव्यासः । प्रथममेखलार्थं दशगुणितं २० व्यासे योजितं ५०।२ द्वितीयमेखलार्थं षोडशगुणितं ३९ व्यासे योजितं ६२।२ तृतीयमेखलार्थं विंशतिगुणितं ४० व्यासे योजितं ७०।२ तत्रापि वृत्तार्धद्वयस्य वृत्तयुक्त्यैव कर्तव्यमिति विशेषः । एवं गुणनं सर्वत्र । गुण्यस्तु पृथक्पृथग्दर्श्यते ।

| | |
|---|---|
| त्र्यस्रगर्भसूत्रं २१।०।४<br>अनेन भक्तव्यासाल्लब्धं २<br>कण्ठादिव्यासः ४६।१।०<br>प्रथममेखलाव्यासः ६२।१।०<br>द्वितीयमेखलाव्यासः ७४।१।०<br>तृतीयमेखलाव्यासः ८२।१।० | षडस्र गर्भसूत्रं २५।६।२।५<br>अनेन भक्तव्यासाल्लब्धं १।१।१।६।४<br>कण्ठादिव्यासः ३२।०।३।५<br>प्रथममेखलाव्यासः ४१।२।२।१<br>द्वितीयमेखलाव्यासः ४८।१।५<br>तृतीयमेखलाव्यासः ५२।६।४।२ |
| चतुरस्रगर्भसूत्रं २४<br>अनेन भक्तव्यासाल्लब्धं १।३।१।५।२<br>कण्ठादिव्यासः ३६।५।७।२।४<br>प्रथममेखलाव्यासः ४७।७।४।४।४<br>द्वितीयमेखलाव्यासः ५६।२।६।४<br>तृतीयमेखलाव्यासः ६१।७।५।१ | सप्तास्रगर्भसूत्रं २६।१<br>अनेन भक्तव्यासाल्लब्धं १।१।७<br>कण्ठादिव्यासः ३१।१।६<br>प्रथममेखलाव्यासः ४०।०।६<br>द्वितीयमेखलाव्यासः ४६।६<br>तृतीयमेखलाव्यासः ५१।१।४ |
| पञ्चास्रगर्भसूत्रं २५।१।४।२<br>अनेनभक्तव्यासाल्लब्धं १।१।७<br>कण्ठादिव्यासः ३३।४।६<br>प्रथममेखलासव्यासः ४३।३।६<br>द्वितीयमेखलाव्यासः ५०।७।०<br>तृतीयमेखलाव्यासः ५५।६।४ | अष्टास्रगर्भसूत्रं २६।२।४<br>अनेन भक्तव्यासाल्लब्धं १।०।५।२।४<br>कण्ठादिव्यासः ३०।५।२।५<br>प्रथममेखलाव्यासः ३९।२।५।१<br>द्वितीयमेखलाव्यासः ४५।६।५<br>तृतीयमेखलाव्यासः ५०।१।२।२ |

एवं पञ्चमेखलापक्षे योज्यमिति दिक् ॥

पद्मकुण्डे तु—"उपान्तिमान्तिमौ व्यासौ द्विघ्नकण्ठादिमानतः । संवर्ध्य पूर्ववत्कुर्याद्वृत्ताभ्यां पत्राणि तु" । अस्यार्थः—उपान्तिमो व्यासः अन्तः-

पत्रक्ष्मावृत्तव्यासः । अन्तिमः अवधिवलयव्यासश्चैतौ द्विगुणितेन कण्ठमानेनैव मेखलामानेन संवर्ध्य तद्वृत्ताभ्यां पूर्ववत् त्रिकोणपूर्वकं अन्तर्ज्यं बहिर्ज्यं धनुरुत्पादनेन पत्राणि कुर्यादिति । कण्ठव्यासौ २६।३२ प्रथममेखलायाः ३४।४।१।२ द्वितीयमे० ४०।४।७।३ तृतीयमे० ४४।५।०।२ ॥

अथ धनुःफलकरणमुदाहरणं च ।...जीवाकृतेश्चतुर्थांशः शरभक्तः शरान्वितः । व्यासो भवेत्तदर्धेन चापार्धे गुणिते फले ॥ १ ॥ विशरत्रिज्यका-ज्यार्धघातेनोने धनुः फलं । वृत्तार्धे धनुरर्धेन व्यासार्धे गुणिते फलम् ॥ २ ॥ उदाहरणं—जीवाः ४।४ शरः ०।४।५ चापं ४।५।४ अत्र जीवार्धं २।२ अस्य कृतिः ५ बाणाप्ता ८।५।१।४ शरान्विता ९।१।६।४ अयं व्यासः सिद्धः । एतस्यार्धं ४।४।७।२ अनेनेदं चापार्धं २।२।६ गुणितं फलं १०।६।४ अथ विशरत्रिज्यका ४।०।२।२ ज्यार्धं २।२ अनयोर्घातः ९।०।५ अनेनोनं व्यासार्धचापार्धगुणितफलं १।५।७ इदं वृत्तार्धातिरिक्ते सर्वत्र धनुःफलं १ वृत्तार्धे तूदाहरणं—धनुः ६०।१।३ अस्यार्धं ३०।०।५।४ अनेनायं व्यासार्धो १९।१।४ गुणितः ५७६।०।६।२ अधिकेन ध्वजायसिद्धिश्चेति ॥ १६ ॥ शुभं भूयात् ।

जळ्ये इत्युपनाम्नश्च भास्करस्य प्रसादतः ।
कृता तत्तनयेनेह टीका कुण्डार्कपद्मिनी ॥ १ ॥

॥ इति श्रीजळ्योपनामककृष्णेन कृता कुण्डार्कटीका समाप्ता ॥ श्रीमदभिमानिनी देवतार्पणमस्तु ॥ संवत् १९३० शाके १७९५ आषाढ शुक्ल ४ शनौ । शुभं भूयात् ॥

नौका—इदानीं तृतीयवृत्तकथितं त्र्यस्रादिभुजवत्कुण्डबाहुमानानयनप्रकारं तेषां भुजवत्कुण्डानां क्षेत्रफलानयनप्रकारं चतुर्दशवृत्तोक्तानां प्रकृतिकृतिवृत्तव्यासानयनार्थं भाजकानामुत्पत्तिप्रकारं च दर्शयति—स्युर्वृत्तव्यासेति । चरमवृत्तेन । वृत्तव्यासवर्गाः त्रियमादिलववियुतेन ग्रन्थेन चालिताः सन्तः त्र्यस्रतत्र्यस्रकुण्डात् बाहुमत्षट्कुण्डानां बाहुवर्गाः स्युः । फलमूलाद्यथायोग्यं ननु क्रमाद्भुजवर्गमूलं भुजमानमित्यप्युक्तं भवति । तथाहि—एकहस्तात्मकत्र्यस्रव्यासः ४२।१।३ अस्य वर्गः १७७४ अयं त्रिचरणश्चरणत्रयात्मकत्र्यस्रे दोर्वर्गः १३३०।४ अस्य मूलं तद्भुजमानं ३६।४ इदमेव रसत्रिसदलमित्यनेनोक्तं प्राक् । अथ चतुरस्रव्यासः ३३।७।४ अस्य वर्गः ११५२

अयं यमचरणोऽग्निद्वयात्मकश्चतुरस्रे दोर्वर्गः ५७६ अस्य मूलं तद्भुजमानं २४ इदमेव सिद्धा इत्यनेनोक्तं । अथ षडस्रव्यासः २९।६ अस्य वर्गः ८६६ अयं कुचरणः एकचरणात्मकः षडस्रे दोर्वर्गः २२१।४ अस्य मूलं तद्भुजमानं १४।१ इदमेव दलमित्यनेनोक्तं । अथ पञ्चास्रव्यासः ३१।२ अस्य वर्गः ९६९ अयं भांशयुक्तरामांशः स्वसप्तविंशांशसहिततृतीयांशात्मकः पञ्चास्रे दोर्वर्गः ३३५ अस्य मूलं तद्दोर्मानं १८।२।३ इदमेवाधिपादधृतय इत्युक्तं । अथाष्टास्रव्यासः २८।४ अस्य वर्गः ८१२ अयं खाब्ध्यंशयुक्तोऽश्व्यंशः स्वचत्वारिंशत्तमांशसहितसप्तमांशात्मकोऽष्टास्रे दोर्वर्गः ११९ अस्य मूलं तद्दोर्मानं १०।७।५ इदमेव निस्त्रियूकाः शिवा इत्यनेनोक्तं । अथ सप्तास्रव्यासः २९ अस्य वर्गः ८४१ अयं नगकुलववियुक् शरांशः स्वसप्तदशांशोनपञ्चमांशात्मकः सप्तास्रे दोर्वर्गः १५८।२।१ अस्य मूलं तद्भुजमानं १२।५ इदमेवात्रियवत्रिभूरित्युक्तमिति ।

एवं बाहुमानं तद्वर्गमानं चोक्त्वा एषामेव कुण्डानां क्षेत्रफलानयनप्रकारमाह—दोर्घ्नमित्यादिना । दोर्व्यासकृत्योः स्वपदं कृतिर्वर्गः स्वमन्तरं पदं मूलं स्वस्वपदोर्वर्गः स्वस्वव्यासवर्गयोरन्तरस्य मूलं दोर्घ्नं स्वदोःपरिमाणाङ्गुलैर्गुणितं फलं अनेन प्रकारेण यन्निष्पन्नं तच्चतुर्णां त्रिदोष्णां तत्तत्संख्याकास्राणां भवतीत्यर्थः । अयं भावः—त्र्यस्रादिषट्स्वपि भुजवत्कुण्डेषु भुजकोणप्रभृतिमध्यस्थप्रागुदक्सूत्रसंध्यवधिकानि भुजकोणसमसंख्याकानि सूत्राणि दद्यात् । तेन तेषु स्वभुजसमसंख्याकानि क्रमात् त्रिचतुःपञ्चषट्सप्ताष्टसंख्याकानि त्र्यस्राणि भवन्ति । तत्र यदीयदोर्व्यासकृत्योः स्वपदं तदीयदोर्घ्नमित्यनेन यत्फलमायातं तत्तदीयत्र्यस्रचतुष्टयं फलं भवति । नच त्र्यस्रकुण्डे त्रयाणामेव त्रिदोष्णां सत्त्वात्त्र्यस्रचतुष्टयाभावेन तत्रायं प्रकारो न संभवतीति वाच्यम् । तत्र त्र्यस्रचतुष्टयस्थित्यभावेऽपि पूर्वोक्तरीत्या यत्फलमायातं तत्तदीयत्र्यस्रसदृशानां चतुर्णां त्र्यस्राणां फलं भवतीत्येवं मूलकाराभिप्रायात् । अतएव यत्फलं त्र्यस्रकुण्डे चतुर्थत्र्यस्राभावात्पादहीनं समग्रं कुण्डफलं चतुरस्रे तु चतुर्णामेव त्रिदोष्णां सत्त्वात्तदेव समग्रं फलं पञ्चास्रे चैकत्र्यस्राधिकत्वात्सपादं समग्रं षडस्रे त्र्यस्रद्वयाधिक्यात् पादद्वयसहितं सप्तास्रे त्र्यस्रत्रयाधिक्यात् पादत्रययुक्तं अष्टास्रे च त्र्यस्रचतुष्टयाधिक्याद्द्विगुणं समग्रं फलं भवतीति । तत्सिद्धं दोर्घ्नं दोर्व्यासकृत्योः स्वपदं षट्स्वपि भुजवत्कुण्डेषु चतुर्णां त्रिदोष्णां

फलमिति । अतः परमेवमेवंरीत्या षण्णामपि कुण्डानां समग्रं फलं यथाऽयाति तथा साध्यते । पादघ्नी स्यादिति ग्रन्थेन पूर्वसिद्धत्र्यस्रचतुष्टयफलस्य पादश्चतुर्थांशः एकत्र्यस्रफलमिति यावत् तस्य वृद्ध्या त्र्यस्रानुसारिण्या वृद्ध्येत्यर्थः । तथाचैककुण्डस्थितानां सर्वेषां त्र्यस्राणां तुल्यत्वेन परस्परफलानामपि तुल्यत्वात्तत्त्र्यस्रचतुष्टयफलपादरूपस्यैकत्र्यस्रफलस्य त्र्यस्रकुण्डे त्र्यस्रत्रयस्य सत्त्वात्त्रिगुणया वृद्ध्या चतुरस्रे त्र्यस्रचतुष्टयस्य सत्त्वाच्चतुर्गुणया । एवं पञ्चास्रे पञ्चगुणया षडस्रे षड्गुणया सप्तास्रे सप्तगुणया अष्टास्रे चाष्टगुणया वृद्ध्या तत्तत्कुण्डफलं समग्रं स्यादित्यर्थः । तथाहि त्र्यस्रे व्यासवर्गः १७७४ तत्रायं भुजवर्गः१३३०४ अनयोः खमन्तरं ४४३।४ अस्य पदं मूलं २१।०।४ इदं दोर्घ्नं भुजाङ्गुलैर्गुणितं तत्र भुजः ३६।४ अनेन गुणितं तत् ७६९ इदं चतुर्णां त्रिदोष्णां फलं । अस्य पादः एकत्र्यस्रफलं १९२ अस्मिन्कुण्डे त्र्यस्रत्रयस्य सत्त्वाद्त्रिगुणया वृद्ध्या समग्रफलं ५७६। चतुरस्रे तु व्यासवर्गः ११५२ तत्र दोर्वर्गः ५७६ अनयोरन्तरं ५७६ अस्य मूलं २४ एतावानत्र भुजः २४ तेन निघ्नं मूलं ५७६ इदं चतुर्णां त्रिदोष्णां फलं अस्य पादः १४४ अस्य चतुर्गुणया वृद्ध्या समग्रफलं ५७६ अत्र यद्यपि दोर्वर्गमात्रेणेष्टफलं आयाति तथापि सर्वसाधारणेतिकर्तव्यताभङ्गभयाद्गौरवेणानीतं पञ्चास्रे व्यासवर्गः ९६१ तत्र दोर्वर्गः ३३५ अनयोरन्तरं ६३४ अस्य मूलं २५।१।३ अत्र भुजः १८।२।३ अनेन गुणितं मूलं ४६१ इदं त्र्यस्रचतुष्टयफलं । अस्य पादः ११५।२ अस्य पञ्चगुणया वृद्ध्या समग्रफलं ५७६ अथ षडस्रे व्यासवर्गः ८८६ तत्र दोर्वर्गः २२१।४ अनयोरन्तरं ६६४।४ अस्य मूलं २५।६।३ अत्र भुजः १४।७ अनेन गुणितं मूलं ३८।४ इदं त्र्यस्रचतुष्टयं फलं । अस्य पादः ९६ अस्य षड्गुणया वृद्ध्या समग्रफलं ५७६ सप्तास्रे व्यासवर्गः ८४१ तत्र दोर्वर्गः १५८।२।१ अनयोरन्तरं ६८२।६ अस्य मूलं २६।१ अत्र भुजः १२।५ अनेन गुणितं मूलं ३२९४ इदं त्र्यस्रचतुष्टयफलं । अस्य पादः ८२।३ अस्य सप्तगुणया वृद्ध्या समग्रफलं ५७६ अष्टास्रे व्यासवर्गः ८१२ तत्र दोर्वर्गः ११९ अनयोरन्तरं ६९३ अस्य मूलं २६।२।५ अत्र भुजः १०।७।५ अनेन गुणितं मूलं २२८ इदं त्र्यस्रचतुष्टयफलं अस्य पादः ७२ अस्याष्टगुणया वृद्ध्या समग्रफलं ५७६ अर्धचन्द्रयोनिकुण्डयोर्भुजवत्त्वं गौणं अप्रयोजकत्वात् व्यवहारमात्रोपयोगीति ।

एवं भुजवतां त्र्यस्रादिषण्णां कुण्डानां क्षेत्रफलानयनप्रकार उक्तः। भुजहीनानां वृत्तादिचतुःकुण्डानां तु क्षेत्रफलानयनप्रकारस्य ज्योतिःशास्त्रे प्रसिद्धत्वादत्र नोक्तः स यथा—तथाहि तत्र वृत्तकुण्डव्यासः २७।०।५ अस्य वर्गः ७३३ "व्यासस्य वर्गे भनवाग्नि ३९२७ निघ्ने सूक्ष्मं फलं पञ्चसहस्र- ५००० भक्ते" इत्युक्तरीत्या व्यासवर्गः सप्तविंशत्युत्तरनवशताधिकत्रिसहस्रै- र्गुणितः २८७८४९१ अयं पञ्चसहस्रभक्तः ५७६ इदमेव वृत्तकुण्डस्य समग्रफलं। अब्जे तु वृत्तव्यासः २४।०।४ अथ चागन्तुकेनैकेनांशेनाधिको मूलव्यासः ३०।०।५।४ अयं स्वपञ्चविंशतितमांशेन युक्तश्चरमवृत्तव्यासः ३१।२।३ अथांतःपत्रक्ष्मावृत्तव्यासवर्गः ५८१ अस्याष्टास्ररीत्या सप्तांशः ८३ स्वचत्वारिंशत्तमभागयुक्तः ८५ अस्य मूलं ९।१।४ इदं चरमवृत्तव्यासेन ३१।२।३ गुणितः २८८ इदं दलचतुष्टयात्मकपद्मकुण्डार्धस्य फलं। इदमेव द्विगुणितं समग्रफलं ५७६ अत्र प्रकृतिवृत्तव्यासस्य वृत्तकुण्डव्यासेन तुल्यत्वात्प्रकृतिवृत्तगर्भे सर्वं फलमस्ति। तस्मात्फलादुभयपत्रमध्यगतं प्रकृतिवृत्तान्तःस्थं फलं गलितं तदानयनार्थं चरमवृत्तेन स्थूलं संगृहीतमिति दृष्ट्या गणितानभिज्ञेनानुभवरूढं कर्तव्यं। अर्धचन्द्रे वृत्तव्यासः ३८।२।३ अस्य वर्गः ११६६ "व्यासस्य वर्गे भनवाग्निनिघ्ने" इति रीत्या वृत्तगर्भे फलं ११५२ तस्यार्धं समग्रफलं ५७६ योनिकुण्डे तु त्र्यस्रपूर्वकत्वात्तावद्योनिकुण्डप्रकृतिवृत्तगर्भोत्पादितत्र्यस्रफलमानीयते तत्र वृत्तव्यासः ३०।२ अस्य वर्गः ९१५ अस्य चरणत्रयं दोर्वर्गः ६८६ अनयोरन्तरं २२९ अस्य मूलं १५।१ अत्र भुजः २६।१।४ अनेन गुणितं मूलं ३९६।४ इदं चतुर्णां त्रिदोष्णां फलं। अस्मिन्योनिकुण्डे त्र्यस्रवृत्तार्धयोर्मध्ये त्र्यस्रस्य त्र्यस्रत्रयसमपरिमाणं चतुर्थं त्र्यस्रं वर्तते तत्फलसंग्रहार्थमुक्तफलं पादहीनं न कर्तव्यं किंतु पूर्णमेव त्र्यस्रचतुष्टयफलं ग्राह्यं।

अथ वृत्तार्धयोः फलानयनं तत्र फलतो वृत्तार्धद्वयस्यैकमेव समग्रं वृत्तं भवति। तत्र व्यासः प्रकृतिव्यासार्धं १५।१ अस्य वर्गः २२९ "व्यासस्य वर्गे भनवाग्निनिघ्ने" इत्यनेन प्रकारेण वृत्तगर्भे फलं १७९।४ इदं पूर्वेण ३९६।४ युक्तं समग्रं योनिकुण्डफलं ५७६ एवमेव द्विहस्तादौ तत्तद्व्यासवर्गभुजवर्गादिना तत्तत्क्षेत्रफलं ज्ञेयमिति। अनेनैव त्रयोदशवृत्तोक्तानां एकहस्ता-

दिग्व्यासानयनार्थं भाजकानामुत्पत्तिप्रकारोप्युक्तो भवति। तत्र हि वृत्तादिदशविधकुण्डानां प्रकृतिवृत्तव्यासान् सर्वानपि शताङ्गुलपरिमितान् कल्पयित्वा तत्रोक्तरीत्या यत्क्षेत्रफलमायाति तत्फलमेव तत्रयोदशवृत्तोक्तभाजका भवन्ति। तथाच वचनं—"वृत्तव्यासस्य १०० वर्गे १०००० भनवगुणगुणेऽ-३९२७ धीयुता ५००० से फलं ७८५४ स्याद्दोर्घ्ने दोर्व्यासकृत्योर्विवरपदमपि स्याच्चतुर्णां त्रिदोष्णां। इष्टव्यासस्य वर्गे स्वमतफलगुणे तद्विकृत्याः फलेन वष्टे लब्धस्य मूलं वलयततिरितः सर्वकुण्डप्रसिद्धिः" इति। तद्विकृतिरिति तद्विकृत्यास्तद्व्यासस्य वर्गस्येत्यर्थः। तथाहि वृत्तकुण्डेऽब्जकुण्डे च वृत्तव्यासः १०० तद्वर्गोऽयुतं १०००० तत्र तयो"र्व्यासस्य वर्गे भनवाग्निनिघ्ने" इति श्लोकोक्तरीत्या फलं ७८५४ इदमेव तयोरयुतगुणफलस्य भाजकं भवति। तदेवाब्धीष्विभाश्वैरित्यनेनोक्तं त्रयोदशवृत्ते। तत्र पद्मकुण्डप्रकृतिवृत्तान्तस्थपत्राद्बहिर्विद्यमानं फलं गलितं यच्चरमवृत्तेन संगृहीतं तदानयनेतिकर्तव्यता पूर्वमेवैकहस्तपद्मकुण्डफलानयनावसरे कथिता अत्र प्रयोजनाभावान्नोक्ता। अर्धचन्द्रे तु एकहस्तादौ द्विघ्नेष्टफलको व्यासोऽपेक्षितस्तत्साधनार्थमुक्तफलस्यार्धमेव ३९२७ तत्र भाजकं भवति। तच्च वृत्ताब्जभाजकोत्पत्त्योर्दर्शितसदृश स्यादिति भिन्नत्वेन नोपपादितं। योनौ तु तदुत्पत्तेस्त्र्यस्रपूर्वकत्वादादौ योनिकुण्डवृत्तगर्भोत्पादितत्र्यस्रफलमानीयते तत्र प्राग्वद्व्यासवर्गः १०००० अस्य चरणत्रयं दोर्वर्गः ७५०० अनयोरन्तरं २५०० अस्य मूलं ५० अत्र भुजः ८६।४।७ अनेन गुणितं मूलं ४३३१ इदं चतुर्णां दोष्णां त्रिदोष्णां फलं पूर्ववच्चतुर्थत्र्यस्रफलसंग्रहार्थं संपूर्णं ग्राह्यं न तु त्र्यस्रवत्पादहीनम्।

अथ वृत्तार्धयोः फलानयनं। तत्पूर्ववद्वृत्तार्धद्वयस्यैकमेवं समग्रं वृत्तं भवति। तत्र व्यासः पूर्वव्यासार्धं ५० अस्य वर्गः २५०० "व्यासस्य वर्गे भनवाग्निनिघ्ने" इत्यनेन प्रकारेण वृत्तगर्भे फलं १९६२।४ इदं पूर्वेण ४३३१ युक्तं समग्रं योनिकुण्डफलं ६२९३।४ तच्चायुतगुणफलस्य भाजकं इदमेव सार्धत्रिनवकररसैरित्यनेनोक्तं। त्र्यस्रेतु प्राग्वद्व्यासवर्गः १०००० अस्यांघ्रित्रयं दोर्वर्गः ७५०० अनयोरन्तरं २५०० अस्य पदं मूलं ५० अत्र भुजः ८६।४।६ अनेन गुणितं मूलं ४३३० इदं चतुर्णां त्रिदोष्णां फलं। अस्य पादः एकं त्र्यस्रफलं १०८२।२।४ अस्य त्र्यस्रस्य त्रिग्व्यस्रत्वात्त्रिगुणया वृद्धा समग्रफलं

१२४७।४ तच्चायुतगुणफलस्य भाजकं। इदमेव सार्धसप्ताब्धिदन्तैरित्युक्तं। चतुरस्रे व्यासवर्गः १०००० अस्यार्धं दोर्वर्गः ५००० अनयोरन्तरं ५००० अस्य मूलं ७०।५।५।५ एतावानेव भुजः। अतस्तेनैव तद्गुणितं ५००० इदं चतुर्णां त्रिदोष्णां फलं। अस्य पादः १२५० अस्य चतुर्गुणया वृद्ध्या समग्रं फलं ५००० तच्चायुतगुणस्य भाजकं। इदमेव खाभ्राभ्रार्थैरित्युक्तं पञ्चास्रे व्यासवर्गः १०००० तत्र दोर्वर्गः ३४५६ अनयोरन्तरं ६५४४ अस्य मूलं ८०।७।१ अत्र भुजः ५८।७।२ अनेन गुणितं मूलं ४७५५।४ इदं चतुर्णां त्रिदोष्णां फलं। अस्य पादः ११८८।६ अस्य पञ्चगुणया वृद्ध्या समग्रफलं ५९४४।२ तच्चायुतगुणस्य भाजकं। इदमेव सहांघ्रिश्रुतिकनवशैरेरित्यनेनोक्तं। षडस्रे व्यासवर्गः १०००० तत्र दोर्वर्गः २५०० अनयोरन्तरं ७५०० अस्य मूलं ८६।४।६ अत्र भुजः ५० अनेन गुणितं मूलं ४३३० इदं चतुर्णां त्रिदोष्णां फलं। अस्य पादः १०८२।४ अस्य षड्गुणया वृद्ध्या समग्रं फलं ६४९५ तच्चायुतगुणफलस्य भाजकं। एतच्च त्र्यस्रफलं द्विगुणितेनायाति। इदमेव धीनवाम्भोरसैश्चेत्युक्तं सप्तास्रे व्यासवर्गः १०००० तत्र दोर्वर्गः १८८२ अनयोरन्तरं ८११८ अस्य मूलं ९१।१ अत्र भुजः ४३।३।१ अनेन गुणितं मूलं ३९१०।५ इदं चतुर्णां त्रिदोष्णां फलं। अस्य पादः ९७७।३ अस्य सप्तगुणया वृद्ध्या समग्रफलं ६८४१ तच्चायुतगुणफलस्य भाजकं। इदमेव क्ष्मावार्धीभर्तृभिरित्यनेनोक्तं। अष्टास्रे व्यासवर्गः १०००० तत्र दोर्वर्गः १४५६ अनयोरन्तरं ८५४४ अस्य मूलं ९२।३ अत्र भुजः ३८।२।१ अनेन गुणितं मूलं ३५३५ इदं चतुर्णां त्रिदोष्णां फलं। अस्य पादः ८८३७ अस्याष्टगुणया वृद्ध्या समग्रफलं ७०७१ तच्चायुतगुणफलस्य भाजकं भवति। इदमेव भूनगगगननगैरित्यनेनोक्तमिति।

एतावत्पर्यन्तं यदुक्तं तद्दर्शयन्नुपसंहरति–वृत्तदोष्णामिति। वृत्तशब्देन वृत्तव्यासः। व्यासदोष्णामितिपाठे स एवार्थः। व्यासानां दशविधकुण्डप्रकृतिव्यासानां एकद्विहस्तादिमानभेदेन प्रत्येकं पञ्चविधानां इष्टव्यासमितैरिति वृत्तसंगृहीतत्वाद्दशविधानां वा तथा दोष्णां त्र्यस्रादिषड्विधकुण्डबाहूनां एकद्विहस्तादिमानभेदेन प्रत्येकं पञ्चविधानां इष्टव्यासमितैरिति वृत्तसंगृहीतद्वादशविधानां वा तथा दोष्णां त्र्यस्रादिषड्विधकुण्डबाहूनां एक-

द्विहस्तादिमानभेदेन प्रत्येकं पञ्चविधानां इत्यनेन प्रकारेण मितिं साङ्गोपाङ्ग-प्रमाणं नैलकण्ठिः नीलकण्ठस्यापत्यं पुमान्नैलकण्ठिः नीलकण्ठसुत इत्यर्थः । शंकरः भट्टशंकरनामा अवदत् उक्तवान् परोपकारायेति शेषः ॥ १६ ॥

श्रीमच्छंकरवारिविलासजलधौ नारायणात्मोद्भव-
श्रीदामोदरसूरिणा विरचिता लोकोपकाराय नौः ।
सच्छिद्रा यदि चास्ति कुत्रचिदियं निर्मत्सरैः पण्डितै-
रच्छिद्राम्बुधितीरलाभजननी कार्यैव तेभ्यो नमः ॥ १ ॥

शरेन्दुस्रग्धरावृत्तमुक्त्वा स्रग्धारिणो द्विजाः ।
द्विजानां भाति दुग्धाम्भोभागङ्गा इव सर्वदा ॥ २ ॥

इति श्रीहर्षोपनाम्ना नारायणसूरिसूनुना दामोदरेण कृता
कुण्डार्कटीका समाप्ता ॥

शके १७७५ फाल्गुन वद्य १४ चतुर्दश्यां वारेइत्युप-
नामकयदुपतिभट्टात्मजभटंभट्टेन लिखितमिदं पुस्तकम् ॥

मिताक्षरा—अथ पूर्वं त्र्यस्रादिभुजा उक्तास्तेषामुत्पत्तिं वृत्तार्धेनाह–स्युरिति । व्यासवर्गसकाशात् त्रिचरणाः त्रयः पादाः त्रिभुजवर्गो भवति । एवं व्यासवर्गात् द्वौ चरणौ चतुरस्रभुजवर्गो भवति । व्यासवर्गस्यैकः पादः षडस्रभुजवर्गो भवति । यथा–त्र्यस्रव्यासः ४२।१ अस्य वर्गः १७७३।५।२ अस्य पादः ४४३।३।३ अनेनोनो वर्गः १३३०।२ जातास्त्रयश्चरणाः । अस्य मूलं ३६।४ जातोऽयं त्र्यस्रभुजः । अथ चतुरस्रवृत्तव्यासः ३३।७।४ अस्य वर्गः ११५२ द्वाभ्यां भक्ते द्वौ पादौ लब्धौ ५७६ अस्य मूलं २४ जातोऽयं चतुरस्रभुजः ॥ षडस्रे व्यासः २९।६ अस्य वर्गः ८८६।५।४ अस्यैकपादः २२१।५।३ अस्य मूलं १४।७ जातोऽयं षडस्रभुजः । पञ्चास्राष्टास्रयोर्व्यासवर्गयोस्त्र्यंशसप्तमांशौ स्वसप्तविंशत्यंशचत्वारिंशदंशाभ्यां युतौ तयोर्ये मूले ते एव पञ्चास्राष्टास्रयोर्ज्ये भवतः ॥ यथा पञ्चास्रवृत्तव्यासवर्गः ९६९ अस्य त्र्यंशः ३२३ अस्य सप्तविंशत्यंशः १२ अनेन युतस्त्र्यंशः ३३५ अस्य मूलं १८।२।३ जातोऽयं पञ्चास्रभुजः ॥ अथाष्टास्रवृत्तव्यासवर्गः ८१४।४ सप्तमांशः ११६।३ चत्वारिंशदंशः ३ अनेन युक्तः सप्तमांशः ११९।३ अस्य मूलं १०।७।५ जातेयं पूर्वोक्ता या ॥ अथ सप्तास्रे

वृत्तव्यासवर्गस्य पञ्चमांशः स्वसप्तमांशेनोनः सन् सप्तास्रभुजवर्गो भवति। यथा सप्तास्रवृत्तव्यासवर्गः ८४१।७।६ पञ्चमांशः १६८।३।१ अस्य सप्तदशांशः ९।७।२ अनेनोनः पञ्चमांशः १५८।३।७ अस्य मूलं १२।५ जातोऽयं सप्तास्रभुजः॥ एवं स्वोक्तकुण्डानां ज्यामानमुक्त्वा इदानीं फलानयनप्रकारं वृत्तार्धेनाह–दोर्घ्नमिति। दोर्व्यासकृत्योः भुजवर्गव्यासवर्गयोः खमन्तरं तस्य मूलं दोर्घ्नं भुजेन गुणितं सत् चतुर्णां त्रिदोष्णां फलं भवति। चतुस्त्रिभुजानां फलं भवतीत्यर्थः। अर्थात्त्रिभुजफले कर्तव्ये उक्तवत्फलं कृत्वा पादोने कृते त्र्यस्रफलं संपूर्णं भवतीति। ननूक्तदिशा भुजवतां मानं भवतु वृत्तादीनां कथमिति चेच्छृणु। दोर्व्यासकृत्योः खपदं गर्भसूत्रं भवति। तेन भुजो गुणितश्चेच्चतुस्त्रिभुजानां फलं भवति। एवं पञ्चास्रादौ सपादादिकृते फलं भवतीति सिद्धं। अथवा गर्भसूत्रेण भुजयोगरूपपरिधिचतुर्थांशो गुणितश्चेत् सर्वकुण्डानां फलं भवतीति मूलाशयः॥ अतएव श्रीमत्तातचरणैः कुण्डार्कपद्मिन्यामयमेव प्रकारः प्रदर्शितः। नोचेच्चतुरस्रे भुजेन भुजो गुणितव्य इत्येवावोचत्। तस्मात् गर्भसूत्रेण परिधिचतुर्थांशो गुणितव्य इति सिद्धम्। वृत्ते तु व्यासस्य गर्भसूत्रस्य चैक्यात् परिधिसंख्याकबिन्दुरूपभुजयोगस्यैव परिधिरिति व्यवहारात् तस्य चतुर्थांशोपि गर्भसूत्रेण गुणितश्चेद्वृत्तफलं भवत्येव। योनिकुण्डस्य तु चतुरस्रवृत्तफलयोरन्तर्भावः फलस्य। एवं पद्मस्यापि चतुरस्राष्टास्रफलयोरन्तर्भावः फलस्येति ज्ञेयम्॥

द्विविधमपि गणितमुदाह्रियते। यथोदाहरणं वृत्तस्यैव पूर्वं प्रदर्श्यते। अथ वृत्तव्यासः २७।०।६ अस्य परिध्यानयने श्रीमत् बापूदेवकृतरीतिर्यथा—व्यासे पञ्चशराग्नि ३५५ क्षुण्णे दहनेश ११३ भाजिते परिधिरिति पञ्चशराग्निनिघ्नो व्यासः ९६१८।२।२ दहनेशभाजितः ८५।०।७।४ सूक्ष्मतरोऽयं परिधिः। अस्य चतुर्थांशः २१२।१।७ व्यासेन गुणितः ५७६।४।२।२ जातमिदं वृत्तकुण्डफलं। एवमर्धचन्द्रपरिधिः १२०।२।४ चतुर्थांशः ३०।०।५ व्यासेन गुणितः ११५२ जातमिदं सर्ववृत्तफलं। अस्यार्धमर्धचन्द्रफलं ५७६॥ अथ योनिकुण्डव्यासवर्गः ९१५।१।७ अस्य पादः २२८।६।३।६ अनेनोनो वर्गः ६८६।३।३।२ अयमेवास्य वृत्तस्य त्रिभुजभुजवर्गः वर्गयोरन्तरं २२८।६।३।२ मूलं १५।१।१।५ भुजवर्गमूलं २६।१।५।४ अनेन वर्गान्तरमूलं गुणितं ३९७।०।७ जातमिदं योनिकुण्डग-

तच्चतुरस्रफलं ॥ अथ वृत्तार्धद्वयफलं । तत्र वृत्तव्यासार्धं वलयार्धव्यासः १५।१ उक्तरीत्या परिधिः ४७।४।१ अस्य चतुर्थांशः ११।७ वलयार्धव्यासेन गुणितः १७९।५ इदं पूर्वफले युक्तं ५७६।५।७ जातं पूर्णफलं योनिकुण्डस्य । अथवा गर्भसूत्रं १५।१।१।५ योनिकुण्डगतत्रिभुजानां योगः ७८।६ अस्य चतुर्थभागः १९।५।४ गर्भसूत्रेण गुणितः २९७।६ योनिकुण्डगर्भत्रिभुजानां योगः ७८।६ अस्य चतुर्थभागः १९।५।४ गर्भसूत्रेण गुणितः २९७।६ इदं योनिकुण्डगतत्र्यस्रफलं । अत्र त्र्यस्रचतुष्टयसत्वात् स्वत्र्यंशेन ९९।२ युक्तं ३९७ वृत्तफलं प्राग्वत् । १७९।५ पूर्वफले युक्तं ५७६।५।४ जातं फलं ॥ अथवा योनिकुण्डव्यासः ३०।२ भुजः २६।१।५।४ दलं १३।०।६।६ व्यासेन गुणितं ३९६।३।४ वृत्तार्धद्वयफलं प्राग्वत् १७९।५ द्वयोर्योगः ५७६। ०।४ अथ वृत्तेऽब्जेऽब्धीष्विभाश्वैरित्यादिना त्र्यस्रव्यासवर्गः १७७३।५।३ भुज-वर्गः १३३०।२ अनयोरन्तरं ४४३।३।२ अस्य मूलं २१।०।५ भुजेन गुणितं ७६९।२।६ इदं चतुश्चतुर्भुजानां फलं । अतोऽस्य पादः १९२।३ अनेनोनं फलं ५७६।७।६ जातं त्रिकोणकुण्डफलं । स्वल्पान्तरत्वाददोषः ॥ अथवा गर्भ सूत्रं २१।१।५ त्रिभुजानां योगः १०९।४ चतुर्थांशः २७।३ गर्भसूत्रेण गुणित ५७६।०।१ जातं फलं ॥ अथवा व्यासः ४३।१ अस्य चतुर्थांशः १०।४।२ अनेनोनो व्यासः ३१।४।६ अयमेव त्रिभुजलंबः । अथ ज्यार्धं १८।२ इदं भूम्यर्धं लम्बगुणं भूम्यर्धं मितिफलं ५७६।४।५ अथवा त्र्यस्रव्यासवर्गः १७७४।४।१ भुजवर्गः १३३२।२ वर्गयोरन्तरं ४४२।२।१ मूलं २१।०।३।२ भुजगुणितं ७६८।२।६।५ अस्य पादः १९२।०।५।५ अनेनोनं भुजगुणितफलं ५७६।२।१ जातं त्र्यस्रफलं ॥ अथ चतुरस्रे व्यासवर्गः ११५२ भुजवर्गः ५७६ अंतरं ५७६ मूलं २४ एतत्समभुजेन गुणितं ५७६ जातं चतुरस्रफलं ॥ अथवा गर्भसूत्रं २४ भुजयोगः ९६ पादः २४ गर्भसूत्रघ्नः ५७६ जातं फलं ॥ अथवा समश्रुतौ तुल्यचतुर्भुजे तद्भुजकोटिघात इत्यादिना भुजः २४ कोटिः २४ घातः ५७६ ॥ अथ पञ्चास्रे पादद्व्यां वृत्तदोष्णामिति । पूर्वं चतुर्णां त्रिदोष्णां फलं भवतीत्युक्तं । ततोऽग्रे पञ्चास्रस्य पञ्चत्रिभुजयोग-त्वात् स्वपादेन युक्तं कार्यमिति सुवचं । तेन पञ्चास्रे एकपादयोगः । षडस्रे द्विपादयोगः । सप्तास्रे त्रिपादयोगः । अष्टास्रे चतुष्पादयोगः कार्यं इति भावार्थः ।

यथोदाहरणं–पञ्चास्रव्यासवर्गः ९६९ भुजवर्गः ३३५ अनयोरन्तरं ६३४ मूलं २५।१।४ भुजगुणितं ४६१।२।६ जातमिदं चतुस्त्रिभुजफलं । अस्य पादः ११५।१।६ पूर्वफले युक्तः ५७६।४।४ जातं पंचास्रफलं ॥ अथवा गर्भसूत्रं २५।१।४ भुजयोगः ९१।४।४ पादः २२।७।१ गर्भसूत्रघ्नः ५७६।४।४ जातं फलं ॥ अथवा पञ्चास्रे व्यासः ३११ दलं १५।४।४ वर्गः २४२।१।४ ज्या १८।२।३ दलं ९।१।१।४ वर्गः ८३।५।४ वर्गयोरन्तरं १५८।४ मूलं १२।४।६ लम्बोऽयं । अनेन ज्यार्धं गुणितं ११५।१।५।५ पञ्चगुणं ५७६। ०।४॥ अथ षडस्रव्यासवर्गः ८८६।५।४ भुजवर्गः २२१।५।३ अन्तरं ६६५।ा४१ मूलं २५।६।२।३ दोर्घ्नं ३८४ अस्यार्धं १९२ दोर्घ्नफले युक्तं ५७६ जातं फलं षडस्रस्य ॥ अथवा गर्भसूत्रं २५।६।२।३ भुजयोगः ८९।२।६ पादः २२।२।ा।४ गर्भसूत्रघ्नः ५७६ ॥ अथवा षडस्रव्यासः २९।६ दलं १४।७ वर्गः २२१।२।१ ज्या १४।७ दलं ७।३।४ वर्गः ५५।२।४ अन्तरं १६५।७।५ मूलं १२।७।१ जातोऽयं लम्बः । लम्बगुणं ज्यार्धं ९६ षड्गुणं ५७६ जातं फलं ॥ अथ सप्तास्रव्यासवर्गः ८४१।७।६ भुजवर्गः १५८।३।७ अन्तरं ६८३।३।७ मूलं २६।१।२ दोर्घ्नं ३३९।२ अस्य पादः ८२।४।४ त्रिगुणः २४७।५।४ दोर्घ्नफले युक्तः ५७६।७।४ जातं सप्तास्रफलं ॥ अथवा गर्भसूत्रं २६।१।२ भुजयोगः ८८।३ पादः २२।०।६ गर्भसूत्रघ्नः ५७६।७।१ अथवा सप्तास्र-व्यासः २९ दलं १४।४ वर्गः २१०।२ ज्या १२।५ दलं ६।२।४ वर्गः ३९।६।६ वर्गयोरन्तरं १७०।३।२ मूलं १३।०।५ अयं लम्बः । लम्बगुणं ज्यार्धं ८२।४ सप्तगुणं ५७६।६।५ ॥ अथाष्टास्रव्यासवर्गः ८१४।४ भुजवर्गः ११९।३ अन्तरं ६९५।१।६ मूलं २६।३ अष्टास्त्रिभुजेन गुणितं २८८।७।१ अस्य पादः ७२।१।६।२ चतुर्गुणः २८८।७।१ दोर्घ्नफले युक्तं ५७६।६।२ ॥ अथवा दोर्घ्नफलं द्विगुणं जातं तदेव ५७६।६ फलं जातं संपूर्णमष्टास्रस्य । अथवा गर्भसूत्रं २६।३ भुजयोगः ८७।५ पादः २१।७।२ गर्भसूत्रघ्नः ५७६। ६।४।०।२ जातं फलं ॥ अथवा अष्टास्रव्यासः २८।४ दलं १४।२ वर्गः २०३।४ ज्या १०।७।५ दलं ५।३।६ वर्गः ३० अन्तरं १७३।०।४ मूलं १३। १।३ अयं लम्बः अनेन गुणितं ज्यार्धं ७२।१।१ अष्टगुणं ५७६।१ ॥

अथ पद्मकुण्डफलं—तत्र चतुर्थवृत्तव्यासः २४ वर्गः ५७६ अस्य सप्त-मांशः ८२।२।२ अस्य चत्वारिंशदंशः २।०।३ अनेन युक्तः सप्तमांशः ८४।२।५

अस्य मूलं ९।१।५ दोर्घ्नं ८४।२।५ द्विगुणं १६८।५।२ अथ व्यासवर्गः ५७६ ज्यावर्गः ८४।२।५ अन्तरं ४९१।५ मूलं २२।१।४ ज्यया गुणितं २०४।१।४ द्विगुणं ४०८।३ द्विगुणयोर्योगः ५७६।०।२ अथ पञ्चव्यासः ३१।२ वर्गः ७६।४।४ अस्यार्धं ४८८।२।२ जातमिदमेकसमचतुरस्रफलं । अस्मादन्तरमष्टास्रिफलमूनं कृतंचेत् द्वितीयं समचतुरस्रस्थबहिश्चतुष्कोणानां फलमवशिष्यते तदेव पूर्वसमचतुरस्रफले युक्तं सत् संपूर्णफलं भवतीति ॥ द्वात्रिंशद्धनुषां मध्ये तु षोडशानां धनत्वात् षोडशानामृणत्वाच्च फलकरणायासो वृथैवेति सुधियो विदांकुर्वन्तु ॥ अथोदाहरणम्—चतुर्थवृत्तव्यासः २४ अथाष्टास्रिज्या सूक्ष्मा ९ व्यासवर्गः ५७६ ज्यावर्गः ८१ द्वयोरन्तरं ४९५ मूलं २२।२ सूक्ष्मया अष्टास्रिज्यया गुणितं २००।२ द्विगुणं ४००।४ पूर्वसमचतुरस्रा ...दूने शेषं ८७।६।२ पुनस्तस्मिन्नेव चतुरस्रफले युक्तं जातं ५७६।०।४ ॥ अथ ...गर्भसूत्रं २२।२ भुजयोगः ७२ अस्य चतुर्थांशः १८ गर्भसूत्रेण गुणितः ...०।४ जातं मध्याष्टास्रफलं ॥ चतुर्भुजफलं प्राग्वत् ४८८।२।२ अस्मादष्टास्रिफलमूने शेषं ८७।६।२ पूर्वचतुरस्रफले युक्तं ५७६।०।४ ॥ अथ प्रकारान्तरेणापि प्रसङ्गादुदाह्रियते—तत्र चतुर्थवृत्तव्यासवर्गः ५७६ अस्य सप्तमांशः ८२।२ अस्य चत्वारिंशदंशः २।०।३।५ अनेन युक्तः सप्तमांशः ८४।२।५।५ मूलं ९।१।६ स्थूलेयमष्टास्रिज्या अस्या दलं ४।४।७ अस्य वर्गः २१।२ व्यासार्धं १२ वर्गः १४४ अनयोरन्तरं १२२।६ मूलं ११।१ अयमेवान्तर्लम्बः । अनेनावधिव्यासार्धं १५।५ ऊनं ४।४ अयं वहिर्लम्बः । ज्यार्धमेव भूम्यर्धं ४।४।७ वहिर्लम्बेन गुणितं २०।६ अष्टगुणं १६६ एवमन्तर्लम्बेनाप्युक्तभूम्यर्धं गुणितं ५१।२।२ अष्टगुणं ४१० अष्टगुणयोर्योगः ५५६ एवं जातानि सर्वेषां कुण्डानां फलानि ॥ अथोपसंहरन्नाह—इति सितिमवदच्छंकरो नैलकण्ठिरिति । इत्येवंप्रकारेण नीलकण्ठस्यापत्यं भट्टशंकरनामा मितिं मानं फलमितियावत्। अवदत् उक्तवानित्यर्थः । इति सर्वं शिवं ॥ १५ ॥

जड्योपाभिधकृष्णदीक्षितपुत्रेण रामचन्द्रेण ।
टीका मिताक्षराख्या रचिता शोध्या विचार्य तज्ज्ञैः सा ॥ १ ॥
सप्ताष्टवसुभू १८८७ शाके पौषासितरवौ दिने ।
काश्यां समाप्ता सप्तम्यां विश्वेशकृपया मुदा ॥ २ ॥

इति श्रीविद्वन्मुकुटमाणिक्येत्यादिबिरुदावलिविराजितजड्योपाभिधकृष्णदी-

क्षितबाबूदीक्षितापरनामधेयसूरिसूनुरामचन्द्रदीक्षितनिर्मिता कुण्डार्कस्य मिताक्षरा टीका समाप्ता ॥

इयं वैदिकतिलकेत्युपाधिभिः नासिकस्थ अण्णाशास्त्रीवारेइत्येतैः मुंबासन्न-(खार) स्थले शके १८५३ वैशाखेऽलेखि ।

सुप्रभा—इदानीं तृतीयश्लोकोक्तानां भुजवत्कुण्डभुजानां साधनं तत्तत्कुण्डानां क्षेत्रफलसाधनं चाहान्तिमश्लोकेन–स्युर्वृत्तेति । वृत्तव्यासवर्गात् वृत्तव्यासवर्गसकाशात् । त्रियमकुचरणाः चरणत्रयं चरणद्वयं एकचरणश्च । तथा रामाश्वांशौ वृत्तव्यासवर्गत्र्यंशो वृत्तव्यासवर्गसप्तांशश्च तौ क्रमात् भांशेन स्वसप्तविंशांशेन खाब्ध्यंशेन स्वचत्वारिंशत्तमांशेन युक्तौ सहितौ कृत्वा । स्वसप्तविंशतितमांशेन युक्तो वृत्तव्यासवर्गत्र्यंशः स्वचत्वारिंशत्तमांशेनोपेतो वृत्तव्यासवर्गसप्तमांशः । नगकुलववियुक् स्वसप्तदशांशेन वियुग्वर्जितः शरांशो वृत्तव्यासवर्गपञ्चमांशः । त्र्यस्रतः त्र्यस्रमादिं कृत्वा नतु त्र्यस्रादिक्रमेणेति ध्येयं उपपत्तिविरोधात् । त्र्यस्रचतुरस्रषडस्रपञ्चास्राष्टास्रसप्तास्रकुण्डानां क्रमाद्बाहुवर्गा भुजवर्गा भवन्ति । यथा त्र्यस्रवृत्तव्यासः ४२।१ अस्य वर्गः १७७४।४ अस्य चरणत्रयं १३३०।७ अस्य मूलं ३६।४ इदं त्र्यस्रभुजमानं । इदमेव पूर्वं तृतीयश्लोके "रसत्रिसदलं" इत्यनेन दर्शितं ॥ चतुरस्रवृत्तव्यासः ३३।७४ अस्य वर्गः ११५२ अस्य चरणद्वयं ५७६ अस्य मूलं २४ इदं चतुरस्रभुजमानं । इदमेव पूर्वं "सिद्धाः" इत्यनेन दर्शितं । षडस्रव्यासः २९।६ अस्य वर्गः ८८६ अस्यैकश्चरणः २२१।४ अस्य मूलं १४।७ इदं षडस्रभुजमानं । इदमेवपूर्वं "दलं" इत्यनेन दर्शितं । पञ्चास्रवृत्तव्यासः ३१।२ अस्य वर्गः ९६९ अस्य त्र्यंशः ३२३ अस्य सप्तविंशांशः १२ अनेन युक्तस्त्र्यंशः ३३५ अस्य मूलं १८।२।३ इदमेव पञ्चास्रभुजमानं । इदमेव पूर्वं "अधिपादधृतयः" इत्यनेन दर्शितं । अष्टास्रवृत्तव्यासः २८।४ अस्य वर्गः ८१२ अस्य सप्तमांशः ११६।३ अस्य चत्वारिंशत्तमांशः ३ अनेन युक्तः सप्तमांशः ११९।३ अस्य मूलं १०।७।५ इदमष्टास्रभुजस्य मानं । इदमेव पूर्वं "निस्त्रियूकाः शिवाः" इत्यनेन दर्शितं । सप्तास्रवृत्तव्यासः २९ अस्य वर्गः ८४१।७ अस्य पञ्चमांशः १६८।३ अस्य सप्तदशांशः ९।७।१ अनेन वर्जितः पञ्चमांशः १५८।३।६ अस्य मूलं १२।५ इदमेव सप्तास्रभुजमानं इदमेव पूर्वं "अत्रियवत्रिभूः" इत्यनेन दर्शितं । इति ।

एवं भुजमानं कथयित्वा क्षेत्रफलमाह—दोर्व्यासकृत्योः । कृतिशब्दो वर्गवचनः । दोर्वर्गो व्यासवर्गश्च तयोः खपदं खं विवरं अन्तरमित्यर्थः । तस्य पदं मूलं । दोर्घ्नं भुजेन गुणितं सत् चतुर्णां त्रिदोष्णां चतुस्त्रिभुजानां फलं क्षेत्रफलं भवति । इयमेव रीतिः सर्वेषु भुजवत्कुण्डेषु चतुस्त्रिभुजात्मकफलसाधनायोपयुक्ता । एतत्स्वस्वव्यासभुजात्साधितं चतुस्त्रिभुजात्मकं फलं पादर्ध्या पादीकृत्य स्वकोणसंख्यया गुणितं सत्स्वस्वक्षेत्रफलं भवति । कुण्डान्तर्वर्तित्र्यस्राणामुत्पत्तिप्रकारस्तु त्र्यस्रप्रभृतिषट्सु भुजवत्सु कुण्डेषु प्रागुदक्सूत्रसंधितो भुजसमसंख्याकेषु कोणेषु सूत्रप्रदानेन तत्तत्कुण्डे स्वभुजतुल्यसंख्याकानि क्रमशस्त्रिचतुःपंचषट्सप्ताष्टसंख्याकानि त्र्यस्राणि समुद्भवंतीति । यथा चतुरस्रे यथागतं पञ्चास्रे पञ्चगुणं षडस्रे षड्गुणं सप्तास्रे सप्तगुणं अष्टास्रेऽष्टगुणं कृत्वा वेदितव्यमित्यर्थः । त्र्यस्रे तु पादोनं कृत्वा वेदितव्यं । एवं वृत्ते पद्मे च योनौ तु गर्भसूत्रेण परिधिचतुर्थांशो गुणितश्चेत्क्षेत्रफलं भवति । अर्धचन्द्रे वृत्तफलेऽर्धिते सति यत्फलं तदेव भवति । यथा त्र्यस्रे व्यासवर्गः १७७४ भुजवर्गः १३३०।४ अनयोरन्तरं ४४३।४ अस्य मूलं २१।०।४ इदं भुजेन ३६।४ गुणितं ७६९ इदं चतुर्णां त्रिभुजानां फलं । अस्य पादः १९२ अनेनोनं ५७६ त्र्यस्रक्षेत्रफलं । चतुरस्रे व्यासवर्गः ११५२ भुजवर्गः ५७६ अनयोरन्तरं ५७६ अस्य मूलं २४ इदं भुजेन २४ गुणितं ५७६ इदं चतुर्णां त्रिभुजानां फलं । अस्य पादः १४४ अयं चतुर्गुणः ५७६ चतुरस्रक्षेत्रफलं । पञ्चास्रे व्यासवर्गः ९६१ भुजवर्गः ३३५ अनयोरन्तरं ६३४ अस्य मूलं २५।१।३ इदं भुजेन १८।२।३ गुणितं ४६१ त्रिभुजचतुष्कफलं । अस्य पादः ११५।२ अयं पञ्चगुणः ५७६ । पञ्चास्रे क्षेत्रफलं । षडस्रे व्यासवर्गः ८८६ भुजवर्गः १२१।४ अनयोरन्तरं ६६४।४ अस्य मूलं २५।६।३ भुजेन १४।७ गुणितं ३८४ इदं त्रिभुजचतुष्कफलं । अस्य पादः ९६ अयं षड्गुणः ५७६ षडस्रे क्षेत्रफलं । सप्तास्रे व्यासवर्गः ८४१ भुजवर्गः १५८।२।१ अनयोरन्तरं ६८२।६ अस्य मूलं २६।१ भुजेन १२।५ गुणितं ३२९।४ त्रिभुजचतुष्कफलं । अस्य पादः ८२।३ अयं सप्तगुणः ५७६ सप्तास्रे क्षेत्रफलं । अष्टास्रे व्यासवर्गः ८१२ भुजवर्गः ११९ अनयोरन्तरं ६९३ अस्य मूलं २६।२।५ इदं भुजेन १०।७।५ गुणितं २२८ इदं त्रिभुजचतुष्कफलं । अस्य पादः ७२ अयमष्टगुणः ५७६ । अष्टास्रे क्षेत्रफलं । वृत्ते पद्मे च

व्यासवर्गः २७।०।५ अस्य परिधिः ८५ । अस्य चतुर्थोऽशः २१।२ अनेन व्यासो गुणितः ५७६ अयमेवार्धितोऽर्धचन्द्रे भवति प्रकारः । योनिकुण्डव्यासस्तु त्र्यस्रपूर्वकत्वात्त्र्यस्रेण गतार्थ इति । एवं पूर्वोक्तप्रकारेण लाघवोपायेनेत्यर्थः । वृत्तदोष्णां एकहस्तादिदशहस्तान्तानां कुण्डानां प्रकृतिवृत्तानां तत्र भुजवतां भुजानां च मितिं मानं अङ्गोपाङ्गसहितं प्रमाणजातमित्यर्थः । नैलकण्ठिः नीलकण्ठस्यापत्यं पुमान्नैलकण्ठिः । पदवाक्यप्रमाणपारावारपारीणभट्टनीलकण्ठपण्डितपुत्रः शंकरः स्मार्तयाज्ञिककर्तॄणां तत्र तत्र शिवविष्णुचण्ड्यादियागे कुण्डमण्डपनिर्माणाय सुगमस्वल्पप्रयाससाध्यप्रक्रियादर्शनेन शं कल्याणं करोतीति अन्वर्थनामा महामीमांसको भट्टशंकरसूरिः अवददुक्तवान् । कुण्डार्कनामानं ग्रन्थं चकारेत्यर्थः ॥ १५ ॥

इति श्रीकुण्डार्कस्य सुप्रभानाम्नी व्याख्या चरमवर्णमलंचकार ॥

श्रीगोदातटगार्च्यनासिकवसन्माध्यन्दिनाम्नायवि-
च्छ्रौतस्मार्तविधानकौशलमतिस्त्र्यार्षेयपाराशरः ।
वारे इत्युपनामसत्कुलजनिर्जैराम[1]पौत्रः सुधीः
आत्याजीतनुजोऽस्ति वेदतिलकः श्रीश्रीमदण्णाभिधः ॥ १ ॥

श्रौतस्मार्तविधौ कुशाग्रधिषणो धर्मागमे मर्मभि-
न्मीमांसानयकोविदः श्रुतिकृती वेदार्थबद्धादरः ।
काव्ये तीर्थपदं दधद्द्विजवरः श्रीश्रीधरस्तत्सुतः
कुण्डार्के व्यतनोदिमां सुसरलां वृत्तिं नवां सुप्रभाम् ॥ २ ॥

गुणेषुवस्विन्दु १८५३ मिते शके मधौ सिते दशम्यां रविवासरे कृता ।
स्वबुद्धिवृद्ध्यै जनकांघ्रिपद्मयोः समर्प्यते वृत्तिरियं मुदा मया ॥ ३ ॥

दूरमुत्सार्य मात्सर्यं सदसद्व्यक्तिकारणाः ।
ज्ञास्तां गृह्णन्तु संशोध्य प्रार्थयामीति सादरम् ॥ ४ ॥

## इति कुण्डार्कसुप्रभा समाप्ता ।

श्रीक्षेत्रनासिकनिवासी वारे इत्युपनामधेयः श्रीमद्वैदिकतिलक अण्णाशास्त्रिसूनुः श्रीधरशर्मा ।

---

१ महाराष्ट्रभाषानुवादेन 'जयराम' इत्यस्य स्थाने जैराम इति ।

श्रीशः शरणं

# प्रथमं परिशिष्टम्

## विषमपदालंक्रियाख्यटिप्पण्या सहितः

# कुण्डमण्डपसामान्यनिर्णयः ।

नत्वा विघ्नेशपादाब्जं देशकालादिभेदतः[1] ।
मानानां[2] निर्णयं वक्ष्ये तिथावृक्षप्रयोगवत्[3] ॥ १ ॥
उक्तानि चाप्यनुक्तानि कर्तृद्रव्यादिभेदतः ।
एकसंख्योपयुक्तानि मानानि स्युः प्रधार्यताम् ॥ २ ॥

तत्रादावुक्तानुक्तस्वरूपमाह । कोटावष्टहस्तं[4] कुण्डमित्यादिवाक्यसंगृहीतान्युक्तानि । दीर्घकालकर्पूरादिवच्छीघ्रदाहद्रव्यनिमित्तकानि तत्रैव एकहस्तादीनि प्राप्तान्यनुक्तानि । अथेमानि द्विविधान्यपि क्वचिद्बृहल्लघुकालतो विरुध्यन्ते । तत्र विचारः । यथा उक्तानि क्वचित्सद्यः कूष्माण्डकोटिहोमे संख्यातः प्राप्तान्यपि द्रव्यतो न प्राप्तानि । तथा अनुक्तान्यपि संख्यातः । तत्र

---

१ अत्रादिना हवनीयद्रव्यार्त्विजां ग्रहणं ।

२ मानानां कुंडमंडपमानानामित्यर्थः ।

३ यथा जन्माष्टमीविजयादशम्योर्निर्णये तिथ्योः प्राधान्याद्रोहिणीश्रवणनक्षत्रयोगौणत्वादप्रयोजकत्वात्प्रधानतस्तिथ्यनुसारेण सतिसंभवे नक्षत्रानुसारेण च निर्णयस्तथाऽत्रापि कुंडादिमानं गौणं होमद्रव्यं प्रधानं तत्रापि कुंडादिमानं प्रधानं मंडपादिमानं गौणं । अतो विशेषतः प्रधानभूतहोमद्रव्याद्यनुसारतः सतिसंभवे मानानुसारतश्च निर्णयोऽवश्यकतर इति भावः ।

४ भविष्ये—अष्टहस्तात्मकं कुंडं कोटिहोमे तु नाधिकं ।

कथं द्रव्यं वा मानं वा प्रधानं । किमिति । अत्र कालतो व्यवस्था । सावकाशे मानं प्रधानं । निरवकाशे द्रव्यं । उक्ते मानेऽयं नियमः कठिनद्रव्यविषय इति । विपरीतमकठिने । अनुक्ते तु कालद्वयेऽपि द्रव्यमेवैकं प्रधानमिति । अत्र स्थूलसूक्ष्मद्रव्यभेदतो हरणे द्वे । कोटिहोमे चतुर्हस्तमित्यनेनोक्तं मानं संख्यातः प्राप्तमेकाहे बिल्वफलादीनां होमे कर्तव्ये सति द्रव्यसमावेशाभावात् द्रव्यतो न प्राप्तमतो द्रव्यं प्रधानं । "चतुष्करे खरे रसलोकलोकाश्विवेदनंदाङ्गुलके ९४२३३६ स्थितिस्तु ॥ कथं भवेत्कोटिमिते फलानां फलस्य चैकाङ्गुलतोऽधिकत्वादि"त्यनेनोक्तमानेऽल्पावकाशात् । अत उक्तस्यानुपयुक्तत्वेनानुक्तकल्पनास्वीकार आवश्यकः । "यदा कोटिहोमः फलैर्यः करोति तदांऽगेन्दुनेत्रांगुलै २१६ स्तदाकल्पमानं । रसांकाद्रिलोकाग्निशैलाभ्रचंद्र १०७३३७९६ प्रमाणोऽवकाशः प्रकुर्यात्सकुंड" इत्यनेन युक्तिदर्शनात् । सावकाशे माने प्रधाने यथावकाशो द्रव्यनिवेशः । "अतोऽत्र भूयःसुदिनैः प्रकुर्याद्धुतिर्यथासंभवत उक्तकुण्डे । महान्महीयं न कदाऽपि कल्प्यं स कुण्डमेतत्परमावकाश" इत्युक्तत्वात् । सावकाशपरमिदमिति । अथापरं । कोटिहोमे तु षट्करमित्यनेन संख्यातः प्राप्तमपि द्रव्यतो न प्राप्तं । विष्णुक्रांताद्यौषधीनां सूक्ष्मपुष्पादिद्रव्याणामुक्तसंख्यादशघ्नोत्तरसंख्याधिकसमावेशसंभवात् । अधिको होमो विधीयत इत्यनेन वक्ष्यमाणेनाधिकत्वे नियमात् । एतन्मानानुरूपं यत्तुलसीमंजर्यादिद्रव्यसमं समावेशयोग्यमन्यत् द्रव्यं वा तद्विषयत्वाच्च । अतः पूर्वोक्तमनुक्तमानं प्रकल्प्य तत्रैव होम इति । तत्र विशेषः । उक्ते स्वमानातिरिक्तहोमो

---

१ स्कांदे–कोटिहोमे चतुर्हस्तं चतुरस्रं समंततः ।

२ खरे कुण्डेइत्यर्थः ।

३ भूयांसि च सुदिनानि तैः भूयःसुदिनैरिति कर्मधारयः ।

४ अत्र "अष्टकरं" इति पाठो युक्तः स्यात् । कोटिहोमे षट्करकुण्डस्य कुत्राप्यनुपलम्भात् । षट्करमिति पाठः प्रामादिकः ।

५ पंकजोत्पलबिल्वादिहोमद्रव्यं शुभावहं । इति शांतिकमलाकरे । अत्रादिनैषां द्रव्याणां ग्रहणं ।

न बाधकः । अधिको होमो विधीयत इति वक्ष्यमाणात् । सोऽपि स्वद-शङ्गोत्तरमानादेव । स्वकालादुत्तरो गौणः कालः स्यात्पूर्वकर्मण इति न्यायेन। स्वमानादुत्तरमानपर्यन्तमेवोचितत्वात् । सोऽप्याकंठएव । "भोक्तुर्भुक्तिः कंठ-तोऽधः सुखाय चोर्ध्वं तस्मात्सैव दुःखं प्रयच्छेत् । हौम्यं तद्वत्कण्ठतोऽधः सुखाय तस्मादूर्ध्वं दुःखदं स्यात्प्रवन्हे"रित्यनेन कण्ठोर्ध्वं हविरागमनस्य निषि-द्धत्वात् । अनुक्ते स्वमानत एव होमः। नाधिकः शस्यते क्वचिदिति वक्ष्यमा-णात्। ननूक्ते सत्यनुक्तकल्पनाया अन्याय्यत्वात् । कथमनुक्ते होम इति चेन्न 'न्यूनसंख्योदिते कुण्डेऽधिको होमो विधीयते । अनुक्तकुण्डे होमस्तु नाधिकः शस्यते क्वचिदि"ति कुण्डरत्नाकरधृतमंत्रग्रंथवाक्यात् । उक्ता-नामनेकविधनिमित्तानुरूपत्वाभावाच्चेति । अतोऽनुक्तकल्पनाऽन्याय्येति । **अथ संपातः** । "खबाण ५० होमे क्षितिनेत्र २१ एको गुणैर्युतोऽहींदु-१८।३ रथाद्रिभूपाः १६।७ ॥ भवेत्तृतीयो वसु ८ पर्वकोऽब्ध्यक्षिवेद २२ कोऽस्यावनिद्विहस्तौ । प्राज्यं प्रमाणं लघुसंख्यकायामप्राज्यमेवं क्व च पुष्कलायां । द्रव्यानुसारेण[2] प्रगृह्यमाणं मानं प्रमाणं त्ववकाशतोऽस्ति । स्यादेवमेवं खखचंद्र १०० होमे ह्याकोटिहोमेऽपि तथैव स स्यात् । अपेक्षि-तोऽत्राथ विनिर्णयोऽतः सूत्रानुसारेण मया प्रदिष्ट" इति । **अथ ग्राह्या-ग्राह्यविवेकः** । एकस्यामनेकपाते[3] सत्यर्थानुरूपं ग्राह्यं । अविरुद्धतोऽपि प्रमाणावश्यकता । अर्थप्रमाणयोर्विरोधे प्रमाणबाधः । अर्थबाधो मा

---

१ यथा दिवाकर्मणां रात्रेराद्ययामो गौणकालः । "रात्रौ प्रहरपर्यन्तं दिवाकर्माणि कारयेदि"ति तद्वदित्यर्थः ।

२ क्वचिदल्पसंख्यहोमे हविर्द्रव्यस्य स्थूलत्वमन्ददाहित्वक्लिन्नत्वाद्यनुसारेण होमाधिकरणकाग्न्यायतनमधिकप्रमाणं । क्वचिद्बहुसंख्यहोमे द्रव्यस्य सूक्ष्मत्वशीघ्र-दाहित्वशुष्कत्वाद्यनुसारेण होमाधिकरणकमग्न्यायतनं न्यूनप्रमाणं भवतीति भावः ।

३ एकस्यां होमसंख्यायां अनेकेषां कुंडप्रमाणानां युगपत्सन्निपाते प्रयोजनव-शान्निर्णयः । यथा कोटिहोमेऽष्टहस्तदशहस्तषोडशहस्तप्रमाणानां युगपत्प्राप्तिः । तत्र द्रव्यस्य सूक्ष्मतरत्वे क्षिप्रतरदाहित्वे चाष्टकरं कुंडं । सूक्ष्मत्वे शीघ्रदाहित्वे च दशहस्तं कुंडं । स्थूलत्वे मंददाहित्वे च षोडशकरं कुण्डं गृह्यते । इति ।

भूविति निष्कर्षः। अर्थात्परिमाणमिति कात्यायनसूत्रात्। अर्थद्रव्ययोर्विरोधेऽर्थो बलीयान्। अर्थः प्रयोजनं। द्रव्यात्प्रयोजनं विरोधे बलवत्। यथा खादिरयूपस्य प्रयोजनं पशुबंधनं। तत्रासमर्थं खादिरं परित्यज्याखादिरमपि प्रयोजनसमर्थं नियुंज्यात्। न द्रव्यादर इत्यापस्तंबसूत्रे कपर्दिव्याख्यानाच्च। अन्यदपि। "हुताहुतप्रहुतदाहभेदैर्हव्यैः सुकुण्डं परिकल्पनीयम्। प्रमाणरोधे निगमाज्ञया स्यात्स्फुटेरणाऽर्थात्परिमाणसूत्रे" इत्येव सर्वेषां ग्रंथकाराणामभिप्रायदर्शनादिति। अथोक्तानामनुक्तानां चोत्पत्तिर्दर्श्यते। तत्र सूक्ष्मप्रभवानि स्थूलानि। द्रव्यानुरूपा वृद्धेः स्थूलता। सा यथा "क्षेत्रस्यैककरस्य चाष्टयुगलक्ष्मागाश्च स्वैः स्वैर्युताः पादैर्भ्यं १ श्वि २ गुणै ३ स्तथैककरतो यावन्नृपाः १६ पाणयः। तेषां सुष्ठु पदानि तत्प्रमितया पर्वाणि मानान्यपि स्युः संतः सुधियाऽवधार्य मतिमानुक्तार्थवद्योजिताः" इति। एवमग्रेऽपि। यथा द्रव्यसमावेशाच्चानवस्थाप्रसंगः स्यात्। अन्यदपि। स्थूलप्रभवाणि सूक्ष्माणि। यथा "प्रशोधकस्यैकलवोऽष्टमः ८ स्याद्विशोध्यकः ११५२ सोऽत्र विशोधिते स्यात्। ९२१६ फलं लभेच्छक्रकरं ८०६४ तदेकं प्रशोधके षोडशहस्तसंज्ञं ९२१६ ॥ १ ॥ शुद्धा च शुद्धौ च फलोद्भवः स्यात्तन्मूलमानानि च पूर्णलाभात्। स्युर्भानु १२ पंक्त्या १० दिकराणि यावद्धस्तात्परोऽप्येवमेवं विधिः स्यात् ॥ २ ॥ तद्धस्तभूमेः ५७६ खलवोऽष्टमः ७२ स्यात्क्षेत्रे ५७६ प्रशोध्यः फलमूलमेव। एवं च मानानि पुनः पुनः स्युः पर्वात्मकानि प्रमनोहराणि ॥ ३ ॥ स्याद्वेदहस्ताद्वसुहस्तकान्तं पंचां ५ ग ६ शैल ७ प्रकरप्रमाणात्। वृद्धिस्त्वियं ग्रंथकर्तृप्रगृह्या भूयस्त्वतोऽनोऽधुनिकैः स्वीकार्या ॥ ४ ॥ वृद्धिस्तु पादैर्लिखिताऽत्र बुध्या सोदाहृतिः स्यात्तनु निश्चिता या। द्रव्यस्थितिः स्यात्सु यथाऽभिवृद्ध्या ग्राह्याऽत्र सैव प्रविलोक्य कुण्डे ॥ ५ ॥ न्यूनाधिका या भवतीह भागात्तुरीयकात्सा सुधियाऽत्र योज्या ॥ उक्तेष्वनुक्तेषु महीभृतेभ्यः पूर्वापरेष्वेव तथा करेभ्यः ॥ ६ ॥ अत्यतिह्रस्वात्समयात्प्रदीर्घाद्धौम्यं हुतं स्यात्समयेन येन ॥ तस्यानुमानेन सुकल्प्यमानं प्राज्येऽधिकः स्यात्तु तनौ तनुः स्यात् ॥ ७ ॥ इति ॥ ॐ ॥

---

१ यत्र यस्य यदर्थत्वं तत्र तस्य प्राधान्यमितरस्य गौणत्वमिति न्यायात्। कुण्डप्रमाणस्य हविर्द्रव्यसमावेशानुसारत एव विनिर्णयः।

## प्रथमं कोष्ठकम् ।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १।८ | १।४ | १।२ | १।१ | २।२ | ४।४ | ८।८ | १६।१६ |
| ७२ | १४४ | २८८ | ५७६ | ११५२ | २३०४ | ४६०८ | ९२१६ |
| ८।४ | १२ | १६।७ | २४ | ३३।७।४ | ४८ | ६७।७ | ९६ |
| १।८ | १।४ | १।२ | १।१ | २॥ | ५ | १० | २० |
| ९० | १८१ | ३६० | ७२० | १४४० | २८८० | ५७६० | ११५२० |
| ९।४ | १३।३।३ | १८।७ | २६।५।५ | ३७।७।४ | ५३।५।२ | ०।५।७।१ | १०७।२।५ |
| १॥८ | १॥४ | १॥२ | १॥१ | ३ | ६ | १२ | २४ |
| १०८ | २१६ | ४३२ | ८६४ | १७२८ | ३४५६ | ६९१२ | १३८२४ |
| १०।३।२।१ | १४।५।४ | २०।६।२ | २९।३।१ | ४१।४।४ | ५८।१।६।२ | ८३।१।१।१ | ११७।४।४ |
| १॥।४ | १॥।४ | १॥।२ | १॥।१ | ३॥ | ७ | १४ | २८ |
| १२९ | २५२ | ५०४ | १००८ | २०१६ | ४०३२ | ८०६४ | १५१३८ |
| ११।२ | १९।७ | २२।३।५ | ३१।६ | ४४।७।१ | ६३।४ | ८९।०।६ | १२२।७।७ |

## द्वितीयं कोष्ठकम् ।

| ५० | शतं | सहस्रं | लक्षं | दशलक्षं | कोटिः | दशकोटिः | कोटिः | दशलक्षं | लक्षं | अयुतं | लक्षं | सहस्रं | शतं | ५० | श्रीच |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ८ | १२ | १६ | १८ | २० | २२ | १ | २ | ४ | ६ | ८ | १० | १२ | १४ | १६ | ५० |
| १२ | १६ | १८ | २० | २२ | १ | २ | ४ | ६ | ८ | १० | १२ | १४ | १६ | ८ | शतं |
| १६ | १८ | २० | २२ | १ | २ | ४ | ६ | ८ | १० | १२ | १४ | १६ | ८ | १२ | सहस्रं |
| १८ | २० | २२ | १ | २ | ४ | ६ | ८ | १० | १२ | १४ | १६ | ८ | १२ | १६ | अयुतं |
| २० | २२ | १ | २ | ४ | ६ | ८ | १० | १२ | १४ | १६ | ८ | १२ | १६ | १८ | लक्षं |
| २२ | १ | २ | ४ | ६ | ८ | १० | १२ | १४ | १४ | ८ | १२ | १६ | १८ | २० | दशलक्षं |
| १ | २ | ४ | ६ | ८ | १० | १२ | १४ | १६ | ८ | १२ | १६ | १८ | २० | २२ | कोटिः |
| २ | ४ | ६ | ८ | १० | १२ | १४ | १६ | ८ | १२ | १६ | १८ | २० | २२ | १ | दशकोटिः |
| ४ | ६ | ८ | १० | १२ | १४ | १६ | ८ | १२ | १६ | १८ | २० | २२ | १ | २ | कोटिः |
| ६ | ८ | १० | १२ | १४ | १६ | ८ | १२ | १६ | १८ | २० | २२ | १ | २ | ४ | दशलक्षं |
| ८ | १० | १२ | १४ | १६ | ८ | १२ | १६ | १८ | २० | २२ | १ | २ | ४ | ६ | लक्षं |
| १० | १२ | १४ | १६ | ८ | १२ | १६ | १८ | २० | २२ | १ | २ | ४ | ६ | ८ | अयुतं |
| १२ | १४ | १६ | ८ | १२ | १६ | १८ | २० | २२ | १ | २ | ४ | ६ | ८ | १० | सहस्रं |
| १४ | १६ | ८ | १२ | १६ | १८ | २० | २२ | १ | २ | ४ | ६ | ८ | १० | १२ | शतं |
| १६ | ८ | १२ | १६ | १८ | २० | २२ | १ | २ | ४ | ६ | ८ | १० | १२ | १४ | ५० |

निष्कर्षस्तु कालवशेन सर्वाणि मानानि संख्योपयुक्तानि ॥ इति ॥ ननु पंचाशद्धोमे षोडशकरं मानं कथमुपयुक्तमितिचेन्न ॥ भिषक्प्रत्याख्यानवृद्ध-वैधमरणे शरीराहुतौ षोडशकरमुपयुक्तं भवति । पंचाशत्सु किमु वक्तव्य-मिति ॥ अन्यमानेनानिर्वाहादतिकठिनाऽतिस्थूलद्रव्यत्वाच्च ॥ यावानुद्बा-हुकः पुरुषस्तावदायामं तिर्यग्वितस्त्यवाऽभिहित आकाशमित्याश्वलायनेन मनुष्यप्रेतदाहे पुरुषमात्रक्षेत्रपरिग्रहाच्चेति । तथाऽऽज्यादिद्रव्यकोटिहोमेऽप्य-तिलघुमानमुपयुक्तं भवतीति । यथा "शिशुर्द्रोणचतुष्कदुग्धं क्षमः प्रपातुं बहुभिर्दिनैश्च । तथाऽणुकुंडे बहुसंख्यहोमोऽतिकालतः स्यादनुभावितव्य" इति युक्तिदर्शनात् । द्रव्यसमावेशसंभवात्कालतश्चेति । अन्यदपि । "अल्प-भुक्त्विमुपैति कष्टं तथैव बह्वशनकृन्नरोऽपि । प्रमाणभुक्त्या प्रसुखं नरस्य समानहोमेन तथैव वह्नेः ॥ १ ॥ वृद्धिर्भवेदल्पकालेन कुण्डे ह्रासोऽपि दीर्घेण तथैव सम्यक् ॥ कालानुरूपं प्रकुर्यात्सुकुण्डं कर्तुर्भयं वैपरीत्ये कृते तु ॥ २ ॥ उक्तमानानि यथोपयुक्तानि तथैव योज्यानि" इति ॥ अथ भुजास्रलक्षणं । भुजसमाः कोणास्ते अस्रा इति कथ्यंते ॥ त एव स्युर्भुजाश्चापि सरलाः कोण-संख्यकाः ॥ १ ॥

अथ मंडपमानं ॥ जयपृच्छाधिकारे ॥ अथातः संप्रवक्ष्यामि मंड-पानामतः[2] क्रमात् ॥ तत्तत्कृत्यानुसारेण यदुक्तं यज्ञकारकैः ॥ १ ॥ घनो घोषो विरामश्च कांचनः कामराजकः ॥ सुघोषो घर्घरो दक्षो गहनो नवमंडपाः ॥ २ ॥ विवाहे चतुर्भिः स्तंभैर्घनो नामेति मण्डपः ॥ स्तम्भैरेवाष्टभिर्ज्ञेयो घोषश्च ग्रहशांतिके ॥ ३ ॥ सोमयागे महारुद्रे विरामः षोडशान्वितः ॥ कांचनो विंशतिस्तम्भैर्लक्षहोमे च भोजने[3] ॥४॥ अतिरुद्रे तुलाभारे[4] मंडपः काम-

---

१ भिषजा "अचिकित्स्यव्याधिस्त्वमत एवासन्नमरणधर्मा" इत्युक्तेऽस्यधर्मशा-स्त्रविध्युक्तमरणविधिना देहमग्नावुत्स्रष्टुकामस्य वृद्धस्य पुंसो मरणे सति शरीराहु-तावित्यर्थः । एकस्यामेवाहुतौ कोट्याहुतावुक्तं षोडशहस्तं क्षेत्रं समपेक्षत इति भावः ।

२ कर्मविशेषपरत्वेन मंडपानामेताः संज्ञाः । प्रयोजनं त्वासां मंडपस्य वृद्धि-करणसमये संव्यवहारसौकर्यम् ।

३ सहस्रब्राह्मणभोजनादिविधावित्यर्थः ।

४ तुलादानादिषोडशमहादानेष्वित्यर्थः ।

राजकः ॥ चतुर्विंशतिभिःस्तम्भैर्धेनुदाने तथैवच ॥५॥ अष्टाविंशतिभिः स्तम्भैः सुघोषः प्रयुते न्यसेत् ॥ हस्तराममितस्तम्भैः सम्राजि घर्घरः स्मृतः ॥ ६ ॥ दक्षश्च कोटिहोमे च रसाब्धिस्तंभनिर्मितः ॥ गहनो दशकोट्यां च खवेदस्तंभनिर्मितः ॥ ७ ॥ विस्तारे तु यथाशोभमपरा अपि धारकाः ॥ ८ ॥ इति ॥ यावदर्थपर्याप्ता यथा विराजमाना अवेधकराः स्तम्भाः ॥ पूर्णहस्ताश्चतुर्धारा अष्टहस्तादितस्त्रिशः ॥ १ ॥ चतुर्विंशतिहस्तानां हीनमध्योत्तमाः क्रमात् ॥ यद्वा द्वादशषड्ढस्ता द्वित्रिहस्तावृतो नव ॥ २ ॥ अष्टाविंशतिहस्तान्ताः कैश्चिदुक्ता मनीषिभिः ॥ चत्वारिंशत्करो भूरि पंचाधिकेन विभ्रमः ॥ ३ ॥ पंचाशत्करविस्तारो विपुलो विपुलाश्रयः ॥ उत्तमं शतहस्तं तु तदर्धेन तु मध्यमं ॥४॥ अधमं तु तदर्धेन शक्तिकालाद्यपेक्षया ॥ अर्थानुरूपा वृद्धिः स्यादग्रे कात्यायनाशयात् ॥ ५ ॥ इति ॥ यावदर्थपर्याप्ता क्षेत्रवृद्धिः ॥ एकाहे कालभेदेन कर्माणि स्युः पृथक् पृथक् ॥ मण्डपानां भवेद्भेदस्तत्रान्यत्रैक इष्यते ॥ ६ ॥ इति कर्मानुरूपानेकमण्डपवृद्धिः ॥ कुण्डं प्रवृध्याद्बहुक्षेत्रवृद्धिर्ह्राँसोऽप्यवृध्या भवतीह हर्म्ये ॥ ७ ॥ उच्छ्रायं[3] इष्टोत्तममंडपानामर्धेन मानेन यथोचितं स्यात् ॥ इति यथायोग्या मंडपोच्छ्रायवृद्धिरिति मंडपमानम् ॥ श्रीमन्नृसिंहात्मजेन धुंढिराजेन धीमता ॥ मानानां निर्णयः सम्यक्कृतः शिष्टेष्टतुष्टये ॥ १ ॥ इति श्रीमल्लेले इत्युपाह्व, नृसिंहसूरिसूनुधुंढिराज, दीक्षितकृतसामान्यनिर्णये माननिर्णयः समाप्तः ॥ शके १८५० चैत्र शुक्ल १५ गुरुवासर तद्दिने अवंतिकाक्षेत्रे वारे इत्युपनामधेयेन श्रीक्षेत्रजनस्थाननिवासिना वैदिकतिलकपदभृद्दण्णाशास्त्रिसूनुना काव्यतीर्थोपाधिकेन श्रीधरशर्मणा व्यलेखि विषमपदालंक्रियाख्यटिप्पण्या समलंकारि च ॥ इति शिवम् ॥ ॥ श्रीशः शरणम् ॥

---

१ दशलक्षे ।

२ यथा हविर्द्रव्यसमावेशानुसारेण कुण्डक्षेत्रवृद्धिः । तथा एकद्विहस्तादिनवपंचैककुण्डीसमावेशानुरूपा मण्डपक्षेत्रवृद्धिरप्युचितेति भावः ।

३ मंडपक्षेत्रानुरूपो मंडपोच्छ्रायोऽप्यावश्यकः ।

॥ श्रीशः शरणं ॥

# द्वितीयं परिशिष्टम्

## विषमपदालंक्रियाख्यटिप्पण्या सहितः

# सर्वकर्मसु सामान्यनिर्णयः

विनायकं तथा साम्बं प्रणिपत्य मखेश्वरम् ।
निर्णयः क्रियते सम्यक् सामान्यः सर्वकर्मसु ॥ १ ॥

तत्र यानि कानिचिद्भूयिष्ठानि कर्माणि चिरकालसाध्यान्यनियमिततद्दिनऋक्षादीनि जीवित्वास्थिरतया यमनियमासनब्रह्मचर्यादियथाऽधिकारदार्ढ्यानुपलब्ध्या च केनचित्कारणेनाशक्तया वा उक्तविधिना ब्राह्मणवृद्ध्याऽल्पकालेनापि प्रसाध्यानि । यथा कोटिलिङ्गानुष्ठानमेकेनानुष्ठितं चेद्बहुदिनसाध्यं तदेवानेकैरनुष्ठितं चेदल्पदिनसाध्यं भवति । तदुक्तं भविष्योत्तरपुराणे शांतिकमलाकरे कोटिहोमप्राधान्येन "संवरणउवाच" बहुत्वात्कर्मणो ब्रह्मन्कोटिहोमः सुदुष्करः ॥ कालेन महता चैव शक्यः कर्तुं कथंचन ॥ १ ॥ नियमा ब्रह्मचर्याद्या इत्यादि—ते यांति शक्रसदनं सुविशुद्धसत्त्वा इत्यन्तं ॥ अत्र कोटिहोमः सुदुष्करः इत्यत्र कोटिहोमपदेन तदुपलक्षणोपलक्षितं बहुकालसाध्यं कर्म ग्राह्यं । अन्यथा "यतो हि वित्तमायुश्च"[1]-त्यत्र विरोधः स्यात् । यत्र शिष्टैः कुत्रापि गुरुकालस्य ऋत्विक्समूहकल्पनया संक्षेपः कल्पितस्तत्राप्यनुपपत्तिः स्याच्चेति । शिष्टाचारस्यापि वेदप्रतिपाद्याचारतुल्यत्वं मनुनोक्तं । वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदां । आचारश्चैव शिष्टानामात्मनस्तुष्टिरेवच ॥१॥ शताननो दशमुख इत्यत्र मुखशब्देन कुण्डग्रहणं कृतमस्ति । चतुर्विधो[2] महाराज इत्यनेन चतुर्विधताऽपि

१ यतो हि वित्तमायुश्च चित्तं चैवास्थिरं सदा । अतः संक्षेपतः सर्वं धर्मकार्यं प्रशस्यते । इति ।

२ शताननो दशमुखो द्विमुखैकमुखौ तथा । चतुर्विधो महाराज कोटिहोमो विधीयते । इति ।

संगृहीता । सा अनेकविधोपलक्षणार्था । अन्यथा सूर्येन्दुग्रहे पुण्यप्रदेऽतिसूक्ष्मावसरेऽतिमहद्धोमानां शतमुखेनाप्यनुष्ठेयानां विधिप्राप्तानामसंभवात् । तस्मात्स्थूलसूक्ष्मावसरवशात्त्रैराशिकेन कुंडसंख्याह्रासवृद्धिभ्यां होममात्राणामेवानेकविधत्वं । क्वचिद्द्वित्रिशतादिमुखत्वं क्वचिच्चतुःपंचाष्टैकविंशत्यादिमुखत्वमिति । अस्याभावाज्जपाभिषेकादावनेकविधंताया अप्राप्तिः । भिन्नधर्मिणामेकस्मिन्नधिकरणे निर्विष्टे सति तत्र प्राप्ता धर्मा यथोपयोगित्वेन स्वीकुर्वन्ति ॥ यथैककरण्डस्थितयोर्हंसमयूरयोः प्राप्तानि मौक्तिकानि हंसा एव गृह्णन्ति न मयूरा इति । स्वल्पैरहोभिरित्यत्र स्वल्पशब्दो दशसंख्योपलक्षणार्थः । "इच्छावृद्धौ फले ह्रासो ह्रासे वृद्धिः प्रजायते ॥ व्यस्तं त्रैराशिकं तत्र ज्ञेयं गणितकोविदै" रित्यनेन तत्रैव फललाभात् । "यदा सोऽर्धमासेन साकं काल उपस्थित" इत्यत्र सार्धमासशब्दः पंचाशद्दिनोपलक्षणार्थः । अत्रापि तत्रैव फललाभः स्यात् । कृत्वा कुण्डशतमित्यत्र शतसंख्या विहिता सा होमानुरूपसंख्योपलक्षणार्था । अर्बुदहोमे तया निर्वाहो न स्यात् । अतस्तत्र सहस्रकुण्डानि विधेयानि । उक्तप्रमाणादधिकोनहोमे त्रैराशिकेनात्र फलं प्रकल्प्य"मिति प्रामाण्यात् । सहस्रकुण्डसमावेशनरूपोऽयं मण्डपोऽपि विधेयः । अर्थात्परिमाणमिति कात्यायनवचनात् । यत्र परिमाणविशेषो न श्रूयते तत्र सामर्थ्यात्परिमाणं भवति । यथा वसोर्धारायां अर्थात्परिमाणबाधोऽर्थबाधो माभूदित्यर्थः । नह्यङ्गुष्ठपर्ववृत्तस्रुवेन वसोर्धाराहोमः संभवति । किंतु पुष्करमात्रेण

---

१ यस्य राशौ ग्रहाः पंच षट् सप्त च सुराधिप । ग्रहणं चन्द्रसूर्यस्य ग्रहैर्वाष्टमसंस्थितैः । सूर्यस्याभ्यर्चनं कार्यं शिवस्याशुभनाशनं । लक्षहोमं महाहोमं कोटिहोमं पुरोहितम् । इत्यादि शांतिकमलाकरे ।

२ स्वल्पैरहोभिः कार्यः स्याद्दीर्घकालादिके यदा । तदा दशमुखः कार्यः कोटि· होमो महामते । इति ।

३ यदा मासेऽर्धमासे वा कार्यकाल उपस्थिते । तदा तु द्विमुखः कार्यः कोटिहोमो विचक्षणैः । इति द्वैतनिर्णये पाठभेदो वर्तते ।

४ कृत्वा कुण्डशतं दीव्यं यथोक्तं मानसंमितं ।
एकैकस्मिंस्तथाकुण्डे दशविप्रान्नियोजयेत् ॥

५ अर्बुदशब्दो दशकोटिसंख्यावचनः ।

स्रुवेणैवेति। एवमग्न्यागारादाविति । यावता परिमाणेनार्थः प्रयोजनं संभवति तावत्परिमाणं भवतीति सूत्रार्थः। नन्वग्रेऽप्यर्बुददशगुणेऽब्जहोमेऽयुतकुण्डान्येवमग्रेऽपि । मण्डपोऽपि तदनुरूप इत्यनवस्था स्यादिति चेन्न । यथाविहितं कर्म कुरुध्वमिति प्रैषाणां यावच्छ्रवणेनार्थसिद्धिर्जायते तावन्मितो मण्डपः कुण्डानि च । तदूर्ध्वं श्रवणाभावेन कर्मनिर्वाहो न स्यात् । अर्थादवस्थानं निवारितोऽनवस्थाप्रसङ्गश्चेति । होमानुरूपा यथा कुण्डवृद्धिस्तथा जपाद्यनुष्ठानानुरूपा ब्राह्मणवृद्धिः। सा शतचण्ड्यादौ तत्प्रभृत्युत्तरोत्तरा दशभिः कार्या। "शंकरस्य भवान्या वा प्रासादनिकटे शुभं ॥ मण्डपं द्वारवेद्याढ्यं कुर्यात्सध्वजतोरणं ॥ तत्र कुण्डं प्रकुर्वीत प्रतीच्यां मध्यतोऽपि वा ॥ स्नात्वा नित्यक्रियां कृत्वा वृणुयाद्दश वाडवान् ॥ मधुपर्कविधानेन पूज्य वस्त्रादिदानतः॥ भूमौ शयानाः प्रत्येकं जपेयुश्चण्डिकास्तवं ॥ प्रथमेऽहनि स्यादेकाऽवृत्तिः स्यातां द्वितीयके ॥ द्वे तृतीयेऽह्नि तिस्रः स्युश्चतस्रः स्युश्चतुर्थके॥ एवं चतुर्दिनं कृत्वा पंचमे होममाचरेत् ॥ एतद्दशगुणं कुर्याच्चण्डीसाहस्रको विधिः" इति ॥ तद्दशगुणो विधिरयुतचंड्यां तद्दशगुणो विधिर्लक्षचण्ड्यां। इति नागोजीभट्टकृतसप्तशतीटीकायां लेखदर्शनादिति चण्डीमखस्तु बहुदिनसाध्यो निषिद्धः। अतोऽयुतब्राह्मणैश्चतुर्दिनैर्लक्षचण्डी कार्या। अत्र प्रथमदशके एकावृत्तिः। द्वितीये द्वे। तृतीये तिस्रः। चतुर्थे चतस्रः। इति । "अदीर्घदिवसैः क्षिप्रं विदध्याच्चण्डिकामखं" इति क्रोडतंत्रे निषेधात्। यतो हि वित्तमायुश्चेति पूर्वलिखितभविष्याच्चेति । पंचमे होममाचरेदिति । अनेन पंचमेऽह्नि होमो विहितः। तत्र कुण्डं प्रकुर्वीतेत्यनेन कुण्डमप्येकं विहितं । लक्षचण्डीहोमोऽपि तत्र विहितः प्राप्तः। क्षिप्रं विदध्याच्चण्डिकामखमित्यनेन विलम्बोऽपि निषेधितः। यतो हि वित्तमायुश्चेत्यनेन क्षिप्रकरणे प्राशस्त्यमपि बोधितं । अत्र कथं कर्तव्यमिति विचार्यते। एकस्मिन्कुण्डे लक्षचण्डीहोमः सद्यो नैव संभवति। अतस्तस्य यदा तु स्वेच्छया यज्ञमिति पूर्वलिखितभविष्योक्तेः

---

१ यदा तु स्वेच्छया यज्ञं यजमानः समापयेत् । कालेन महता राजंस्तदा चैकमुखो भवेत् । एककुण्डस्थितो वह्निरेकचित्तैः समाहितैः। यथालाभस्थितैर्विप्रैर्ज्ञानशीलैर्विचक्षणैः। न संख्यानियमश्चात्र ब्राह्मणानां नरोत्तम । न कालनियमश्चैव स्वेच्छायज्ञः स उच्यते । आवृत्त्या कर्तुकामस्य चातुर्मास्यादिकमेवत् । सदा प्रसक्तः कर्तव्यो यज्ञोऽयं सार्वकालिकः। इति द्वैतनिर्णये भविष्योत्तरोक्तेः।

सावकाशनिषेधपरिपालनेनोक्तविधिना साङ्गामेकां शतचण्डीं समाप्यापरां विधायेत्येवं प्रकारतया भूयो भूयः सहस्रशतचण्ड्या आवृत्तिभिः सावकाशेन लक्षचण्डी समापनविषयत्वेन सद्यःपक्षेण वा व्यवस्थितत्वात् । सद्यःपक्षे तु तंत्रोक्तवाक्यैरुक्तत्रैराशिकविरुद्धब्राह्मणवृद्धिवत्कुण्डवृद्धिरपि ज्ञेया । "एतद्दशगुणः कुर्याच्चण्डीसाहस्रको विधिरित्यस्य "अर्थात्परिमाण" मिति कातीयाच्च यत्र कार्याक्षमत्वं तत्रैव तावत्पर्यन्ता वृद्धिरिति तात्पर्यात् । अन्यथा योनिमेखलारंगवल्ल्यादेरपि वृद्धिः स्यात् । नेष्टापत्तिरिति । कुण्डवृद्धिस्तु शतचण्डीदशांशपाठेषु एककुण्डमिति प्रमाणमंगीकृत्येद्दशांशपाठेषु किमिति त्रैराशिकानुपातेन लक्षचण्डी दशांशायुतपाठेषु सहस्रकुण्डानीति । अत्र कुण्डवत्प्राप्ताऽपि कालवृद्धिर्नेष्टा । अतिदीर्घतायाः निषेधात् । अयं पक्षोऽयुतब्राह्मणसाध्यश्चतुर्दिनात्मकश्चेति । तत्र दुष्कर आद्य इति । अपरस्तु । सहस्रब्राह्मणसाध्यश्चत्वारिंशद्दिनात्मकः । तत्रापि पूर्ववत्कुण्डवृद्धिः । कालवृद्धिरप्युपयुक्ता स्यात् । चतुर्णां दिनानामेकं दिनं तदा चत्वारिंशद्दिनानां किमित्यनुपातेन लक्षचण्डी दशांशायुतपाठेषु दशदिनात्मकप्राप्तहोमकालस्याविलंबकत्वात्सद्यःपक्षतो दशदिनकालस्य विलम्बत्वादतोऽत्र व्यस्तत्रैराशिकं । कुण्डानि शतसंख्यानि । अयं पक्षः सुसाध्य इति । अन्यद्यद्यदुपयुक्तं तत्सर्वं द्वैतनिर्णयादौ द्रष्टव्यं । कुण्डनिवेशस्तुलापुरुषवद्बुध्या ज्ञातव्यः । पूजाप्रधानत्वात् । सौकर्यार्थं संक्षेपतो दर्श्यते । मध्यमे नवमांशे वेदिं कृत्वा तस्याः पदान्ते समन्तादवशिष्टेषु खण्डेषु यथासम्भवानि समान्तराणि कुण्डानि । "वेदीपदान्तरं त्यक्त्वा कुण्डानि नव पंच वा ॥ एकं वा शिवकाष्ठायां प्राच्यां वा तद्गुरोः पर" मिति वाक्यात् । पदान्तशब्दस्तु यथासंभवाभिप्रायस्तत्परः "दिशासमर्थतो मध्य एव प्रकुर्यात्तु कुण्डस्थितिर्होतृकाणां सुखाय । द्विजक्लेशभीत्या प्रमाणस्य बाधोऽन्यथाऽर्थस्य बाधः कथं स्वीकृतः स्यात् ।" इति । अत्र नवादिसंख्याग्रहणं यथासम्भवसंख्योपलक्षणार्थं । "कृत्वा कुण्डशतं दिव्य" मित्यत्र विहितायाः शतसंख्याया

---

१ तुल्याम्भोदोष्णि खण्डा इह नव सुसमा मध्यमी वेदिरेषाम् । इति कुण्डार्काद्यभिप्रायेण ।

२ यथा संक्षेपतः कार्यः कोटिहोमस्तथा शृणु । कृत्वा कुण्डशतं दिव्यं यथोक्तं हस्तसंमितम् । इति ।

वाक्यान्तरकुण्डनिवेशोपलब्धित्वेनास्य सापेक्षत्वात् । तेनात्र प्रतिदिशं दश दशेत्येवं दशसु दिक्षु विनिवेश इति । दिग्विशेषेण कुण्डान्याकारतोऽनेकविधानि संति । "वेदास्रं योनिरर्धं॰ चेन्द्रदिक्तः" इत्याद्यनेककुण्डग्रंथकाराणां सामान्यलेखात् । "आग्नेयशाक्रयाम्येषु होतव्यमुद्गानने" रिति मात्स्यात् । केषांचिन्मुख्यनियमोऽप्यस्ति । दिङ्मण्डपेषु पूर्वस्याचातुर्वेद्यं कर्म सम्भवति । "बह्वृचौ पूर्वतः स्थाप्यौ दक्षिणे तु यजुर्विदौ । सामगौ पश्चिमे स्थाप्यावुत्तरेणाप्यथर्वणा" विति मात्स्यात् । अत्र बह्वृचावित्यादीनि यानि द्विवचनानि तानि "शुभास्तत्राष्टहोतार" इत्येतदन्तर्गताष्टसंख्याविभागार्थानि नतु द्विसंख्याकावेव ऋग्वेदिनावित्येतत्पराणि । तेन चतुर्दिक्षु द्वौ द्वौ होतृकावित्येवमष्टौहोतार इति । एवं द्वारजापकावपि । उक्तं यच्चातुर्वेद्यं तद्यत्र दिगवस्थितो वह्निस्तत्र वेदितव्यं । तत्रैव चतुर्वेदिनामाचार्याणां विनियोगदर्शनात् । "चतुर्भिस्तु चतुर्दिक्षु होमः कार्यो विचक्षणै" रिति कल्पतरौ भविष्ये च । चतुर्भिश्च वेदविहिताभिमुखैश्चतुर्दिक्षु पूर्वादिषु होमः कार्य इति तु प्रसिद्धमेव । "विचक्षणैर्बह्वृचौ पूर्वतः स्थाप्या" विति मात्स्यनियमादृग्यजुःसामाथर्ववेदिभिराचार्यैरिति । अथानेकदिनसाध्यकर्मणि सङ्कल्पे तिथ्याद्युल्लेखः कथमिति विचार्यते । तत्रदेवलः "मासपक्षतिथीनां च निमित्तानां च सर्वशः । उल्लेखनमकुर्वाणो न तस्य फलभाग्भवे" दिति । यथैकदिनसाध्ये कर्मण्येकस्यास्तिथेरुल्लेखस्तथाऽनेकदिनसाध्येऽनेकतिथीनामुल्लेख इति । मासपक्षतिथीनां प्रयोगाधिकरणत्वात् । यत्तु बह्वन्नसाध्ये कर्मणि प्रथमदिने संकल्पकालीनतिथ्यादिकमधिकरणत्वेनोल्लेख्यं । यत्तु "ज्योतिष्टोमेनाहं यक्ष्ये" इत्यादि संकल्पवाक्यं प्रयुंजते यायजूकाः । तत्त्वनादर्तव्यं पदानामन्वयायोगात् । यदपि केनचित्तेन तेन रूपेण प्रयोगाङ्गतया विहितानामेव मासादीनामुल्लेख इत्युच्यते । तदपि न मानाभावात् । अविहितमासादिक आधानादौ

---

१ वेदास्रं योनिरर्धं वलयमनलदोर्वृत्तमंगास्रमब्जं वस्वस्रं चेन्द्रदिक्तः प्रथमचरमयोरन्तराले युगास्रम् । इति कुण्डार्के ।

२ अष्टौ तु होतृकाः कार्या वेदवेदांगवादिन इति ।

३ अनेनैव न्यायेन चतुर्द्वारि तत्तद्वेदिनौ द्वौ द्वौ जापकौ कार्यौ । संकलनया अष्टौ जापका इत्यर्थः ।

मासपक्षतिथीनां ज्योतिष्टोम एकादशीव्रतादौ च मासपक्षयोरुल्लेखाभावप्रसङ्गाच्च । अतो ज्योतिष्टोमादावेकादश्यादिपूर्णिमान्तानामुल्लेखः । एवमन्यत्रापीति दिक् । ज्योतिष्टोमादावाथर्वणस्य सम्बन्धः कुतो न स्यादिति चेद्वर्तते तत्र परिभाषासूत्रं । "सर्वैरग्निष्टोम" इति । विग(गी)तमंत्रसाध्ये गुणगुणितसङ्कीर्तने स्तोभ[1]शब्दो रूढः । यथा यज्ञायज्ञीयं सामाग्नेयं तत्साध्यं स्तोत्रमग्निष्टोमः । इह तत्स्तोत्रान्तत्वात्क्रतोरग्निष्टोमाभिधानं । ऋग्वेदादिभिस्त्रिभिरेव वेदैः साङ्गोऽग्निष्टोमविधिः पूर्यत इत्यर्थः । ननु "स त्रिभिर्वेदैर्विधीयते" इति वचनस्य निर्मुक्तापवादस्य पारिशेष्यादग्निष्टोमविषयत्वेनावस्थितत्वान्नाथर्वणेनारम्भणमिति । उच्यते । आथर्वणप्राप्तोऽयमारम्भः । "स सर्वैराथर्वणसहितैरग्निष्टोमो विधीयते" इति । तत्र हि कृत्स्नं ब्रह्मत्वमाम्नातं । एवं तर्हि स त्रिभिरिति विरुद्धमापद्यते । अत्र ब्रूमः । त्रिष्वपि वेदेषु यद्ब्रह्म[2]त्वमाम्नातं तेनैव सकलं ब्रह्मत्वं पूर्यत एकेनाप्याथर्वणेनेति च । अनपेक्षमिति प्रतिपादयितुं स त्रिभिरित्यारब्धम् । तथा च बह्वृचश्रुतिः । "यदृचैव हौत्रं क्रियते यजुषाऽऽध्वर्यवं साम्नोद्गीथं प्रारब्धा त्रयी विद्याभवत्यथ केन ब्रह्मत्वं क्रियते इति त्रय्या विद्ययेति ब्रूया"दिति । तस्मात्सूत्रद्वयेनैवं व्यवस्थितं त्रिभिर्वेदैर्ब्रह्मत्वं क्रियते वाऽऽथर्वणेनेति ॥ इति शिवम् ॥ श्रीमन्नृसिंहात्मजेन धुंडिराजेन धीमता ॥ सामान्यो निर्णयः सम्यक्कृतः शिष्टेष्टतुष्टये ॥ इति श्रीमल्लेले इत्युपाह्वनृसिंहात्मजधुंडिराजदीक्षितकृतसामान्यनिर्णये कुण्डादिनिर्णयः समाप्तः ॥ शके १८५० चैत्र शुक्ल १५ गुरुवासरतद्दिने अवंतिकाक्षेत्रे वारे इत्युपनामधेयेन श्रीक्षेत्रजनस्थाननिवासिना वैदिकतिलकपदभृदण्णाशास्त्रिसूनुना काव्यतीर्थोपाधिकेन श्रीधरशर्मणा व्यलेखि विषमपदालंक्रियाख्यटिप्पण्या समलंकारि च ॥ इति शिवम् ॥ श्रीशः शरणम् ॥



---

१ हुम्, मा, हो, हाई, इत्येवमादयः सामावयवघटकीभूताः शब्दाः स्तोभशब्देनोच्यन्ते ।

२ ब्रह्मत्वं द्विधा ऋग्यजुःसामत्रयीप्रतिपाद्यं आथर्वणवेदप्रतिपाद्यं चेति । तत्रेदं ग्राह्यं नेदं ग्राह्यमितिनियामकाभावादिदमत्र ग्राह्यमिदमन्यत्र ग्राह्यमिति व्यवस्थितिकारणाभावादैच्छिको विकल्पोऽभ्युपेयः । इति ।

# तृतीयं परिशिष्टम् ।

गणितानभिज्ञानां कृते एकादिशतपर्यन्तायाः संख्याया वर्गो घनश्च संगृह्यतेऽत्र कोष्ठके ।

| मूलसंख्या | वर्गः | घनः |
|---|---|---|
| १ | १ | १ |
| २ | ४ | ८ |
| ३ | ९ | २७ |
| ४ | १६ | ६४ |
| ५ | २५ | १२५ |
| ६ | ३६ | २१६ |
| ७ | ४९ | ३४३ |
| ८ | ६४ | ५१२ |
| ९ | ८१ | ७२९ |
| १० | १०० | १००० |
| ११ | १२१ | १३३१ |
| १२ | १४४ | १७२८ |
| १३ | १६९ | २१९७ |
| १४ | १९६ | २७४४ |
| १५ | २२५ | ३३७५ |
| १६ | २५६ | ४०९६ |
| १७ | २८९ | ४९१३ |
| १८ | ३२४ | ५८३२ |
| १९ | ३६१ | ६८५९ |
| २० | ४०० | ८००० |
| २१ | ४४१ | ९२६१ |
| २२ | ४८४ | १०६४८ |
| २३ | ५२९ | १२१६७ |

| मूलसंख्या | वर्गः | घनः |
|---|---|---|
| २४ | ५७६ | १३८२४ |
| २५ | ६२५ | १५६२५ |
| २६ | ६७६ | १७५७६ |
| २७ | ७२९ | १९६८३ |
| २८ | ७८४ | २१९५२ |
| २९ | ८४१ | २४३८९ |
| ३० | ९०० | २७००० |
| ३१ | ९६१ | २९७९१ |
| ३२ | १०२४ | ३२७६८ |
| ३३ | १०८९ | ३५९३७ |
| ३४ | ११५६ | ३९३०४ |
| ३५ | १२२५ | ४२८७५ |
| ३६ | १२९६ | ४६६५६ |
| ३७ | १३६९ | ५०६५३ |
| ३८ | १४४४ | ५४८७२ |
| ३९ | १५२१ | ५९३१९ |
| ४० | १६०० | ६४००० |
| ४१ | १६८१ | ६८९२१ |
| ४२ | १७६४ | ७४०८८ |
| ४३ | १८४९ | ७९५०७ |
| ४४ | १९३६ | ८५१८४ |
| ४५ | २०२५ | ९११२५ |
| ४६ | २११६ | ९७३३६ |
| ४७ | २२०९ | १०३८२३ |
| ४८ | २३०४ | ११०५९२ |
| ४९ | २४०१ | ११७६४९ |
| ५० | २५०० | १२५००० |
| ५१ | २६०१ | १३२६५१ |
| ५२ | २७०४ | १४०६०८ |

| मूलसंख्या | वर्गः | घनः |
|---|---|---|
| ५३ | २८०९ | १४८८७७ |
| ५४ | २९१६ | १५७४६४ |
| ५५ | ३०२५ | १६६३७५ |
| ५६ | ३१३६ | १७५६१६ |
| ५७ | ३२४९ | १८५१९३ |
| ५८ | ३३६४ | १९५११२ |
| ५९ | ३४८१ | २०५३७९ |
| ६० | ३६०० | २१६००० |
| ६१ | ३७२१ | २२६९८१ |
| ६२ | ३८४४ | २३८३२८ |
| ६३ | ३९६९ | २५००४७ |
| ६४ | ४०९६ | २६२१४४ |
| ६५ | ४२२५ | २७४६२५ |
| ६६ | ४३५६ | २८७४९६ |
| ६७ | ४४८९ | ३००७६३ |
| ६८ | ४६२४ | ३१४४३२ |
| ६९ | ४७६१ | ३२८६०९ |
| ७० | ४९०० | ३४३००० |
| ७१ | ५०४१ | ३५७९११ |
| ७२ | ५१८४ | ३७३२४८ |
| ७३ | ५३२९ | ३८९०१७ |
| ७४ | ५४७६ | ४०५२२४ |
| ७५ | ५६२५ | ४११८७५ |
| ७६ | ५७७६ | ४३८९७६ |
| ७७ | ५९२९ | ४५६५३३ |
| ७८ | ६०८४ | ४७४५५२ |
| ७९ | ६२४१ | ४९३०३९ |
| ८० | ६४०० | ५१२००० |
| ८१ | ६५६१ | ५३१४४१ |

| मूलसंख्या | वर्गः | घनः |
|---|---|---|
| ८२ | ६७२४ | ५५१३६८ |
| ८३ | ६८८९ | ५७१७८७ |
| ८४ | ७०५६ | ५९२७०४ |
| ८५ | ७२२५ | ६१४१२५ |
| ८६ | ७३९६ | ६३६०५६ |
| ८७ | ७५६९ | ६५८५०३ |
| ८८ | ७७४४ | ६८१४७२ |
| ८९ | ७९२१ | ७०४९६९ |
| ९० | ८१०० | ७२९००० |
| ९१ | ८२८१ | ७५३५७१ |
| ९२ | ८४६४ | ७७८६८८ |
| ९३ | ८६४९ | ८०४३५७ |
| ९४ | ८८३६ | ८३०५८४ |
| ९५ | ९०२५ | ८५७३७५ |
| ९६ | ९२१६ | ८८४७३६ |
| ९७ | ९४०९ | ९१२६७३ |
| ९८ | ९६०४ | ९४११९२ |
| ९९ | ९८०१ | ९७०२९९ |
| १०० | १०००० | १०००००० |
| *...... | .................... | ..............* |

* अपूर्णमंशगतं वर्गमूलं घनमूलं सूक्ष्मधीभिः स्वयमूह्यं ।
अतिविस्तरभियाऽत्र न लिख्यते इति शिवम् ॥

श्रीशः शरणम् ।

## ॥ चतुर्थं परिशिष्टम् ॥

### कुंडमंडपक्षेत्रे प्रवेशमिच्छूनां कृते कुंडमण्डपग्रंथादिप्रदर्शकं कोष्टकम् ।

| अनुक्रमांकः | मूलतट्टीकाग्रंथानां नाम. | प्रणेतृनामादि. | प्रणयनकालः. | उपलब्धिस्थानम्. | लिखितमुद्रितादि |
|---|---|---|---|---|---|
| १ | कुण्डमण्डपदर्पणः | टापरग्रामवासी नारायण. सुतानंतभट्टः | शालि. शकः १५०० | कुंडविंशत्यां लक्ष्मीवेंकटेशप्रेस. मुंबई. | मुद्रितः |
| २ | कुण्डश्लोकप्रकाशिका | नैमिषवासी रामचंद्रः | विक्रमसंवत् १५०६ | मत्सविधे वर्तते. | लिखिता |
| ३ | कुण्डरामवाजपेयी. | ऋग्वेदवेदी रामवाजपेयी. | वि. संवत् १५०६ | ,, ,, | ,, |
| ४ | कुण्डमरीचिमाला | श्रीविष्णुभट्टः | ० | कुण्डविंशत्यां ल. वें. प्रे. मुंबई. | मुद्रिता. |
| ५ | कुण्डमण्डपसिद्धिः स्वकृता तट्टीकाच | संगमनेरस्थः श्रीविठ्ठलदीक्षितः | शालि. शकः १५४१ | मत्सविधे वर्तते. | लिखिता |
| ६ | कुण्डतत्वप्रदीपः | गौड—श्रीबलभद्रशुक्लः | शालि. शकः १५४५ | कुंडविंशत्यां ल. वें. प्रे. मुंबई | मुद्रितः |

| | | | | | |
|---|---|---|---|---|---|
| ७ | कुण्डकल्पद्रुमः सटीकः | औदीच श्रीमाधवशुक्लः तापीपुरवासी. | वि. संवत् १७१२ | मत्सविधे वर्तते | मुद्रितः |
| ८ | कुण्डमण्डपकौमुदी निवरणसहिता | शंभुदेवसुतश्रीविश्वनाथः | शालि. शकः १५१० | ,, | लिखिता |
| ९ | कुण्डमार्तण्डः | जुन्नरवासीगोविंददैवज्ञः | शा. शकः १६१३ | ,, | ,, |
| १० | कुण्डमार्तण्डटीका सुप्रभा | पल्लीपत्तनस्थोऽनंतदैवज्ञः | ० | ,, | ,, |
| ११ | कुण्डमार्तण्ड भाषांतर (मराठी) | ० | ० | ,, | ,, |
| १२ | खेटपीठमाला. | श्रीनासिकस्थ आपदेवः | शालि. शकः १६३४ | ,, | ,, |
| १३ | नवकुण्डीविधानं | ० | ० | ,, | ,, |
| १४ | कुण्डमण्डनप्रकाशिका | काशीस्थः सप्तर्षिनृहरिदैवज्ञः | ० | ,, | ,, |
| १५ | कुण्डशुद्धिः | ० | ० | ,, | ,, |
| १६ | सूक्ष्मगणितानीतकुण्डपरिमाणविचारः | ० | ० | ,, | ,, |
| १७ | कुण्डोद्योतः | काशीस्थभट्टभट्टनीलकंठः | शालि. शकः | ,, | ,, |
| १८ | कुण्डोद्योतटीकाभास्कराख्या. | भट्टभट्टनीलकण्ठसूनुः भट्टशंकरः | शालि. शकः १६६८ | ,, | ,, |

| अनुक्रमांकः | मूलतट्टीकाग्रंथानां नाम. | प्रणेतृनामादि. | प्रणयनकालः | उपलब्धिस्थानम्. | लिखितमुद्रितादि |
|---|---|---|---|---|---|
| १९ | कुण्डरत्नावली. स्वकृतमंजूषाटीकासहिता. | काशीस्थो जडे रामचंद्रदीक्षितः | शा. शकः १७९० | नीर्णयसागर प्रेस. मुंबई. | मुद्रिता |
| २० | कुण्डशुल्वकारिका. | ० | ० | कुण्डविंशत्यां. ल. वे. प्रे. मुंबई. | ,, |
| २१ | कुण्डशुल्वकारिकाटीका. | ० | ० | मत्सविधे वर्तते. | लिखिता. |
| २२ | कुण्डकारिका. | भट्टलक्ष्मीधरः | ० | कुंडविंशत्यां. ल. वें. प्रे. मुंबई. | मुद्रिता |
| २३ | कुण्डप्रदीपः | कान्हजित्सुत महादेवः | ० | ,, | ,, |
| २४ | कुण्डोदधिः | श्रीरामचंद्राचार्यः | ० | ,, | ,, |
| २५ | कुंडरत्नाकरः सटीकः | श्रीपतिसुत श्रीविश्वनाथद्विवेदी. | ० | पंजाब युनिव्हर्सिटी लायब्ररी (धर्म) नं. १७७ | लिखिता. |
| २६ | कुण्डांकुशः | गंगाधरनंदनः | ० | कुण्डविंशत्यां. ल. वें. प्रे. मुंबई. | मुद्रिता |
| २७ | कुण्डार्णवः प्राकृतः ओवीबद्धः | श्रीधरअग्निहोत्री. | ० | ,, | ,, |
| २८ | कुण्डनारदपंचरात्रं | नारदऋषिः | ० | ,, | ,, |
| २९ | कुण्डरचना | ० | ० | ,, | ,, |

| | | | | | |
|---|---|---|---|---|---|
| ३० | कुण्डपरशुरामः | परशुरामभट्टः | ० | ,, | मुद्रितः |
| ३१ | रामवाजपेयी टीका. प्राकृता. ओवीबद्धा. | ० | ० | मत्सविधे वर्तते. | लिखिता |
| ३२ | दर्शपूर्णमासविहारविचारः | ० | ० | ,, | ,, |
| ३३ | पद्मकुण्डक्रोडपत्राणि. | ० | ० | ,, | ,, |
| ३४ | कुण्डकल्पलता | पुरुषोत्तमसुतढुंढीराजः | ० | पंजाबयुनिव्हर्सिटी लायब्ररी (धर्म) नं. १५७ | ,, |
| ३५ | कुण्डमण्डपपद्धतिः | दामोदरसुत रामकृष्णदीक्षितः | ० | ,, नं. १६९ | ,, |
| ३६ | कुण्डलक्षणम् | ० | ० | ,, नं. १७८ | ,, |
| ३७ | कलांकचक्रम्. | ० | ० | मत्सविधेवर्तते. | ,, |
| ३८ | कुण्डार्कः | भट्टभट्टशंकरसूरिः | शा. शकः १६६८ | ,, | ,, |
| ३९ | कुण्डार्कमरीचिका. | रघुवीरदीक्षितः | शा. शकः १७२० पूर्व | ,, | ,, |
| ४० | कुण्डार्कदीधितिः | मौद्गल्य शिवरामोपाध्यायः | शा. शकः १७६५ | ,, | मुद्रिता |
| ४१ | कुण्डार्कपद्मिनी. | काशीस्थोजडे कृष्णदीक्षितः | शा. शकः १७७५ | ,, | ,, |
| ४२ | कुण्डार्कनौका. | हर्षोपनामा दामोदरसूरिः | शा. शकः १७७५ | ,, | लिखिता |
| ४३ | कुण्डार्कमिताक्षरा | काशीस्थो जडे रामचंद्रदीक्षितः | शा. शकः १८०७ | ,, | ,, |
| ४४ | कुण्डार्कसुप्रभा. | नासिकस्थो वारे अण्णाशास्त्रिसुतः श्रीधंरशर्मा | शालि. शकः १८५३ | ,, | ,, |

| अनुक्रमांकः | मूलतट्टीकाग्रंथानां नाम. | प्रणेतृनामादि. | प्रणयनकालः. | उपलब्धिस्थानम्. | लिखितमुद्रिता |
|---|---|---|---|---|---|
| ४५ | कुण्डार्कोदयः | करंजकरदीक्षितः | शालि. शकः १६५३ | मोगलाईप्रांत मंजरथ बाबादीक्षित करंजकर. | लिखितः |
| ४६ | कुण्डार्कटीकाचिंतामणीया | श्रीचिंतामणिदीक्षितः | ० | ० | ,, |
| ४७ | कुण्डार्कटीका पाध्येकृता | तात्याशास्त्री मोघे (पाध्ये) | ० | रत्नागिरीमंडले लांजें इत्यस्मिन्ग्रामे. | ,, |
| ४८ | कुण्डार्कोदयः | म. म. वासुदेवशास्त्री अभ्यंकर पुणें. | ० | आनन्दाश्रमप्रेस. पुणें प्रायश्चित्तेंदुशेखरेणसह. | मुद्रिता |
| ४९ | कुण्डार्कटीका सीतापतीया | श्रीसीतापतिः | ० | पंजाब युनिव्हर्सिटीलायब्ररी (धर्म) नं. १६० | लिखिता |
| ५० | सामान्यनिर्णये कर्मनिर्णयः | काशीस्थो लेले धुंढीराज दीक्षितः | ० | मत्सविधे वर्तते | ,, |
| ५१ | सामान्यनिर्णयेमाननिर्णयः | ,, | ० | ,, | ,, |
| ५२ | वेदीपद्धतिः स्वकृत सुबोधा टीकासहिता. | मयूरेश्वरोपाध्यायः (मोघे) | वि. सं. १८७९ | ,, | ,, |

१ मरीचिकादि—सुप्रभात—व्याख्याष्टकेन कर्ममाननिर्णयाभ्यां च सहितः कुण्डार्कं इदानीं "निर्णयसागर प्रेस मुंबई." इत्यत्र मुद्रणाय यन्त्रस्थो वर्तते. सत्वरं प्रकाशमेष्यति.

## श्रीशः शरणं ।

### व्याख्या षट्कसमुल्लसित-परिशिष्टादि-सहित कुण्डार्कोद्धृत प्रमाणवचनानां ( श्लोकानां )

## अकाराद्यनुक्रमेण सूची.

य.

समासेयमकाराद्यनुक्रमेण प्रमाणवाक्यसूची.

इति शिवम् ।